पूर्वाह्णे गेयं साम। ७२१ संज्ञायाम् । (२—१—४४) सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम् । वाक्येन संज्ञानवगमान्नित्यसमासोऽयम् । अरण्येतिलकाः । वनेकशेरुकाः । 'हलदन्तात्सप्तम्याः–' (सू ९६६) इत्यलुक् । ७२२ क्तेनाहोरात्रावयवाः। (२—१—४५) अह्नो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतम्, अपररात्रकृतम् । अवयवग्रहणं किम्–अह्नि दृष्टम् । ७२३ तत्र । (२—१—४६) 'तत्र' इत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत् । तत्रभुक्तम्। ७२४ क्षेपे । (२—१—४७) सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम् । 'अवतप्तेनकुलस्थितं त एतत्'। ७२५ पात्रेसमितादयश्च । (२—१—४८) एते निपात्यन्ते

हितोत्तरकाले प्रत्यर्पणीयमृणमित्यर्थः । ऋणपदस्यावश्यकोपलक्षणतायाः प्रयोजनमाह—पूर्वाह्णेगेयं सामेति। 'तत्पुरुषे कृति–' इत्यलुक् । यत्प्रत्यय एव कृत्योऽत्र विवक्षित इति भाष्यम्, तेनेह न-पूर्वाह्णे दातव्या भिक्षेति । संज्ञायाम्। सप्तमीत्यनुवर्तते, तदाह—सप्तम्यन्तं सुपा प्राग्वत् संज्ञायामिति। अरण्येतिलका इति वनेकशेरुका इति च संज्ञाशब्दौ। 'हलदन्तात् सप्तम्याः–' इत्यलुक्। क्तेनाहोरात्रावयवाः। अहोरात्रयोः अवयवा इति विग्रहः। सप्तमीत्यनुवर्तते। क्तेनेति तदन्तग्रहणम्, तदाह—अह्नो रात्रेश्चावयवा इति। अहरवयवस्योदाहरति—पूर्वाह्णकृतमिति । रात्र्यवयवस्योदाहरति—अपररात्रकृतमिति । तत्र । तत्रेति शब्दस्वरूपग्रहणम् । सप्तमीति क्तेनेति चानुवर्तते । तदाह—तत्रेत्येतत् सप्तम्यन्तं क्तेन सह प्राग्वदिति । तत्रभुक्तमिति । समासस्वरः प्रयोजनम् । तत्रभुक्तस्येदं तात्रभुक्तम् इति च। क्षेपे। सप्तमीति क्तेनेति चानुवर्तते, तदाह—सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायामिति । अवतप्तेनकुलस्थितं त एतदिति । स्थितमिति भावे क्तः । नकुलेन स्थितम्। 'कर्तृकरणे कृता बहुलम्' इति समासः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया नकुलस्थितशब्दोऽपि क्तान्तः । तेन सहावतप्ते इति सप्तम्यन्तस्य अनेन समासे कृते 'तत्पुरुषे कृति–' इत्यलुक्। हे देवदत्त, ते तव, एतद् अवस्थानम्, अवतप्ते नकुलस्थितमित्यन्वयः । यथा अवतप्तप्रदेशे नकुला न चिरं तिष्ठन्ति तथा कार्याण्युपक्रम्य तान्यनिर्वर्त्य इतस्ततो धावनमित्यर्थः । अव्यवस्थितोऽसीति निन्दा ज्ञेया। पात्रेसमितादयश्च । निपात्यन्त इति । कृतसमासादिकार्या एते शब्दा

अधि। पटु। पण्डित । कुशल । चपल। निपुण। वृत्। कृत्यैः । कृत्प्रत्ययान्तेनैव समास इष्यते। 'अल्पशः' इत्यनुवृत्तेः। बहुवचनं तु प्रकृतिभेदाभिप्रायम् । तथैवोदाहरति—मासेदेयमिति । 'तत्पुरुष कृत–' इत्यलुक् । नेह मासे दातव्यम् । नियोगोपलक्षणार्थमिति। नियोगो निर्धारणम् । आवश्यकोपलक्षणार्थमित्यर्थः। नित्यसमासोऽयमिति । अत एव 'पुरुषेपूत्तमः' इति स्वपदविग्रहोऽसंगत इत्यवोचाम। अवतप्त इति । नकुलेन स्थितं नकुलस्थितम् । 'कर्तृकरणे कृता–' इति समासः। कृद्ग्रहणपरिभाषया नकुलस्थितशब्दोऽपि क्तान्त इति तेन सह सप्तम्यन्तस्य समासः। 'तत्पुरुषे कृति–' इति सप्तम्या अलुक् । अव्यवस्थितत्वप्रतिपत्त्यात्र निन्दाव-

क्षेपे। पात्रेसमिताः। भोजनसमय एव सङ्गताः, न तु कार्ये। गेहेशूरः। गेहेनर्दी। आकृतिगणोऽयम्। चकारोऽवधारणार्थः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमाः पात्रेसमिताः। **७२६ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन।** (२—१—४९) 'विशेषणं विशेष्येण–' (सू ७३६) इति सिद्धे पूर्वनिपातनियमार्थं सूत्रम्। एकशब्दस्य 'दिक्संख्ये संज्ञायाम्' (सू ७२७) इति नियमबाधनार्थं च। पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः। एकनाथः। सर्वयाज्ञिकाः। जरन्नैयायिकाः। पुराणमीमांसकाः। नवपाठकाः।

---

निन्द्यन्त इत्यर्थः। **पात्रेसमिता इति।** इण् गतौ, सम्पूर्वाद् 'गत्यर्थाकर्मक–' इति कर्तरि क्तः। निपातनात् सप्तम्या अलुक्। भोजनपात्रे निहिते सति सङ्गता इत्यर्थः। फलितमाह—**भोजनेति। गेहेशूर इति।** गेह एव [1]प्रकटितशौर्यः, न तु युद्ध इत्यर्थः। **गेहेनर्दीति।** नर्द शब्दे, 'सुप्यजातौ–' इति णिनिः। समासे सति निपातनादलुक्। गेह एव गर्जति, युद्धादौ तु न प्रवर्तत इत्यर्थः। **चकारोऽवधारणार्थ इति।** ततश्च एते यथा गणे पठितास्तथैव भवन्तीत्यर्थः। ततः किमित्यत आह—**तेनेति।** ततश्च परमाश्च ते पात्रेसमिताश्चेत्यादौ समासो न भवति। **पूर्वकालैक।** सुबित्यनुवृत्तं बहुवचनेन विपरिणम्यते। सुपेति चानुवर्तते। पूर्वः कालो यस्य स पूर्वकालः। पूर्वकालवृत्तिरित्यर्थः। ततश्च पूर्वकालेत्यनेन पूर्वकालवृत्त्यर्थकशब्दस्य ग्रहणम्। एकादिशब्दास्तु षट् स्वरूपपरा एव। तथा च पूर्वकालादयस्सप्त सुबन्ताः समानाधिकरणेन सुबन्तेन समस्यन्ते, स तत्पुरुष इत्यर्थः। समानम् एकम् अधिकरणं वाच्यं यस्येति विग्रहः। एकार्थवृत्तित्वं सामानाधिकरण्यमिति फलितम्। **पूर्वनिपातेति।** पश्चादनुलिप्तः पूर्वं स्नातवत्, पूर्वं स्नातो वा पश्चादनुलिप्तवत् विशेष्यतां लभते। अतो 'विशेषणं विशेष्येण–' इति समासे सति अन्यतरस्य पूर्वनिपाते प्राप्ते पूर्वकालवृत्तिशब्दस्यैव पूर्वनिपातार्थमिदं वचनम्। एवमेकादीनामपीत्यर्थः। एकशब्दविषये प्रयोजनान्तरमप्याह—**एकशब्दस्येति।** 'दिक्संख्ये संज्ञायां समस्येते' इति नियमस्य वक्ष्यमाणतया एकनाथ इत्यत्र विशेषणसमासस्य बाधे प्राप्ते तत्प्रतिप्रसवार्थमप्येकग्रहणमित्यर्थः। **स्नातानुलिप्त इति।** विग्रहवाक्यवदिह पूर्वपश्चाच्छब्दाभावेऽपि स्नानानुलेपनयोः पौर्वापर्यं समासगम्यमेव। पूर्वकालं समस्यत इत्युक्ते परकालिकत्वप्रतीते। **एकनाथ इति।** एकः स्वामी नाथश्चेति विग्रहः। **सर्वयाज्ञिका इति।** यज्ञमधीयते विदन्ति वा याज्ञिकाः। 'क्रतूक्थादिसूत्रान्ताट्ठक्'। सर्वे च ते याज्ञिकाश्चेति विग्रहः। **जरन्नैयायिका इति।** जरन्तश्च

---

गम्यते। **पात्रेसमितादयश्च।** सम्पूर्वादिणः क्तः। **गेहेनर्दीति।** 'नर्द शब्दे' इत्यस्मात् 'सुप्यजातौ–' इति णिनिः। **घटकतया प्रवेशो नेति।** 'परमाः पात्रेसमिताः' इति वाक्यमेव भवति, न तु 'सन्महत्–' इत्यादिना समासान्तरमिति भावः। एतच्च शब्देन्दुशेखरे स्थितम्। अन्ये तु 'केवलाः पात्रेसमिताः' इति वाक्यमेव, न तु 'पूर्वकालैक–' इत्यादिना समासान्तरमित्याहुः। **पूर्वकालैक।** पूर्वकाल इत्यर्थ-

---

१ 'प्रकटितयशाः' इति क्वचित् पाठः।

...केवलवैयाकरणाः । ७२७ दिक्संख्ये संज्ञायाम् । (२-१-५०) 'समानाधि-करणेन' इत्यापादपरिसमाप्तेरधिकारः । संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषु-

...नैयायिकाश्चेति विग्रहः । न्यायमधीयते विदन्ति वा नैयायिकाः । पूर्ववत् ठक् । '...न य्वाभ्याम्–' इत्यैजागमो वृद्धिनिषेधश्च । 'जीर्यतेरतृन्' इति भूते अतृन् । जीर्ण-...नैयायिका इत्यर्थः । पुराणमीमांसका इति । मीमांसामधीयते मीमांसकाः । 'क्रमादिभ्यो वुन्' ... पुराणाश्च ते मीमांसकाश्चेति विग्रहः । नवपाठका इति । नवाश्चते पाठकाश्चेति विग्रहः । अत्र ...पुराणसाहचर्यान्नवशब्दो नूतनवाच्येव गृह्यते । न तु संख्याविशेषवाची । केवलवैयाकरणा इति । व्याकरणमधीयते विदन्ति वा वैयाकरणाः । 'तदधीते तद्वेद' इत्यण् । 'न य्वाभ्याम्–' इति वृद्धिनिषेध इजागमश्च । केवलाश्च ते वैयाकरणाश्चेति विग्रहः दिक्संख्ये संज्ञायाम् । ...अधिकार इति । 'पूर्वकालैक–' इति सूत्रस्थं समानाधिकरणेनेत्येतद् आपादसमाप्ते-...रनुवर्तत इत्यर्थः । ततश्च दिक्संख्ये समानाधिकरणेन सुबन्तेन समस्येते, स तत्पुरुष ...इत्यर्थः । ननु 'विशेषणं विशेष्येण–' इत्येव सिद्धे किमर्थमिदं वचनमित्यत, आह— ...संज्ञायामेवेति । न चैवं सति पञ्च गावो यस्य पञ्चगुरिति बहुव्रीहिर्न स्यात्, ...पञ्चानां गवां समाहारः पञ्चगवमित्यत्र 'तद्धितार्थ–' इति समासश्च न स्यादिति वाच्यम् । ...'विशेषणं विशेष्येण–' इति यदि दिक्संख्ययोस्समासः स्यात् तर्हि संज्ञायामेवेति ...नियमशरीराभ्युपगमात् । पूर्वसूत्रम्, पूर्वमासः, पूर्वसमुद्र इत्यादौ तु संज्ञात्वाभावेऽपि ...कालदेशवाचकत्वात् समासो भवत्येव । ननु 'त्रिलोकनाथः पितृसद्मगोचरः' इति कथं ...कालिदासप्रयोगः त्रिलोकशब्दस्य असंज्ञात्वात् । त्रयाणां लोकानां समाहार इति विग्रहे ...'तद्धितार्थ–' इति द्विगुसमासे तु 'द्विगोः' इति ङीप्प्रसङ्गः । 'अकारान्तोत्तरपदो द्विगुःस्त्रिया-...मिष्टः' इति स्त्रीलिङ्गत्वात् । पात्रादित्वाद् न स्त्रीत्वमित्यभ्युपगमे 'यदि त्रिलोकी गणना-...परा स्यात्' इत्यादिप्रयोगा न युज्येरन्निति चेत्, सत्यम् । लोकशब्दोऽत्र लोकसमु-...दायपरः । अवयवो लोकस्त्रिलोक इति मध्यमपदलोपी समासः । एतच्च 'द्विगोर्लुग-...नपत्ये' इति भाष्ये स्पष्टम् । षोडशपदार्थानामित्यत्र तु षोडशसंख्याकाः पदार्था इति

---

...निर्देशः । इतरेषां तु षण्णां स्वरूपग्रहणम् । पूर्वस्य ससंबन्धिकत्वात्पूर्वकालोऽपर-...कालेन समस्यते । तथैवोदाहरति—स्नातानुलिप्त इति । अत्र क्रियाशब्दत्वा-...त्पाचकपाठकन्यर्यायः प्राप्तः । याज्ञिका इत्यादि । यज्ञमधीयते विदन्ति वा याज्ञिकाः । ...'क्रतूक्थादि–' इति ठक् । एवं नैयायिकाः । 'जीर्यतेरतृन्' इति भूतेर्थेऽतृन्' । जरन्तश्च ...ते नैयायिकाश्च । जीर्णनैयायिका इत्यर्थः । मीमांसामधीयते विदन्ति वा मीमांसकाः, ...'क्रमादिभ्यो वुन्' । नवपाठका इति । पठन्तीति पाठकाः । 'ण्वुल्तृचौ' इति ण्वुल् । ...संख्यावाची नवशब्दोऽत्र न गृह्यते, 'दिक्संख्ये संज्ञायाम्' इति नियमात् । समाना-...धिकरणेनेति किम्, एकस्याः शौक्ल्यम् । षष्ठीसमासोऽपि इह न भवति । 'पूरण-...गुण–' इति निषेधात् । दिक्संख्ये संज्ञायाम् । नियमार्थमिति । 'तत्पुरुषे ...संज्ञायामेव दिक्संख्ये समस्येते' इति नियमशरीरम् । तेन पञ्चगुरित्यादि सिद्ध्यति । ...कथं तर्हि 'त्रिलोकनाथः पितृसद्मगोचरः' इति कालिदासः, त्रिलोकशब्दस्या-

कामशमी सप्तर्षयः। नेह, उत्तरा वृक्षाः। पञ्च ब्राह्मणाः। ७२८ **तद्धितार्थोत्तरपदसमाहारे च।** (२-१-५१) तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः पौर्वशालः। समासे कृते 'दिक्पूर्वपदादसंज्ञायां ञः' (सू १३२८) इति ञः। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' (वा १२७६)। आपरशालः। पूर्वा शाला प्रिया यस्येति

---

मध्यमपदलोपी समास इत्यलम्। **पूर्वेषुकामशमीति।** पूर्वशब्दस्य इषुकामशमीशब्देन समासः। देशविशेषस्य संज्ञेयम्। **सप्तर्षय इति।** मरीच्यत्रिप्रभृतीनां सप्तानामृषीणां संज्ञेयम्। **नेहेति।** असंज्ञात्वादिति भावः। **तद्धितार्थे।** एकापि सप्तमी विषयभेदाद् भिद्यते। तत्र तद्धितार्थे परो वैषयिकाधारत्वे। उत्तरपदेऽस्याः सामीपिकमाधारत्वमादाय परसप्तमी पर्यवस्यति। समाहारांशे तु वाच्यत्वमाधारत्वं सप्तमी। पूर्वसूत्राद् दिक्संख्ये इत्यनुवर्तते, तदाह—**तद्धितार्थे विषय इति।** तद्धितार्थे भविष्यत्तद्धितजन्यज्ञानविषये सतीत्यर्थः। तद्धिते भविष्यतीति यावत्। **प्राग्वदिति।** समानाधिकरणेन समस्यते, स तत्पुरुष इत्यर्थः। तद्धितार्थे दिक्समासमुदाहरति—**पूर्वस्यामिति।** **समासे कृत इति।** पूर्वस्यां शालायां भव इति विग्रहे 'तद्धितार्थे–' इति समासे कृते 'दिक्पूर्वपदात्–' इति ञप्रत्यये कृते 'यस्येति च' इत्याकारलोप आदिवृद्धिरिति भावः। **सर्वनाम्न इति।** मात्रशब्दः कार्त्स्न्ये। समासतद्धितादिवृत्तिगतस्य सर्वनाम्नः पुंवत्त्वमिति तदर्थः। यदि तु तद्धिते परे दिक्संख्ये समस्येते इत्युच्यते, तर्हि उत्पन्ने तद्धिते समासः, समासे कृते दिक्पूर्वपदत्वात्तद्धित इत्यन्योन्याश्रयप्रसङ्गः। तद्धितार्थे वाच्ये दिक्संख्ये समस्येते इति तु न व्याख्यानम्। तद्धितार्थस्य तद्धितवाच्यतया समासार्थत्वाभावात्। अत एव भविष्यतीत्येव व्याख्यानमुचितम्। **आपरशाल इति।** अपरस्यां शालायां भव इति विग्रहः। समासादि पौर्वशालवत्। उत्तरपदे परतो दिक्समासमुदाहरति—**पूर्वाशाला प्रिया यस्ये-**

---

सत्त्वात्। न च समाहारे द्विगुः, 'द्विगोः' इति ङीप्प्रसङ्गात्। न च पात्रादित्वं कल्प्यम्, 'यदि स्त्रीत्वे गणपाठः स्यात्' इत्यादिप्रयोगाणामसङ्गत्यापत्तेः। न च 'उत्तरपदे' इति समासः, निरुक्तपुरुषस्य दुर्लभत्वात्। अत्राहुः—लोकशब्दोऽत्र लोकसमुदायपरः। व्यवस्था लोकत्रयस्य। 'शाकपार्थिवादित्वादुत्तरपदलोपः' इति। **पञ्च ब्राह्मणा इति।** यद्यप्यत्र कृतेऽपि समासे रूपे विशेषो नास्ति, तथापि विभक्त्यन्तरे पञ्चभिर्ब्राह्मणैरित्यादौ विशेषो बोध्यः। **तद्धितार्था।** असंज्ञार्थं वचनम्। एकापि सप्तमी विषयभेदाद्भिद्यत इत्याशयेनाह—तद्धितार्थे विषय इत्यादि। यदि 'तद्धितार्थे वाच्ये' इति व्याख्यायेत, तर्हि पौर्वशाल इत्यादौ तद्धितो न स्यात्। तदर्थस्य समासेनैवोक्तत्वात्। 'द्विगोर्लुगनपत्ये' इति ज्ञापकादुक्तेऽपि तद्धितार्थे तद्धितो भवतीति कल्पनायां प्रतिपत्तिगौरवमिति भावः। 'तद्धिते परे' इति तु न व्याख्येयमेव तद्धिते परतः समासः, कृते 'दिक्पूर्वपदात्–' इत्यादिना तद्धित इत्यन्योन्याश्रयप्रसङ्गात्। **समाहारे च वाच्य इति।** तत्र पञ्चगवमित्यादौ समासेनैव समाहारस्याभिहितत्वात्तदर्थप्रत्ययो नोत्पद्यते। अन्यथा अत्र 'गोरतद्धितलुकि' इति टच् न स्या

त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः । दिक्षु समाहारो नास्त्यनभिधानात् । संख्यायास्तद्धितार्थे—षण्णां मातॄणामपत्यं षाण्मातुरः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहावावान्तरतत्पुरुषस्य विकल्पे प्राप्ते 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' (१२८७) ७२९ गोरतद्धितलुकि । (५—४—९२) गोऽन्तात्तत्पुरुषा-

---

त्यादिना । ननु बहुव्रीहिसमासे कृते सुपां लुप्तत्वाद् उत्तरपदे परतः पूर्वयोः किमनेन समासेनेत्यत आह—तेन शालाशब्दे आकार उदात्त इति । अवान्तरतत्पुरुषे सति समासान्तोदात्तत्वेन लकारादाकार उदात्त इत्यर्थः । असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यादिति भावः । ननु पूर्वेषां पुरुषाणां समाहार इत्यत्रापि समासः स्यादित्यत आह—दिक्ष्विति । दिक्षु समाहारो द्विगुविषयो न भवतीत्यर्थः : समाहारे दिक्पूर्वपदसमासो नास्तीति यावत् । संख्यायास्तद्धितार्थ इति । समास उदाह्रियत इत्यर्थः । तत्र तद्धितार्थं उदाहरति—षाण्मातुर इति । 'मातुरुत्संख्यासम्भद्रपूर्वायाः' इत्यण्, प्रकृतेरुकारश्चादेशः, आदिवृद्धिश्च । अथ उत्तरपदे परत उदाहरति— पञ्च गाव इति । अवान्तरतत्पुरुषस्येति । उत्तरपदे परतो विहितस्येत्यर्थः । विकल्पे प्राप्त इति । महाविभाषाविकारादिति शेषः । ततश्च पञ्चगोशब्दयोस्तत्पुरुषाभावपक्षे 'गोरतद्धितलुकि' इति तत्पुरुषप्रयुक्तटजभावे पंञ्चगोधन इत्यपि स्यादिति भावः । द्वन्द्वतत्पुरुषयोरिति । उत्तरपदे परतो यो द्वन्द्वतत्पुरुषौ तयोर्नित्यत्वं वक्तव्यमित्यर्थः । समासग्रहणं तु संपातायातम्, अनन्वयाद् उत्तरपदे परतः समासंज्ञाया अव्यभिचाराच्च, उत्तरपदशब्दस्य समासोत्तरखण्डे रूढत्वात् । गोरतद्धितलुकि । 'तत्पुरुषस्याङ्गुले—' इत्यतस्तत्पुरुषस्येत्यनुवृत्तं पञ्चम्या विपरि-

---

साभूहिकप्रत्ययस्य 'द्विगोर्लुगनपत्ये' इति लुकः प्रवृत्तेरिति भावः । सर्वनाम्न इति । एतच्च पूर्वापरादाहरणान्वयि । यद्यपि 'स्त्रियाः पुंवत्—' इत्यनेनापि प्रकृतरूपसिद्धिः, तथाप्युत्तरपूर्वेत्याद्यर्थं 'सर्वनाम्न—' इति वचनमावश्यकम्, प्रतिपदोक्तत्वाद् । इहापि तदुपन्यासो न्याय्य इति भावः । वृत्ति मात्र इति । तद्धितवृत्तौ समासवृत्तौ चेति कैयटः— आकार उदात्त इति । असति त्ववान्तरे तत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यादिति भावः । षाण्मातुर इति । 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्युदादेशः । 'अनपत्ये' इत्युक्तेः 'द्विगोर्लुग्—' इति लुग् न । विकल्पे प्राप्त इति । महाविभाषयेति शेषः । ततश्च तत्पुरुषप्रयुक्तटजभावे पञ्चगोधन इत्यपि स्यादिति भावः । मनोरमायां तु—विकल्पे प्राप्ते नित्यसमासार्थं द्वन्द्वतत्पुरुषयोरित्येतद्वचनमिति प्राचां ग्रन्थमनुसृत्योक्तम् । वस्तुतस्तु त्रयाणां समासे कृते अन्यपदार्थोपसंक्रमेण परस्परसंबन्धाभावाद् द्वन्द्वतत्पुरुषयोरप्राप्तौ सत्यां वचनमिदमित्यादि स्थितम् । द्वन्द्वस्योदाहरणं तु—वाक् च दृषच्च प्रिये अस्य वाग्दृषदप्रियः । छत्रोपानहप्रियः । इह त्रिपदे बहुव्रीहौ कृते पूर्वयोर्नित्यं द्वन्द्वः, तेन 'द्वन्द्वाच्चुदषहान्तात्—' इति समासान्तष्टजपि नित्य एव । गोरतद्धित । 'तत्पुरुषस्य—'इत्यनुवर्तते टच्च, तदाह—गोन्तादित्यादि । ननु ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावात्तत्पुरुषस्यावयवो यो गोशब्द-

ग्वर्थः समाहार एकवत्स्यात् । 'स नपुंसकम्' ( सू ८२१ ) इति नपुंसकत्वम् । भ्रागतम् । ७३२ कुत्सितानि कुत्सनैः । ( २ —१ —५३ ) कुत्स्यमानानि कुत्सनैः

त्ववहुत्वयोः एकत्वानुपपत्तेरतिदेशस्सम्पद्यते । तदाह—द्विग्वर्थः समाहार कवदिति । यदा समाहरणं समाहारः समूहः, तदा तस्यैकत्वादेव सिद्धमिति नेदं त्रमारम्भणीयमिति भाष्ये स्पष्टम् । केचित्तु समूहस्य वस्तुत एकत्वेऽपि उद्भूताव-विभेदविवक्षया द्विवहुवचनव्यावृत्त्यर्थमिदम् । एवं चात्र उद्भूतावयवभेदविवक्षा न र्तव्येति फलतीत्याहुः । स नपुंसकमिति । समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यादिति दर्यो मूले वक्ष्यते इति द्विगुसमासः । कुत्सितानि कुत्सनैः । वर्तमाने क्तः, त्येव ब्रूयात् । तेन सप्तर्षय इत्यत्र 'इगन्तकालकपाल—' इत्यादिना पूर्वपदप्रकृतिस्वरो भवति । किं तु समासान्तोदात्त एव । तथा च लक्ष्यम्—'सप्त ऋषयस्तपसे ये

नेषेदुः' । 'सप्तऋषीणां मुक्ततां यत्र लोकः' इत्यादि । त्रिविधः संख्यापूर्व इति । तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे च वाच्ये, संख्यापूर्वो यः समासः स इत्यर्थः । तद्धितार्थे यथा—पञ्चकपालः । 'संस्कृतं भक्षाः' इत्यणो 'द्विगोर्लुगनपत्ये' इति लुक् । उत्तरपदे यथा—पञ्चनावप्रियः । 'नावो द्विगोः' इति समासान्तष्टच् । समाहारे—पञ्चमूली । 'द्विगोः' इति ङीप् । द्विगुरेकवचनम् । वक्तीति वचनम्, बाहुलकात्कर्तरि ल्युट् । 'सामान्ये नपुंसकम्' । द्विगुः समास एकार्थप्रतिपादको भवतीत्यर्थः । न च वस्तुतोऽनेकार्थ-स्यैकार्थ्यं कथंचिदुपपद्यत इति सामर्थ्यादतिदेशः संपद्यत इत्याह—एकवत्स्यादिति । समाहारे इति तूपसंख्यानाल्लभ्यते । समाहारे यो द्विगुस्तदर्थ एकवदित्यन्वयः । समाहारे किम्, तद्धितार्थे मा भूत् । पञ्चसु कपालेषु संस्कृताः पञ्चकपालाः, पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटाः । पञ्चगवे पञ्चगवानीत्यत्र तु प्रथमद्विग्वर्थस्यैकवद्भावे कृते योऽयमेकशेषे कृते द्विग्वर्थसमुदायस्तस्याद्विग्वार्थत्वाद्बहिरङ्गत्वाच्चैकवद्भावो न भवतीति स्थित-माकरे । यदा 'तद्धितार्थ—' इति सूत्रे 'समाहारे' इति कर्मसाधनस्तदा समाहृतप्रधानो द्विगुरिति बहुत्वे प्राप्ते अनेन एकवद्भावः क्रियते । यदा तु भावसाधन एव समाहारस्तदा समूह-प्रधानत्वाद् द्विगोः समूहस्य चैकत्वात्सिद्धमेकत्वमिति नास्य प्रयोजनम् । न च 'स नपुंसकम्' इति नपुंसकत्वार्थमेकत्वविधानमिति वाच्यम्, समुदायवाचकेषु 'सामान्ये नपुंसकम्' इत्यभ्युपगमे बाधकाभावादित्याहुः । वस्तुतस्तु 'तद्धितार्थ—' इति सूत्रे समाहार इति भावे घञ्, न तु कर्मणि । पञ्चगवमित्यत्र पञ्च गावः समाहृता इत्यर्थाभ्युपगमे समाह्रिय-माणानां बहुत्वेन एकवचनानुपपत्तेः । न च 'द्विगुरेकवचनम्' इति सूत्रान्नैवमिति वाच्यम्, पञ्चखट्वीत्यसिद्धेः । तत्र हि पञ्च खट्वाः समाहृताः, पञ्चसु खट्वासु समाहृतास्वित्येवं विग्रहसंभवेन नियतविभक्तित्वाभावाद् 'एकविभक्ति चापूर्वनिपाते' इत्यप्रवृत्तेरनुपसर्जनत्वाद् 'गोस्त्रियोः—' इति ह्रस्वो न स्यात् । ततश्च 'आवन्तो वा' इति स्त्रीत्वपक्षे 'द्विगोः' इत्यदन्तलक्षणो ङीब्न स्यात् । भावसाधनत्वे त्वेकविभक्तित्वा-दुपसर्जनत्वमव्याहतमेव । समाहारापेक्षया नियमेन वर्तिपदानां षष्ठ्यन्तत्वात्, तथा च पञ्चखट्वीत्यादिरूपं निर्वाधमेवेति दिक् । स नपुंसकमिति । एतस्यार्थो मूल

श्यामः। इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते । पूर्वनिपातनियमार्थं सूत्रम् । ७३५ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। (२—१—५६) उपमेयं व्याघ्रादिभिः सह प्राग्वत्साधारण-

धर्मवाचिभिः समानाधिकरणैः समस्यन्ते, स तत्पुरुष इत्यर्थः। । घन इव श्यामो घन-श्याम इति । नन्विह घन इव श्याम इति विग्रहे घनशब्दस्य श्यामशब्दस्य चैकार्थ-वृत्तित्वलक्षणसामानाधिकरण्याभावात् कथमिह समासः, इवशब्दापेक्षत्वेनासामर्थ्या-च्चेत्यत आह—इह पूर्वपदमिति। एवं च घनशब्दो लक्षणया घनसदृशे रामे वर्तते, श्यामशब्दोऽपि रामे वर्तत इति सामानाधिकरण्यम् । अत एव मृगीव चपला मृगचपला इत्यत्र 'पुंवत्कर्मधारय–' इति पुंवत्त्वं सिध्यति । घनशब्दस्य भूतपूर्वगत्यो-पमानपरत्वं निर्वाह्यम् । तथा च 'घनसदृशश्यामः' इति वोधः। सादृश्यं तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम् । एवं च सादृश्यप्रतियोग्यनुयोगिनोस्साधारणधर्मत्वं लब्धम् । स चेह साधारणधर्म उत्तरपदोपस्थाप्य एव गृह्यते, संनिहितत्वात् । तथा च घन-गतश्यामत्वसदृशश्यामत्ववान् इति वोधपर्यवसानम् । ननु विशेषणसमासेन सिद्धे किमर्थमिदं सूत्रमित्यत आह—पूर्वनिपातेति । अन्यथा उभयोरपि गुणवचनतया विशेषणविशेष्यभावे कामचारात् खञ्जकुब्जः कुब्जखञ्जः इतिवदनियमः स्यादिति भावः । उपमितम् । प्राग्वदिति । समानाधिकरणैस्समस्यते, स तत्पुरुष इत्यर्थः । अत्रो-पमितस्य नित्यमुपमानाकाङ्क्षत्वादुपमानभूतव्याघ्रादिभिरित्यर्थसिद्धम् । ननु विशेषण-

---

तस्मात्पूर्वनिपातनियमार्थमिदं सूत्रमित्याशयेनाह—पूर्वसूत्रापवाद इति । उपमानानि । उपमीयते येन तदुपमानम् । उपपूर्वान्माङः करणे ल्युट् । प्रादिसमासः । उपपूर्वको माङ् सादृश्यवाचके परिच्छेदे रूढः । येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानमित्यर्थः । यथा गौरिव गवयः । इह हि गौःकरणं सादृश्ये हेतुः, पुरुषः परिच्छेत्ता । स हि गौः सादृ-श्येन गवयं परिच्छिनत्ति । सामान्यवचनैरिति । समानो धर्मः सामान्यम् । चातुर्वर्ण्यादि-त्वात्स्वार्थे ष्यञ् । उपमानोपमेयसाधारणो यो धर्मस्तद्विशिष्टवचनैरित्यर्थः । न तु साधारण-धर्ममात्रवचनैरिति । एतच्च वचनग्रहणाल्लभ्यते । सामान्यमुक्तवन्तः सामान्यवचनाः । बाहुल-कात्कर्तरि भूते ल्युट् । ये पूर्वसामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः । तच्च सामान्यविशिष्टमुपमानशब्दस्य संबन्धिशब्दत्वादाक्षिप्तमुपमेयमेव विज्ञायते । लाक्षणिकमिति । अत एव सामानाधिकरण्यान्मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः । उत्तरपदोपस्थितश्याम-त्वचपलत्वादिद्वारकमेवेह सादृश्यं गृह्यते, संनिधानात् । कथं तर्हि उपमानपरतेति चेत्, भूत-पूर्वगत्या शक्यार्थमादाय तत्परतेत्यवेहि । पूर्वनिपातेति । अन्यथाऽनियमः स्यात् खञ्जकुब्ज-वदिति भावः । किं च 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय–' इति सूत्रे प्रतिपदोक्तस्या-स्यैवोपमानग्रहणेन ग्रहणार्थमपीदं सूत्रम् । अत एव मयूरव्यंसकादित्वात्समासे उपमानस्वरो न प्रवर्तत इति सिद्धान्तः । उपमितम् । उपमेयमुपमितम् । भूतकालोऽत्र न विवक्षितः । तच्च संबन्धिशब्दत्वादुपमानमाक्षिपति । तथा चोपमान-

धर्मस्याप्रयोगे सति । विशेष्यस्य पूर्वनिपातार्थं सूत्रम् । पुरुषव्याघ्रः । नृसिंहः । व्याघ्रादिराकृतिगणः । सामान्याप्रयोगे किम्—पुरुषो व्याघ्र इव शूरः । ७३६ विशेषणं विशेष्येण बहुलम् । ( २—१—५७ ) भेदकं समानाधिकरणेन भेद्ये

---

समासेनैव सिद्धे किमर्थमिदं सूत्रमित्यत आह— विशेष्यस्येति । उपमानोपमेययोः समभिव्याहारे उपमानस्यैव विशेषणत्वात्पूर्वनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातनार्थमिदमित्यर्थः । पुरुषव्याघ्र इति । पुरुषो व्याघ्र इवेति विग्रहः । अत्र सादृश्योपपादकं शौर्यादिकं साधारणधर्मः, स इह नोपात्त इति भवति समासः । पुरुषो व्याघ्र इव शूर इति । शौर्येण व्याघ्रसदृश इति यावत् । अत्र शौर्यस्योपमानोपमेयसाधारणधर्मस्य प्रयोगान्न समास इति भावः । भाष्याब्धिः क्वातिगम्भीर इति कैयटप्रयोगस्तु मयूरव्यंसकादित्वात्समाधेयः । भाष्यमब्धिरिति रूपकं वा । न च पुरुषशब्दस्य शूरशब्दसापेक्षत्वेनासामर्थ्यादेवात्र समासस्य न प्रवृत्तिः । अतः 'सामान्याप्रयोगे' इति व्यर्थमिति वाच्यम्, समस्यमानस्याप्रधानस्यैव हि सापेक्षत्वं सामर्थ्यविघातकम् न तु प्रधानस्य । तथा चात्र पुरुषस्य प्रधानतया तस्य शूरसापेक्षत्वेऽपि अस्त्येव सामर्थ्यमिति समासप्रवृत्तौ तन्निवृत्त्यर्थं सामान्याप्रयोग इति वचनम् । इदमेव प्रधानस्य सापेक्षत्वेऽपि न सामर्थ्यविघातकत्वमिति ज्ञापयति । तेन राजपुरुषः सुन्दर इत्यादौ समासः सिद्धो भवतीति भाष्ये स्पष्टम् । विशेषणं विशेष्येण बहुलम् । विशिष्यते अनेनेति विशेषणम् इतरस्माद्व्यावर्तकम् । व्यावर्त्यं तु विशेष्यं भिन्नत्वेन ज्ञायमानम् । समानाधिकरणेनेत्यधिकृतम्,

---

भूतैर्व्याघ्रादिभिरित्यर्थः । पुरुषो व्याघ्र इव शूर इति । तत्र हि शूरसापेक्षस्यापि पुरुषस्य प्रधानत्वाद् 'राजपुरुषः सुन्दरः' इतिवदत्रापि समासः स्यात् स मा भूदिति 'सामान्याप्रयोगे' इत्युक्तमिति भावः । कथं तर्हि 'भाष्याब्धिः क्वातिगम्भीरः' इति कैयटः । सामान्यप्रयोगसत्त्वेनाप्राप्तेः । अत्र केचित् प्रमाद एवायमित्याहुः । इह गाम्भीर्येण सादृश्यं न विवक्षितम् किं तु विततदुरवगाहत्वादिना । तस्य हि विततत्वादेरप्रयोगेऽस्त्यवेति निर्बाधः समास इति मनोरमायां स्थितम् । विशेषणम् । विशिष्यते येन तद्विशेषणम्, अत्र करणत्वविवक्षायां ल्युट् तदाह—भेदकमिति । व्यावर्तकमित्यर्थः । विशेषणविशेष्ययोः सर्वविवक्षया अन्यतरोपादानमात्रेणान्तराक्षेपसम्भवे उभयोरुपादानं स्पष्टार्थमिति कैयटः । एतच्च 'कुत्सितानि कुत्सनैः' इत्यत्रापि तुल्यम् । हरदत्तस्त्वाह—समस्यमानपदद्वयजन्यबोधप्रकारत्वयोर्विशेषणविशेष्ययोर्यत्र परस्परव्यभिचारस्तत्रैव समासो यथा स्यात्, नान्यत्रेत्येतदर्थमुभयोरुपादानम् । तथा च नीलोत्पलादौ समासो भवति, न तु 'तक्षकः सर्पः' इत्यादौ । न हि तक्षकत्वं सर्पत्वं व्यभिचरतीति । तदसत् । कैलासाद्रिः, मन्दराद्रिः, भारतवर्षं, तर्कविद्या, व्याकरणशास्त्रं भास्करः, इत्यादिप्रयोगाणामसङ्ग्रहापत्तेः । ननु विशेषणविशेष्यभावे कामचाराद् धवपाटलादिवत् नीलोत्पलादावप्युत्पलस्य पूर्वनिपातः स्यात् । इति चेदत्राहुः— जातिशब्दस्य गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पकत्वमेव । तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयोगः । गुणशब्दयोः क्रियाशब्दयोर्गुणक्रियाशब्दयोर्वा

बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात् क्वचिन्नित्यम्, कृष्णसर्पः । क्वचिन्न, रामो जामदग्न्यः । ७३७ **पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च** । (२-१-५८) पूर्वनिपातनियमार्थमिदम् । पूर्ववैयाकरणः । अपराध्यापकः । 'अपरस्यार्धे पश्चभावो वक्तव्यः' (वा ३२५३) अपरश्चासावर्धश्च पश्चार्धः । कथम् 'एकवीरः' इति । 'पूर्वकालैक—' (सू ७२६) इति बाधित्वा परत्वादनेन समासे 'वीरैकः' इति हि स्यात् । बहुलग्रहणाद्भविष्यति । ७३८ **श्रेण्यादयः कृतादिभिः** । (२-१-५९) 'श्रेण्यादिषु च्व्यर्थवचनं

---

उदाह—**भेदकमिति** । **प्राग्वदिति** । समस्यते स तत्पुरुष इत्यर्थः । **नीलमुत्पलं नीलोत्पलमिति** । नीलपदं तावदुत्पलमनीलादुत्पलाद्व्यावर्तयतीति विशेषणसमर्पकम् । तस्य उत्पलपदेन विशेष्यसमर्पकेण समासः । प्रथमानिर्दिष्टत्वाद्विशेषणस्य पूर्वनिपात इति भावः । न च उत्पलपदम् अनुत्पलान्नीलं व्यावर्तयतीत्युत्पलपदस्यापि विशेषणत्वं स्यादिति वाच्यम्, जातिशब्दो गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पक एव, न तु विशेषणसमर्पकः, स्वभावात् । यथा—नीलोत्पलम्, पाचकब्राह्मण इति । गुणशब्दयोः समभिव्याहारे विशेषणविशेष्यभावस्य न नियमः । यथा—खञ्जकुब्जः कुब्जखञ्ज इति । क्रियाशब्दयोरप्यनियमः । यथा—पाचकपाठकः पाठकपाचक इति । तथा गुणक्रियाशब्दयोरप्यनियमः । यथा—खञ्जपाचकः पाचकखञ्ज इति भाष्ये स्पष्टम् । तथा कैलासाद्रिः, मन्दराद्रिः, अयोध्यानगरी इत्यादौ संज्ञाशब्दा अपि विशेषणसमर्पका एव, स्वभावात् । सामान्यजातिविशेषजातिशब्दयोः समभिव्याहारे तु विशेषजातिरेव विशेषणम्, शिंशपावृक्ष इत्यादि ज्ञेयम् । ननु वाग्रहणेन सिद्धे बहुलग्रहणं किमर्थमित्यत आह—**बहुलग्रहणादिति** । **पूर्वापर** । पूर्वादयः समानाधिकरणेन समस्यन्त इत्यर्थः । विशेषणसमासेनैव सिद्धे किमर्थमिदमित्यत आह—**पूर्वनिपातेति** । **अपराध्यापक इति** । बहुलग्रहणानुवृत्त्या पाचकादिक्रियाशब्दैः । पूर्वादीनामेषां न समास इति समर्थसूत्रे भाष्ये स्थितम् । ततश्च 'अपराध्यापकः' इत्युदाहरणमुपेक्ष्यम् । अपरमीमांसक इत्युदाहरणमुचितम् । **अपरस्यार्ध इति** । 'पश्चात्' इति सूत्रभाष्ये इदं वार्तिकं स्थितम् । प्रथमवैयाकरणः, चरमवैयाकरणः, 'मध्यान्मः' मध्यमवैयाकरणः, वीरवैयाकरणः । आक्षिपति—**कथमेकवीर इति** । हि यतः, अनेन प्रकृतसूत्रेण, वीरशब्दस्यैकशब्देन समासे सति वीरशब्दस्य पूर्वनिपाते सति वीरैक इति स्यात् । अतः 'एकवीरः' इति कथमित्यन्वयः । ननु 'पूर्वकालैक—' इति सूत्रेणैकशब्दस्य वीरशब्देन समासे सति 'एकवीरः' इति निर्बाधमित्यत आह—**पूर्वकालैकेति बाधित्वा परत्वादिति** । परिहरति—**बहुलग्रहणादिति** । बहुलग्रहणानुवृत्तेरस्य सूत्रस्याप्रवृत्तौ

---

नियम एव । खञ्जकुब्जः कुब्जखञ्जः । पाचकपाठकः पाठकपाचकः । खञ्जपाचकः पाचकखञ्ज इति । अत्र मूलमुपसर्जनमिति महासंज्ञा । अप्रधानं ह्युपसर्जनम् । गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति । **अपरस्यार्ध इति** । एतच्च 'पश्चात्' इति सूत्रे भाष्ये स्थितम् । **बहुलग्रहणादिति** । एकेषु मुख्येषु वीरयते पराक्रमते

७४० **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः।** ( २-१-६१ ) सद्वैद्यः। वक्ष्यमाणेन महत आकारः। महावैयाकरणः। पूज्यमानैः किम्-उत्कृष्टो गौः। पङ्काद् उद्धृत इत्यर्थः। ७४१ **वृन्दारकनागकुञ्जरैः पूज्यमानम्।** (२-१-६२) गोवृन्दारकः। व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम्। ७४२ **कतरकतमौ जातिपरिप्रश्ने।** (२—१—६३) कतरकठः। कतमकलापः।

---

पदलोपः। देवपूजको ब्राह्मण इति वा विग्रहः **सन्महत्परम।** समानाधिकरणैः समस्यन्ते, स तत्पुरुष इति शेषः। **सद्वैद्य इति।** सन् वैद्य इति विग्रहः। चिकित्साशास्त्रकूलंकषज्ञानत्वं सत्त्वम्। तेन वैद्यस्य पूजा गम्यते। पूर्वनिपातनियमार्थं सूत्रम्। **वक्ष्यमाणेनेति।** महांश्चासौ वैयाकरणश्चेति विग्रहे अनेन समासे सति महच्छब्दस्य 'आन्महतः–'इति वक्ष्यमाणेन आकारेऽन्तादेशे सवर्णदीर्घे महावैयाकरण इति भवतीत्यर्थः। ननु उत्कृष्टो गौरित्यत्र उत्कृष्टशब्दस्य अतिशयितवाचितया तेन गोः पूजावगमात् कथमिह समासो भवतीत्यत आह–**पङ्कादुद्धृत इत्यर्थ इति।** उत्पूर्वकः कृषधातुरिहोद्धरणार्थक इति भावः। परमवैद्यः, उत्तमवैद्यः, उत्कृष्टवैद्यः गुणक्रियाशब्दैः समासे सदादीनां पूर्वनिपातनियमार्थमिदं सूत्रम्। **वृन्दारकनागकुञ्जरैः।** समानाधिकरणैः। समस्यत इति शेषः विशेषणसमासेनैव सिद्धे विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रम्। **गोवृन्दारक इति।** वृन्दारकशब्दो देवतावाची। 'अमरा निर्जरा देवाः' इत्युपक्रम्य 'वृन्दारका दैवतानि' इत्यमरः। गौः वृन्दारक इवेति विग्रहः। गौः नाग इव गोनागः। गौः कुञ्जर इव गोकुञ्जरः। नागशब्दः कुञ्जरशब्दश्च गजवाची। अत्र गोवृन्दारकादितुल्यत्वात् श्रैष्ठ्यं गम्यत इति पूज्यमानता। ननु व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः–इत्येव सिद्धे किमर्थमिदमित्यत आह—**व्याघ्रादेरिति। सामान्येति।** गोकुञ्जरः श्रेष्ठ इत्यादाविति भावः। **कतरकतमौ।** जातिपरिप्रश्ने गम्ये कतरकतमौ समानाधिकरणेन समस्येते इत्यर्थः। **कतरकठ इति।** अनयोः कः कठ इत्यर्थः। 'कियत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' कठेन प्रोक्तमधीते कठः। वैशम्पायनान्तेवासित्वात् प्रोक्ते णिनिः। 'कठचरकाल्लुक्' इति तस्य लुक्। ततः 'तदधीते–' इत्यणः 'प्रोक्ताल्लुक्' इति लुक्। **कतमकलाप इति।** एषां कः कलापः इति विग्रहः। कलापिना प्रोक्तमधीते कलापः। 'कलापिनोऽण्' 'सब्रह्मचारि' इति टिलोपः। 'वा बहूनां जातिपरिप्रश्ने डतमच्'। ननु घटत्वादिवत् कठशाखाध्येतृत्वादिकं न जातिः। 'आकृतिग्रहणा जातिः' इति लक्षणस्य 'लिङ्गानां च न सर्वभाक्', 'सकृदाख्यातनिर्ग्राह्या' इति लक्षणस्य च तत्रा-

---

लोपः। तथा देवब्राह्मण इत्यत्र देवस्य पूजको देवपूजक इति पूर्वस्मिन् षष्ठीसमासे यदुत्तरपदं पूजक इति तस्य लोपो ज्ञेयः। **सन्महत्।** गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिपातनियमार्थं सूत्रम्। **कतरकतमौ।** जातिपरिप्रश्ने किम्, कतरो देवदत्तः। 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति व्युत्पादितकतमशब्दसाहचर्यात्तादृशस्यैव कतरशब्दस्यापि ग्रहणे सिद्धे जतिपरिप्रश्नग्रहणं ज्ञापयति 'कतमशब्दोऽर्थान्तरेऽपि साधुः' इति। तथा च प्रत्युदाहृतं प्राचीनवृत्तिषु कतरो भवतोर्देवदत्तः

'गोत्रं च चरणैः सह' इति जातित्वम्। ७४३ किं क्षेपे। (२—१—६४) कुत्सितो राजा किंराजा, यो न रक्षति। ७४४ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः। (२—१—६५) ७४५ तत्पुरुषः समानाधिकरणः कर्मधारयः। (१—२—४२) ७४६ पुंवत्कर्मधारयजातीयदेशीयेषु। (६—३—४२) कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कादनूङ्भावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। पूरणीप्रियादिष्वप्राप्तः पुंवद्भावो विधीयते। महानवमी। कृष्णचतुर्दशी। महाप्रिया।

---

प्रवृत्तेरित्यत आह—गोत्रं चेति। अत्र कतमशब्दस्य जातिपरिप्रश्न एव व्युत्पादनात् कतरार्थमेव जातिपरिप्रश्नग्रहणम्। एवं च अनयोः कतरो देवदत्त इत्यत्र न भवति समासः। एषां कतमो देवदत्त इति तु नास्त्येव। जातिपरिप्रश्न एव डतमचो विधानात्। वस्तुतस्तु डतरच्प्रत्ययविधौ द्वयोरिति बहूनामिति जातिपरिप्रश्न इति प्रत्याख्यातं भाष्ये। एवं च कतम एषां देवदत्त इत्यप्यस्ति। तत्र समासाभावाय जातिपरिप्रश्नग्रहणम् इति शब्देन्दुशेखरे स्थितम्। किं क्षेपे। क्षेपो निन्दा। तद्गम्ये किमित्यव्ययं समानाधिकरणेन समस्यते, स तत्पुरुष इत्यर्थः। कुत्सितो राजेति। अस्वपदविग्रहोऽयम्। किम्पदस्थाने कुत्सितपदमिति ज्ञेयम्, वाक्येन निन्दानवगमनस्वपदलौकिकविग्रहासम्भवात्। किंराजेति। 'राजाहस्सखिभ्यः—' इति टच् तु न, 'किमः क्षेपे' इति निषेधात्। ननु राज्ञो बहुसम्पत्तिशालिनः कथं कुत्सितत्वमित्यत आह—यो न रक्षतीति। स किंराजेत्यन्वयः।

पोटायुवतीति। पोटादिभिः समानाधिकरणैर्जातिवाचकं समस्यते, स तत्पुरुष इत्यर्थः। अथ कर्मधारयकार्यं वक्ष्यन् कर्मधारयसंज्ञामाह—तत्पुरुषः समान। समानम् एकम् अधिकरणं वाच्यं ययोः पदयोः, ते समानाधिकरणे पदे, ते अस्य स्तः इति समानाधिकरणः, मत्वर्थीयः अर्शआद्यच्। समानाधिकरणानेकपदावयवकस्तत्पुरुषः कर्मधारयसंज्ञको भवतीत्यर्थः। तत्पुरुषाधिकारे इयं संज्ञा न कृता, तथा सत्येकसंज्ञाधिकारात् कर्मधारयसंज्ञया तत्पुरुषसंज्ञा बाध्येत यतः। पुंवत्कर्मधारय। स्त्रियाः पुंवद्भाषितपुंस्कादनूङित्यनुवर्तते। एकापि सप्तमी विषयभेदाद्भिद्यते। कर्मधारये अधिकरणसप्तमी। जातीयदेशीयविषये परसप्तमी। तदाह—कर्मधारये इति। तथाभूतमित्यनन्तरं स्त्रीवाचकमिति शेषः। भाषितपुंस्कादनूङित्यस्यार्थः 'स्त्रियाः पुंवत्—' इति सूत्रे स्फुटीकरिष्यते। ननु कर्मधारये 'स्त्रियाः पुंवत्—' इत्यनेन सिद्धं पुंवत्त्वम्, जातीयदेशीययोस्तु 'तसिलादिष्वाकृत्वसुचः' इत्यनेन सिद्धमित्यत आह—पूरणीप्रियादिष्वप्राप्त इति। अपूरणीप्रियादिष्विति पर्युदासादिति भावः। महानवमीति। महती चासौ नवमी चेति विग्रहः। 'सन्महत्—' इत्यादिना समासः। नवा-

---

कतमो भवतां देवदत्त' इति। किं क्षेपे। किंराजेति। 'किमः क्षेपे' इति समासान्तनिषेधः। क्षेपे किम्, को राजा पाटलिपुत्रे? एवं 'किंसखा यो द्रुह्यति' 'किंगौर्यो न वहति' इत्यप्युदाहरणं बोध्यम्। तत्पुरुषः। समानाधिकरणशब्दः अर्शआद्यजन्तः। समानाधिकरणपदक इत्यर्थः। भाषितपुंस्कादित्यादि। एवञ्च 'स्त्रिय-

तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री, दत्तभार्या, पञ्चमभार्या, स्रौघ्नभार्या, सुकेशभार्या, ब्राह्मणभार्या । एवं पाचकजातीया पाचकदेशीया इत्यादि । इभपोटा । पोटा स्त्रीपुंसलक्षणा । इभयुवतिः ।

---

पूरणी नवमी । 'तस्य पूरणे डट्' 'नान्तादसंख्यादेर्मट्' । टित्त्वाद् ङीप् । अत्र नवमीशदस्य पूरणप्रत्ययान्तत्वात्तस्मिन् परे 'स्त्रियाः पुंवत्—' इति पुंवत्त्वमप्राप्तमनेन विधीयते । कृते पुंवत्त्वे 'आन्महतः—' इत्यात्त्वमिति भावः । कृष्णचतुर्दशीति । चतुर्दशानां पूरणी चतुर्दशी डट् । 'नस्तद्धिते' इति टिलोपः । टित्त्वान्ङीप् । कृष्णा चासौ चतुर्दशी चेति विग्रहः । महाप्रियेति । महती चासौ प्रिया चेति कर्मधारयः । अत्रापि प्रियादिपर्युदासादप्राप्तमनेन विधीयत इति भावः । 'पुंवत्कर्मधारय—' इत्यस्य प्रयोजनान्तरमाह—तथा कोपधादेरिति । 'न कोपधायाः' 'संज्ञापूरण्योश्च' 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' 'स्वाङ्गाच्चेतः' 'जातेश्च' इति पञ्चसूत्र्या प्रतिषिद्ध इत्यर्थः । कर्मधारयादाविति । कर्मधारये जातीयदेशीययोश्च परयोरित्यर्थः । पाचकस्त्रीति । पाचिका चासौ स्त्री चेति कर्मधारयः । अत्र 'न कोपधायाः' इति पुंवत्त्वस्य प्रतिषेधः प्राप्तः । दत्तभार्या, पञ्चमभार्येति । दत्ता चासौ भार्या चेति, पञ्चमी चासौ भार्या चेति च कर्मधारयः । अत्र 'संज्ञापूरण्योश्च' इति प्रतिषेधः प्राप्त । स्रौघ्नभार्येति । स्रौघ्नी चासौ भार्या चेति कर्मधारयः । अत्र 'वृद्धिनिमित्तस्य च —' इति प्रतिषेधः प्राप्तः । सुकेशभार्येति । सुकेशी चासौ भार्या चेति कर्मधारयः । अत्र 'स्वाङ्गाच्च' इति निषेधः प्राप्तः । ब्राह्मणभार्येति । ब्राह्मणी चासौ भार्या चेति कर्मधारयः । अत्र 'जातेश्च' इति निषेधः प्राप्तः । अथ जातीयदेशीययोः प्रतिप्रसवमुदाहरति—एवं पाचकजातीया पाचकदेशीयेति । 'प्रकारवचने—' इति जातीयर्, 'ईषदसमाप्तौ—' इति देशीयर् । उभयत्रापि 'तसिलादिषु—' इति पुंवत्त्वस्य 'न कोपधायाः' इति निषेधः प्राप्तः । इत्यादीति । दत्तजातीया, दत्तदेशीया, पञ्चमजातीया, पञ्चमदेशीया, स्रौघ्नजातीया, स्रौघ्नदेशीया, सुकेशजातीया, सुकेशदेशीया, ब्राह्मणजातीया, ब्राह्मणदेशीया । तदेवं 'पुंवत्कर्मधारय—' इति सूत्रं निरूप्य 'पोटायुवति—' इति सूत्रस्य क्रमेणोदाहरणान्याह—इभपोटेति । पोटा चासौ इभी चेति कर्मधारयः । इभी शब्दस्य पुंवत्त्वम् । जातेः पूर्वनिपातार्थमिदं सूत्रम् । पोटा स्त्रीपुंसलक्षणा इति । कोशवाक्यमिदम् । स्त्रीपुंसयोर्लक्षणानि चिह्नानि यस्या इति

---

पुंवत्—' इति सूत्रे स्फुटीकरिष्यते । ननु तेनैव कर्मधारयेति सिद्धम्, जातीयदेशीययोस्तु 'तसिलादिषु—' इति सिद्धम्, तत्किमनेन सूत्रेणेत्यत आह—पूरणीप्रियादिष्विति । तथेति च । महानवमीति । नवानां पूरणी । 'तस्य पूरणे डट्' 'नान्तादसंख्यादेर्मट्' टित्त्वान्ङीप् । महती चासौ नवमी चेति विग्रहः । पुंवद्भावे कृते वक्ष्यमाणेन महत आकारः । कोपधादेरिति । 'न कोपधायाः' 'संज्ञापूरण्योश्च' 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' 'स्वाङ्गाच्चेतः' 'जातेश्च' इति पञ्चसूत्र्या प्रतिषिद्ध इत्यर्थः । क्रमेणोदाहरति— पाचकस्त्रीति । जातीयदेशीयोरपि प्रतिप्रसवमुदाहरति— एवमिति । पाचिकाप्रकारवती पाचकजातीया । 'प्रकारवचने जातीयर्' । पाचक-

...तल्लिकादयो नियतलिङ्गाः, न तु विशेष्यनिघ्नाः । जातिः किम्—कुमारी ...तल्लिका । ७४८ युवा खलतिपलितवलिनजरतीभिः । (२—१—६७) ...र्वनिपातनियमार्थं सूत्रम् । लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते । युवा खलतिर्युवखलतिः । युवतिः खलती युवखलती । युवजरती । युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम् । ७४९ कृत्यतुल्याख्या अजात्या । (२—१—६८) भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या

---

...निर्देशः । गोशब्दस्य पुंल्लिङ्गत्वे तु प्रशस्त इति पाठ्यम् । ननु गोशब्दस्य पुंल्लिङ्गत्वे मतल्लिकामर्चिकाप्रकाण्डशब्दानामपि विशेष्यनिघ्नत्वात् पुंल्लिङ्गतापत्तिः । गोशब्दस्य स्त्रीलिङ्गत्वे तु प्रकाण्डोद्धतल्लजानामपि स्त्रीलिङ्गतापत्तिश्चेत्यत आह—मतल्लिकादय इति । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । कुमारी मतल्लिकेति । अवस्याविशेषात्मकवयोविशेषवाचित्वान्न जातिवाची कुमारीशब्द इति न समासः । समासे तु 'पुंवत्कर्मधारय—' इति पुंवत्त्वं स्यादिति भावः । युवा खलति । युवन्शब्दः खलत्यादिभिः समानाधिकरणैः समस्यते, स तत्पुरुष इत्यर्थः । विशेषणसमासेन सिद्धे किमर्थमिदमित्यत आह—पूर्वेति । युवन्शब्दस्य खलत्यादिशब्दानां च गुणवाचित्वाद्विशेषणत्वे कामचारादपूर्वनिपातस्यानियमे प्राप्ते तन्नियमार्थमिदं सूत्रमित्यर्थः । खलतिः केशहीनशिराः । 'पलितं जरसा शौक्ल्यम्' 'वलिनो वलिभिः समौ' इत्यमरः । युवा खलतिः युवखलतिरिति । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः । ननु युवेतिपुंल्लिङ्गनिर्देशात् कथं युवतिशब्दस्य समास इत्यत आह—लिङ्गविशिष्टेति । युवतिः खलतिः युवखलतिरिति । 'पुंवत्कर्मधारय—' इति पुंवत्वम् । युवजरतीति । जरती वृद्धा । युवतिश्चासौ जरती चेति विग्रहः । 'पुंवत्कर्मधारय—' इति पुंवत्त्वम् ननु युवतिः कथं जरती स्यादित्यत आह—युवत्यामेवेति । कृत्यतुल्याख्या । कृत्यप्रत्ययान्ताः तुल्यवाचकाश्च जातिभिन्नवाचकेन समानाधिकरणेन समस्यन्ते स तत्पुरुष इत्यर्थः । भोज्योष्णमिति । भोज्यं च तदुष्णं चेति विग्रहः । 'ऋहलोर्ण्यत्' इति ण्यत् । अर्हे कृत्यप्रत्ययः । भोज्योष्णशब्दयोः क्रियागुणशब्दत्वात् विशेषणत्वे कामचारादनियतपूर्वनिपाते प्राप्ते नियमार्थमिदम् । तुल्यश्वेत इति । तुल्यश्चासौ श्वेतश्चेति

---

च विशेषवचनाः शुचिमृद्वादयः, ये तु गौण्या वृत्त्या प्रशंसां गमयन्ति 'सिंहो माणवकः' इत्यादयस्ते सर्वे व्युदस्यन्ते । गवोद्ध इति । 'अवङ् स्फोटायनस्य' इत्यवङि 'आद् गुणः' । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । 'प्रशंसावचनपोटायुवति—' इत्येकयोगसंभवे पृथग्योगकरणं चिन्त्यफलम् , युवखलतीति । 'कृदिकारादक्तिनः' इति ङीप् । 'पुंवत्कर्मधारय—' इति युवतिशब्दस्य पुंवद्भावः । जरतीति । 'जीर्यतेरतृन्' 'उगितश्च' इति ङीप् । एवं युवपलितः, युववलिन इत्युदाहार्यम् । वलिनशब्दः पामादिः । कृत्यतुल्याख्या । तुल्यमहान् सदृशमहानित्यादौ तु परत्वादनेन 'सन्महत्—' इति बाध्यते । 'तस्य सत्कृत्यशालिनः' इनि भट्टिप्रयोगे तु 'सतां कृत्यं सत्कृत्यम्' इति षष्ठीसमासो बोध्यः । एवं

किम्—भोज्य ओदनः। प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न। ७४० वर्णो वर्णेन। (२—१—६९) समानाधिकरणेन सह प्राग्वत्। कृष्णसारङ्गः। ७४१ कडाराः कर्मधारये (२—२—३८) कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः। ७४२ कुमारः श्रमणादिभिः। (२—१—७०) कुमारी श्रमणा कुमारश्रमणा। इह गणे श्रमणा प्रव्रजिता

---

विग्रहः। उभयोर्गुणवचनतया विशेषणत्वानियमेऽपि तुल्यशब्दस्यैव पूर्वनिपातः। आख्याग्रहणस्य प्रयोजनमाह—सच्छश्वेत इति। सदृशशब्दस्य तुल्यपर्यायत्वादिति भावः। भोज्य ओदन इति। अत्र ओदनशब्दस्य जातिवाचित्वात्तेनायं समासो न भवतीत्यर्थः। ननु तत्समासाभावेऽपि विशेषणसमासो दुर्वार इत्यत आह—प्रतिषेधेति। भोज्यशब्दपूर्वनिपातस्याभयथाप्यविशिष्टतया 'अजात्या' इति पर्युदासवैयर्थ्यापत्तेरिति भावः। वर्णो। शेषपूरणेन सूत्रं व्याचष्टे—समानाधिकरणेनेति। वर्णवाचिना समानाधिकरणेन वर्णवाची समस्यते, स तत्पुरुष इत्यर्थः। कृष्णसारङ्ग इति। सारङ्गश्चित्रवर्णवाची। कृष्णशब्दः कृष्णावयवके लाक्षणिक इति सामानाधिकरण्यम्। कृष्णश्चासौ सारङ्गश्चेति विग्रहः। विशेषणसमासेन सिद्धे इदं प्रपञ्चार्थमेव। यत्तु 'वर्णो वर्णेष्वनेते' इति स्वरविधौ प्रतिपदोक्तत्वादस्यैव ग्रहणार्थमिदम्। तेन सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र 'वर्णो वर्णेषु—' इति स्वरो नेति, तच्चिन्त्यम्, कर्मधारयस्वरप्रकरणे 'वर्णो वर्णेष्वनेते' इति सूत्रस्य पाठेनैव सिद्धेरिति दिक्। कडाराः कर्मधारये। 'उपसर्जनं पूर्वम्' इत्यतः पूर्वमित्यनुवर्तते। कडाराः इति बहुवचननिर्देशात्तदादिग्रहणम्, तदाह—कडारादय इति। 'उपसर्जनं पूर्वम्' इति नियमे प्राप्ते विकल्पोऽयम्। कडारजैमिनिरिति। कडारश्चासौ जैमिनिश्चेति विग्रहः। कुमारः श्रमणादिभिः। कुमारशब्द

---

'परमपूज्य' इत्यादिष्वपि। वर्णो। समानाधिकरणेन वर्णवाचिना वर्णवाचि समस्यत इत्यर्थः। 'विशेषणं विशेष्येण—' इत्यनेनैव सिद्धे पृथग्विधानं 'वर्णो वर्णेष्वनेते' इति पूर्वपदप्रकृतिस्वरो विधीयमानः प्रतिपदोक्तत्वादेतत्समासपूर्वपदस्यैव भवतु नान्यस्येति तदर्थम्। कृष्णसारङ्ग इति। सारङ्गश्चित्रपर्यायः, स च गुणोपसर्जनद्रव्यपरः। कृष्णशब्दोऽपि कृष्णावयवके भाक्तः। एवं च गौणे सामानाधिकरण्ये 'विशेषणं विशेष्येण—' इत्यप्रवृत्तौ समासार्थमपीदमारब्धव्यमित्याहुः। ननु 'तृतीया तत्कृता—' इत्यनेनैवायं समासः सिध्यति सारङ्गत्वस्य कृष्णादिकृतत्वात्। नापि स्वरभङ्गः, 'तत्पुरुषे तुल्यार्थतृतीया—' इत्यनेनैव पूर्वपदप्रकृतिस्वरसिद्धेरिति चेत्। अत्राहुः—कृष्णशुभ्रः हरितशुक्ल इत्याद्यर्थं समासोऽनेनावश्यं विधेयः। नहीह तत्कृतत्वमस्ति। यद्यपि 'विशेषणं विशेष्येण—' इत्यनेन समासः सिध्यति, तथापीष्टः स्वरो न सिध्यति। न च प्रतिपदोक्तसमासाभावेऽपि स्वरः, व्याख्यानाभावादिति वाच्यम्, कृष्णशुक्ल इत्यादेर्व्याख्यानस्य सम्भवादिति। कडारादय इति। बहुवचननिर्देशादिति भावः। आदिपदेन गडुलशाण्डिल्यः, शाण्डिल्यगडुल इत्यादि। एतच्च भाष्ये स्पष्टम्। एवं

---

१ क्वचित्तु '—न्यथा' इति पाठः।

…णीत्यादयः स्त्रीलिङ्गाः पठयन्ते । लिङ्गविशिष्टपरिभाषाया एतदेव ज्ञापकं …यम् । ७५३ चतुष्पादो गर्भिण्या । ( २-१-७१ ) चतुष्पाज्जातिवाचिना …णीशब्देन सह प्राग्वत् । गोगर्भिणी । 'चतुष्पाज्जातिरिति वक्तव्यम्' …वा १३३१ ) । स्वस्तिमती गर्भिणी । ७५४ मयूरव्यंसकादयश्च । ( २-१-७२ ) एते निपात्यन्ते । मयूरो व्यंसकः मयूरव्यंसकः । व्यंसको धूर्तः । …चावाक्चोच्चावचनम् । निश्चितं च प्रचितं च निश्चप्रचम् । नास्ति किञ्चन यस्य …किञ्चनः । नास्ति कुतो भयं यस्य सोऽकुतोभयः । अन्यो राजा राजान्तरम् ।

---

…णादिभिः समानाधिकरणैः समस्यते, स तत्पुरुष इत्यर्थः । कुमारी श्रमणा कुमार…मेति । 'पुंवत्कर्मधारय—' इति पुंवत्त्वम् । श्रमणा परित्यक्तसर्वसङ्गा । ननु सूत्रे …ारशब्दस्य पुंल्लिङ्गस्यैव पाठात् कथमिह स्त्रीलिङ्गस्योदाहरणमित्यत आह इहेति । ननु गणे …लिङ्गानामेव पाठे सूत्रस्य कथं तेषु प्रवृत्तिः । न च लिङ्गविशिष्टपरिभाषयेति वाच्यम्, …सद्भावे प्रमाणाभावादित्यत आह—लिङ्गेति । एतदेवेति । एतदपीत्यर्थः, 'युवा खलति–' …तसूत्रे जरतीग्रहणस्यापि तज्ज्ञापकत्वात् । न हि युवन्शब्दस्य जरतीसामानाधिकरण्यमस्ति । …तुष्पादो गर्भिण्या । 'जातिग्रहणं कर्तव्यम्' इति वार्तिकमभिप्रेत्य आह—चतुष्पाज्जा…ति । गोगर्भिणीति । गर्भिणी चासौ गौश्चेति विग्रहः । विशेष्यस्य पूर्वनिपातार्थमिदं …मम् । जातिरिति किम् ? कालाक्षी गर्भिणी । मयूरव्यंसकादयश्च । एते निपात्यन्त …ति । कृतसमासकार्या निर्दिश्यन्त इत्यर्थः । मयूरव्यंसक इति । व्यंसकश्चासौ …यूरश्चेति विग्रहः । व्यंसको धूर्त इति । अत्र कोषो मृग्यः । गुणवचनत्वाद् व्यंसकशब्दस्य …र्वनिपाते प्राप्ते इदं वचनम् । उच्चावचमिति । उदक्शब्दस्य उच्चेत्यादेशः । …वाक्शब्दस्य अवचादेशश्च । 'उच्चावचं नैकभेदम्' इत्यमरः । निश्चप्रचमिति । …निश्चितशब्दस्य निश्चादेशः । प्रचितशब्दस्य प्रचादेशः । नास्ति किञ्चनेति । चनेत्यव्यय…प्यर्थे । नास्ति किमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः । नञो नकारस्य लोपश्च …निपात्यते । 'न लोपो नञः' इति तु नात्र प्रवर्तते, किंशब्दस्य उत्तरपदत्वाभावात् समासचरम…ण्ड एव उत्तरपदशब्दस्य रूढत्वात् । नास्ति कुत इति । कुतोऽपि भयमस्य नास्तीति विग्र-

---

…देवेति । एवकारः स्फुटसिद्धत्वद्योतनार्थो न त्ववधारणार्थः । 'युवा खलति–' इति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वसंभवात् । न हि युवन्शब्दस्य पुंस्त्वे जरतीसामानाधिकरण्यं संगच्छते । चतुष्पादो । मण्डूकप्लुत्या अत्र 'जातिः' इत्यनुवर्तत इत्याह—जातिवाचीति । जातिः किम्, कालाक्षी गर्भिणी । चतुष्पात्किम्, ब्राह्मणी गर्भिणी । प्रत्युदाहरणे 'विशेषणम्—' इति समासः स्यादेव । गर्भिणीकालाक्षीत्यादिपूर्वनिपाते विशेषः । मयूर । चकारोऽत्रावधारणार्थः । तेन 'परममयूरव्यंसकः' इत्यादि समासान्तरं न भवति । धूर्त इति । एवं च गुणवचनत्वात्पूर्वनिपाते प्राप्ते इदं वचनमारब्धमिति भावः । अन्ये तु मयूर इव व्यंसको मयूरव्यंसक इत्यादौ 'उपमानानि सामान्यवचनैः' इति समासस्यापवादोऽयम् । तेन 'समासस्य' इत्यन्तोदात्तत्वमिह सिध्यति । 'तत्पुरुषे तुल्यार्थ—' इत्युपमानपूर्वपदप्रकृतिस्वरस्योप-

नस्य लोपः स्यादुत्तरपदे । न ब्राह्मणोऽब्राह्मणः । ७५८ तस्मान्नुडचि ।

---

इ—नञो नस्येति । उत्तरपद इति । 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः । ऽशिति सिद्धे लोपवचनम् अकब्राह्मण इति साकच्कार्यमित्याहुः । अब्राह्मण इति । आरोपितत्वं नञर्थः । आरोपितत्वं च ब्राह्मणत्वद्वारा ब्राह्मणेऽन्वेति । आरोपितब्राह्मणत्ववा- बोधः । अर्थाद् ब्राह्मणभिन्न इति पर्यवस्यति । केचित् तु नञ् भिन्नवाची, ब्राह्मणाद्भिन्न र्थ इत्याहुः । तदयुक्तम्, ब्राह्मणाद्भिन्न इत्यर्थे पूर्वपदप्राधान्यापत्तेः । तथा च 'उत्तरपदा- धानस्तत्पुरुष' इति भाष्योद्घोषो विरुध्येत । किं च अते, अतस्मै, अतस्मादित्यादौ सर्वनाम- र्य शीभावस्मायादिकं न स्यात्, तच्छब्दार्थस्य नञर्थं प्रति विशेषणत्वे अप्रधानत्वात् 'संज्ञोप- नीभूतास्तु न सर्वादयः' इत्युक्तेः । तथा अस इत्यादौ 'तदोः सः सावनन्त्ययोः' इति दिन्तर्गतत्यदादिकार्यसत्त्वं च न स्यात् । अनेकमित्यत्र एकवचनानुपपत्तिश्च । एकभिन्नस्य त्वासंभवेन द्वित्वबहुत्वनियमेन च द्विबहुवचनापत्तेः । तथा सति 'अनेकमन्यपदार्थे' इति पद्येत, 'एतत्तदोःसुलोपः—' इत्यत्र अनञ्समासग्रहणं चात्र लिङ्गम् । तद्धि असः शिवः, पः शिव इत्यादौ सुलोपाभावार्थम् । तद्भिन्नः एतद्भिन्नः इत्यर्थे तु तच्छब्दाद्यर्थस्य उप- र्जनतया त्यदाद्यत्वानापत्तौ हल्ङ्यादिलोपस्य दुर्वारत्वात्तद्वैयर्थ्यं स्पष्टमेव । तस्मादु- रपदार्थप्राधान्यं भाष्योक्तमनुसृत्य आरोपितत्वमेव नञर्थ इति युक्तम् । विस्तरस्तु लमनोरमायां शब्दरत्ने मञ्जूषायां च ज्ञेयः । प्राचीनास्तु 'तत्सादृश्यमभावश्च तद- त्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' । इति पठित्वा अब्राह्मणः; पापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोअश्वेभ्यः, अधर्म इत्यु- जहुः । तत्र सादृश्यादिकं प्रकरणादिगम्यमित्याहुः । तस्मान्नुडचि । तच्छब्देन

---

ाह स जहिजोडः । एवं जहि स्तम्बमिति य आह स जहिस्तम्बः । नञ् । इह नलोपो नञः' इत्यत्र विशेषणार्थो ञकारः । तत्फलं च नैकधेत्यत्रलोपः । 'अव्यये ञकुनिपातानाम्' इत्यव्ययपूर्वपदप्रकृतिस्वरार्थं ञकारोच्चारणमित्यन्ये । सुपा सह समस्यत इति । उत्तरपदार्थप्रधानोऽयं समासः । तथा हि आरोपितत्वं नञा ोत्यते । तथा च अब्राह्मणशब्दाद् 'आरोपितो ब्राह्मणः' इति बोधे अर्थाद् 'ब्राह्मण- भिन्नः' इत्यर्थः पर्यवस्यति । अतएवानुपसर्जनत्वादतस्मिन् अस इत्यादौ सर्वनामकार्यं सिध्यति । तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम् । 'एतत्तदोः—' इति सूत्रे अनञ्समासग्रहणं चेह लिङ्गमित्यादि मनोरमायामनुसन्धेयम् । नलोपो नञः । 'नञोऽश्' इति वक्तव्ये नलोपवचनं साकच्कार्थम् । तेन नञोऽकचि अक- ब्राह्मणः, अकनश्व इत्यादि सिद्धमित्याहुः । उत्तरपद इति । 'अलुगुत्तरपदे' इत्य- धिकारादिति भावः । उत्तरपदे किम्, घटो नास्ति पटो नास्ति । नन्वेवमपि 'स्त्रैणार्थः' इत्यत्र नलोपः स्यादिति चेत् । अत्राहुः—उत्तरपदाक्षिप्तपूर्वपदेन । नञं विशेष्य 'पूर्वपदभूतस्य नञः' इति व्याख्यानान्न भवति । 'स्त्रीपुंसाभ्याम्—' इति विहितस्य नञ्प्रत्ययस्यापूर्वपदत्वात् । अतएव चात्र 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषा नोपतिष्ठते । न च प्रत्ययग्रहणे तदन्तग्रहणान्नञ्प्रत्ययान्तस्य

(६-३-७४) लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। अ- भावेऽव्ययीभावेन सहायं विकल्प्यते। 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' 'अद्रुतायामसंहितम्' (वा ११६७) इति च भाष्यवार्तिकप्रयोगात्। तेन अनुपलब्धिः, अविवादः, अविघ्नम् इत्यादि सिद्धम्। 'नञो नलोपस्तिङि क्षे-

---

पूर्वसूत्रावगतो लुप्तनकारो नञ् परामृश्यते। उत्तरपदे इत्यनुवृत्तम् अचेत्यनेन विशेष्- तदादिविधिः। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वात्' इति परिभाषया अचः षष्ठीं प्रकल्पयति। तदाह—लुप्तनकारादिति। अनश्व इति। समासे सति नञो नकारस्य लोपे तत्परिशिष्टाकारस्य नुट्, टकार इत्, उकार उच्चारणार्थः। टित्वादाद्य- इति भावः। नुक् तु न कृतः। ङमुट्प्रसङ्गात्। ननु 'उत्तरे कर्मण्यविघ्नमस्तु' इत्या- विघ्नानामभाव इत्यर्थे नञ्तत्पुरुषे सति परवल्लिङ्गत्वे अविघ्न इति स्यात्। न च अर्था- भावे अव्ययीभावेन तत्सिद्धिरिति वाच्यम्, अव्ययीभावस्य निर्मक्षिकमित्यादौ साव- काशतया परत्वात्तत्पुरुषस्यैव प्रसङ्गादित्यत आह—अर्थाभाव इति। रक्षोति। पस्प- शाह्निकभाष्ये इदं वाक्यम्। रक्षा च ऊहश्च आगमश्च लघु च असन्देहश्च इति द्वन्द्वः। 'परवल्लिङ्गम्—' इति पुंस्त्वम्। अत्र सन्देहाभाव इत्यर्थे असन्देहशब्दस्य असन्देहा इति प्रयोगात् तत्पुरुषो विज्ञायते। अव्ययीभावे रक्षोहागमलघ्वसन्देहमिति स्यात्। अद्रुता- यामसंहितमिति। 'परः संनिकर्षः संहिता' इति सूत्रे पठितमिदं वार्तिकम्। अद्रुता- यां वृत्तौ संहिताभाव इत्यर्थः। अत्र अव्ययीभावे सति असंहितमिति प्रयोगाद् अव्ययी- भावोऽपि अर्थाभावे नञा गम्ये भवतीति विज्ञायते। अन्यथा तत्पुरुषे सति परव- ल्लिङ्गत्वादसंहितेति स्यात्। ततश्च नञा गम्ये अभावे तत्पुरुषाव्ययीभावयोर्विकल्प इति स्थितम्। तेनेति। अनुपलब्धिरित्यत्र अविवाद इत्यत्र च तत्पुरुषः, अविघ्नमित्यत्र अव्ययीभावश्च सिध्यतीत्यर्थः। शब्देन्दुशेखरे तु अन्यथा प्रपञ्चितम्। नञो नलो- पस्तिङि क्षेप इति। 'न लोपो नञः' इति सूत्रस्य वार्तिकमिदम्। नञो नकारस्य

---

पूर्वपदत्वं समवत्येवेति 'प्रत्ययाप्रत्यययोः—' इत्यनुपस्थित एवेति वाच्यम्। 'हृदयस्य हृल्लेख—' इति सूत्रे अणूग्रहणात्पृथग् लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनात्। यद्वा 'अनुर्धनस्तकात्—' 'विभक्तावत्रयमायाम्' इत्यादिनापवा- 'नलोपो नञः' इत्यत्राव्ययमेव नञ् गृह्यते, न तु प्रत्यय इति। तस्मान्नुडचि। 'ङ सि धुट्' इत्यत्रेवाचीति सप्तम्या षष्ठी प्रकल्प्यत इत्याह—अजादेरिति। अचा उत्तरपदविशे- षणाद् 'यस्मिन्विधि—' इति तदादिविधिर्लभ्यत इति भावः। अनश्व इति। नुट् परादि- रपदान्तत्वाद् 'ङमो ह्रस्वात्—' इति ङमुण्न भवति। ननु [illegible] परत्वात्तत्पुरुषः स्यादव्ययीभावस्य निर्मक्षिकादौ सावकाशत्वात्। अन्यथा अनुपलब्धि, अविवाद इति न सिध्येदित्याशङ्क्याह—अर्थाभावेऽव्ययीभावेन सहेत्यादि। अवि- घ्नमिति। यद्यप्यविद्यमाना विघ्ना यस्मिन्निति बहुव्रीहिणा अविघ्नं कर्मेत्यादिप्रयोगाः सिध्यन्ति, तथापि 'उत्तरं कर्मण्यविघ्नमस्तु' इत्यादिप्रयोगा अव्ययीभावं विना स्वरसतो न सिध्यन्तीति भावः। नञो नलोप इति। तिङन्तेन समासाभावादप्राप्ते वचनम्। अपचसीति।

...२९८४) । अपचसि त्वं जाल्म । नैकधा इत्यादौ तु नशब्देन सह 'सुपा' ...६४९) इति समासः । ७५९ नभ्राण्नपान्नवेदानासत्यानमुचिन-नखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । (६-३-७५) पाद् इति शत्रन्तः । वेदा ...सुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः । न मुञ्चतीति ...चः । न कुलमस्य । न खमस्य । न स्त्री पुमान् । स्त्रीपुंसयोः ...कभावो निपातनात् । न क्षरतीति नक्षत्रम् । क्षीयतेः क्षरतेर्वा क्षत्रमिति ...च्यते । न क्रामतीति नक्रः । 'क्रमेर्डः' । न अकमस्मिन्निति नाकः । ७६० ...ऽप्राणिष्वन्यतरस्याम् । (६-३-७७) नग इत्यत्र नञ्प्रकृत्या वा । ...—अगाः पर्वताः । अप्राणिषु इति किम्—अगो वृषलः शीतेन । 'नित्यं ...ा—' (सू ७११) इत्यतो नित्यम् इत्यनुवर्तमाने—७६१ कुगतिप्रादयः । ...-२-१८) एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । ...श्च' (सू २३) इत्यनुवर्तमाने । ७६२ ऊर्यादिच्विडाचश्च । (१-...६१) एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटा-

---

...नः स्यात् तिङि परे निन्दायामिति वक्तव्यमित्यर्थः । अपचसि त्वं जाल्मेति । कुत्सितं ...सीत्यर्थः । अत्र अ इति भिन्नं पदम्, तिङन्तेन समासाभावात् । वार्तिकमिदं प्रसङ्गादुप-...त्तम् । नञ्समानार्थकेन अ इत्यव्ययेनापि सिद्धमिदमिति वार्तिकं विफलमेव । केचित्तु ...मादेव वार्तिकादव्ययेषु अ इत्यस्य पाठः अप्रामाणिक इत्याहुः । ननु नैकधेत्यत्रापि नञ्स-...से 'न लोपो नञः' इति नकारस्य लोपे 'तस्मान्नुडचि' इति नुटि अनेकधेत्येव स्यादित्यत ...ह—नैकधेत्यादौ त्विति । एतदर्थमेव 'नञ्' इति सूत्रे 'न लोपो नञः' इति सूत्रे च ...कारानुबन्धग्रहणमिति भावः । नभ्राण्नपात् । सुगमम् । अनुवर्तमान इति । समास-...घयो वक्ष्यन्त इति शेषः । कुगतिप्रादयः । समस्यन्त इति । स तत्पुरुष इत्यपि ज्ञेयम् । ...त्सितः पुरुष इति । नित्यसमासत्वादस्वविग्रहः । कुत्सितार्थकस्य कु इत्यव्ययस्यैवात्र ...हणम्, न तु पृथ्वीपर्यायस्य, गत्यादिसाहचर्यात् । गतिश्चेत्यनुवर्तमान इति । क्रियायोग ...ति चेति बोध्यम् । ऊर्यादिच्विडाचश्च । च्विडाचौ प्रत्ययौ । ऊरीकृत्येति । ऊरीत्य-...यमङ्गीकारे, तस्य कृत्वेत्यनेन गतिसमासः । समासेऽनञ्पूर्वे क्त्वो ल्यप् । शुक्लीकृत्येति । शुक्लं शुक्लं कृत्वेत्यर्थः । 'कृभ्वस्तियोगे—' इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप्,

---

...त्सितं पचसीत्यर्थः । नशब्देनेति । नञा समासे त्वनेकधेत्येव स्यादिति भावः । ...भ्राट् । सत्सु साधवः सत्याः । 'तत्र साधुः' इति यत् । न सत्या असत्याः । ...असत्या नासत्याः । इह बहुवचनमविवक्षितम् । तेन 'नासत्यावश्विनौ दस्रौ' इति ...द्धम् । नमुचिरिति । 'सर्वधातुभ्य इन्' । 'इगुपधात्कित्' इति कित्त्वान्न गुणः । ...रतेः क्षीयतेर्वेति । 'क्षर संचलने' भ्वादिः । 'क्षि निवासगत्योः' तुदादिः । ...गति । कुशब्दोऽत्राव्ययं गृह्यते, न तु पृथिवीवाचकः, गत्यादिसाहचर्यात् । ...र्यादिच्विडाचश्च । 'उपसर्गाः क्रियायोगे' इत्यतोनुवर्तनादाह—क्रियायोग ...ति । च्विडाचौ कृभ्वस्तियोगे विहितौ तत्साहचर्यादूर्यादीनामपि तत्रैव गतिसंज्ञा ।

( १-४-६३ ) सत्कृत्य । असत्कृत्य । ७६५ भूषणेऽलम् । ( १-४-६४ ), अलंकृत्य । भूषणे किम्—अलं कृत्वौदनं गतः । पर्याप्तमित्यर्थः । 'अनुकरणम्–' ( सू ७६३ ) इत्यादित्रिसूत्री स्वभावात्कृञ्विषया । ७६६ अन्तरपरिग्रहे । ( १-४-६५ ) अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम्-अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः । ७६७ कणेमनसी श्रद्धाप्रतीघाते । ( १-४-६६ ) कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातः अभिलापातिशये वर्तते । मनश्शब्दोऽप्यत्रैव । ७६८ पुरो-

---

विद्यमाने गतिसंज्ञकेस्त इत्यर्थः । सत्कृत्येति । आदरं कृत्वेत्यर्थः असत्कृत्येति । अनादरं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् । भूषणेऽलम् । भूषणे विद्यमानम् अलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । अलंकृत्येति । कटकादिधारणेन परिष्कारं कृत्वेत्यर्थः । कृञ्विषयेति । कृञ्योग एव भवतीत्यर्थः । वस्तुतस्तु संकोचे प्रमाणाभावाद् धात्वन्तरयोगेऽपि त्रिसूत्रीप्रवृत्तिर्युक्ता । अत एव अलं भुक्त्वा ओदनं गत इति वृत्तिकृता प्रत्युदाहृतम् । अन्तरपरिग्रहे । अपरिग्रहे वर्तमानम् अन्तरित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । हतं परिगृह्येति । हत्वा गमनं हतम् अपरिगृह्य परिगृह्य वा भवति । तत्र आद्यमुदाहरणम्, द्वितीयं प्रत्युदाहरणमित्यर्थः । अपरिग्रह इति प्रयोगोपाधिरेव, न तु वाच्यकोटिप्रविष्टम् । कणेमनसी श्रद्धाप्रतीघाते । कणे शब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञकौ स्तः । अत्यन्ताभिलापः श्रद्धा, तस्या निवृत्तिः प्रतीघातः । कणेहत्येति । गतिसमासे क्त्वो ल्यप् । मनोहत्येति । पयः पिबतीत्यनुषज्यते । ननु समासे कृते कणे इति सप्तम्याः कथं न लुगित्यत आह—कणे शब्द इति । ननु श्रद्धाप्रतीघातस्य कथमिहावगतिः, श्रद्धावाचकशब्दाभावात् । मनसो घाते सति कथं वा पयःपानमित्यत आह—अभिलाषातिशय इति । कणेशब्द इत्यनुषज्यते । 'परावरयोगे च' इति सूत्रेण क्त्वा । अभिलापनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः । श्रद्धाप्रतीघाते किम् ? कणे हत्वा गतः । सूक्ष्मस्तण्डुलावयवः कणः, तद्विषये हत्वा गत इत्यर्थः । मनो हत्वा गतः, विषपानादौ मनःप्रवृत्तिं प्रतिबध्य गत

---

प्रयोगो नैव स्यात्, किंतु 'इति खाट्कृत्य' इत्येव स्यादिति भावः । न च 'इति खाट्कृत्य' इति न भवति, इतेः परस्यानुकरणस्य गतिसंज्ञानिषेधादिति वाच्यम्, 'अनितिपरम्' इत्यत्र इतिः परो यस्मात्तद् इतिपरम्, न इतिपरमनितिपरमिति बहुव्रीहिघटितनञ्तत्पुरुषाश्रयणात् । स्यादेतत्—अनुकरणस्येतिशब्दपरत्वे क्रियायोगाभावादगतिसंज्ञा नास्तीति खाडिति कृत्वेति रूपं निर्बाधम्, किमनेनानितिपरग्रहणेनेति चेत्, अत्राहुः—इतिकृत्वेति समुदाय एवायं कृत्वेत्यर्थे वर्तते । तथा च इतिशब्दः क्रियाविशेषकः, इति तद्घटितसमुदायस्य क्रियावाचकत्वादस्त्येव क्रियायोग इति । हतं परिगृह्येति । हत्वा गमनं द्विधा – हतं त्यक्त्वा परिगृह्य चेति । आद्यमुदाहरणम्, द्वितीयं तु प्रत्युदाहरणम् । अपरिग्रह इति च प्रयोगोपाधिः, न तु वाच्यकोटिनिविष्टमिति भावः । कणेहत्येति । अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । तथा च श्रद्धाया अपगमात्तत्प्रतिघातो गम्यते । प्रत्युदाहरणं तु कणे हत्वा गतः । सूक्ष्म-

ऽव्ययम् । (१-४-६७) पुरस्कृत्य । ७६९ अस्तं च । (१-४-६८) अस्त-मिति मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तंगत्य । ७७० अच्छ गत्यर्थवदेषु । (१-४-६९) अव्ययम् इत्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम्-जलमच्छं गच्छति । ७७१ अदोऽनुपदेशे । (१-४-७०) अदःकृत्य अदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम्-अदः कृत्वा अदः कुरु । ७७२ तिरोऽन्तर्धौ । (१-४-७१) तिरोभूय । ७७३ विभाषा कृञि । (१-४-७२) । तिरस्कृत्य, तिरःकृत्य, तिरः कृत्वा ।

---

इत्यर्थः । पुरोऽव्ययम् । पुर इत्यव्ययं गतिसंज्ञकं स्यात् । पुरस्कृत्येति । गति-समासे क्त्वो ल्यप् । अव्ययं किम् ? पुरम्, पुरो, पुरः कृत्वा गतः । अस्तम् च । पूर्वसूत्रा-दव्ययमित्यनुवर्तत इत्याह—मान्तमव्ययमिति । अस्तङ्गत्येति । तिरोधानं प्राप्येत्यर्थः । अव्ययं किम् ? काण्डम् अस्तं कृत्वा । प्रक्षिप्य कृत्वेत्यर्थः । अच्छगत्यर्थवदेषु । गत्यर्थ-धातुषु वदधातौ च प्रयुज्यमानेषु अच्छेत्यव्ययं गतिसंज्ञकं स्यात् । अच्छगत्येति । गतिसमासे क्त्वो ल्यप् । अच्छोद्येति । वदधातोः क्त्वा । गतिसमासे क्त्वो ल्यप् । अच्छेत्यव्ययमाभि-मुख्ये, तद्यथा—वहिरच्छतीति । तदाह—अभिमुखमिति । जलमच्छं गच्छतीति । अत्राच्छशब्दस्य नाव्ययत्वम्, न गतिसंज्ञा, नापि 'प्रादीद्वगतिगाना' इत्यविकृत-निपातसंज्ञा । निपातत्वे सति हि अव्ययत्वात् विभक्तिलुक् स्यादिति भावः । अदो-ऽनुपदेशे । अदश्शब्दः अनुपदेशे गतिसंज्ञः स्यात् । अदःकृत्येति । गतिस-मासे क्त्वो ल्यप् । अमुं यत्र कृत्वेत्यर्थे तु सुब्लुक् च । अदःकृतमिति । 'गतिर-नन्तरः' इति स्वरः फलम् । यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम् । परं प्रतीति । अदः कुर्वित्यादावित्यर्थः । तिरोऽन्तर्धौ । अन्तर्धिः व्यवधानम्, तत्र तिरस् इत्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । तिरोभूयेति । गतिसमासे क्त्वो ल्यप् । व्यवहितो भूत्वेत्यर्थः । विभाषा कृञि । कृञि प्रयुज्यमाने तिरस् इत्यव्ययं गति-संज्ञं वा स्यादित्यर्थः । तिरस्कृत्य तिरःकृत्येति । गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप् । 'तिरसोऽन्यतरस्याम्' इति सत्वविकल्पः । तिरः कृत्वेति । गतित्वाभाव पक्षे सत्वमपि न भवति, तद्विधौ गतिग्रहणानुवृत्तेरित्याहुः । केचित्तु तिरस्कार इति

---

स्तण्डुलावयवः कणः, तस्मिन् हत्वेत्यर्थः । पुरस्कृत्येति । 'पूर्वाधरावराणाम्—' इत्य-सिप्रत्ययान्तोऽयमव्ययम् । 'नमस्पुरसो—' इति विसर्गस्य सः । 'अमुं पुरः पश्यसि' इत्यत्र तु स्थितमित्यध्याहारेण दृशि प्रत्यगतित्वात्सत्वाभावः । अव्ययं किम्, पुरं पुरो पुरः कृत्वा गतः । अस्तम् च । अव्ययमिति किम्, अस्तं कृत्वा काण्डं गतः, क्षिप्त-मित्यर्थः । अच्छमिति । सत्या हि गतिसंज्ञाया निपातसंज्ञाबाधेनाव्ययत्वात्सुब्लुक् स्यादिति भावः । अदःकृत्येति । यदा स्वयमेव पर्यालोचयति 'अदः कृतम्' इति— तदेदमुदाहरणम् । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । प्रत्युदाहरणमिति । अदः कृत्वा अदः कुर्वित्यादीत्यर्थः । तिरोऽन्तर्धौ । अन्तर्धौ किम्, तिरोभूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः । विभाषा कृञि । तिरःकृत्वेति ।

७७४ उपाजेन्वाजे । (१-४-७३)। एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य, अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः । ७७५ साक्षात्प्रभृतीनि च। (१-४-७४) कृञि वा गतिसंज्ञानि स्युः । 'च्व्यर्थ इति वाच्यम्' (वा ११४२) । साक्षात्कृत्य, साक्षात् कृत्वा । लवणंकृत्य, लवणं कृत्वा । मान्तत्वं निपातनात् । ७७६ अनत्याधान उरसिमनसी। (१-४-७५) । उरसिकृत्य, उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य, मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेपणम्, तत्र न । उरसि कृत्वा पाणिं शेते । ७७७ मध्ये पदे निवचने च । (१—४—७६) एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा ।

---

परिभवे प्रयोगदर्शनात् सत्वविधौ गतिग्रहणं नानुवर्तयन्ति । उपाजेऽन्वाजे । उपाजेकृत्येति । गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप् । अन्वाजेकृत्येत्यपि तथैव । उपाजे, अन्वाजे इत्यव्यये दुर्बलस्य बलाधाने वर्तेते । तदाह—दुर्बलस्येति । साक्षात्प्रभृतीनि च । शेषपूरणेन सूत्रं व्याचष्टे—कृञि वेति । साक्षादित्यव्ययम् । च्व्यर्थ इति । अभूततद्भावे गम्ये सतीति वक्तव्यमित्यर्थः । साक्षात्कृत्येति । अप्रत्यक्षं प्रत्यक्षं कृत्वेत्यर्थः । गतित्वपक्षे क्त्वो ल्यप् । तत्र सुब्लुकमाशङ्क्याह—मान्तत्वमिति । लवणम्, उष्णम्, शीतम्, उदकम् आर्द्रम् इति पञ्चानां साक्षात्प्रभृतिगणे मान्तत्वं निपात्यत इत्यर्थः । अनत्याधाने । उरसि मनसि इति विभक्तिप्रतिरूपके अव्यये गतिसंज्ञे वा स्तः अनत्याधाने । उरसिकृत्येति । गतित्वपक्षे क्त्वो ल्यप् । इह अत्याधानं न गम्यत इत्याह—अभ्युपगम्येत्यर्थ इति । मनसिकृत्येति । गतित्वपक्षे क्त्वो ल्यप् । इहापि नात्याधानं गम्यत इत्याह—निश्चित्येत्यर्थ इति । अत्याधानशब्दं विवृण्वन् तस्य प्रयोजनमाह—अत्याधानमुपश्लेषणमिति । संयोग इत्यर्थः । उरसि कृत्वेति । उरसि पाणिं निधाय शेत इत्यर्थः । अत्र पाणिसंश्लेषणावगमान्न गतिसंज्ञेति भावः । मध्ये पदे । गतित्वे तदभावे च त्रयाणामेदन्तत्वं निपात्यते । मध्येकृत्वेति । गतिसमासे क्त्वो ल्यप् । मध्यं कृत्वेत्यर्थः । पदेकृत्येति । गतिसमासे

---

गतित्वाभावपक्षे 'तिरसोऽन्यतरस्याम्' इति सत्वमपि न भवति । तद्विधौ गतिग्रहणानुवृत्तेः । माधवस्तु—पराभवे तिरस्कार इति प्रयोगदर्शनात्सत्वविधौ गतिग्रहणानुवृत्तिं केचिन्नेच्छन्तीत्याह—उपाजेऽन्वाजे । एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते, तदाह—दुर्बलस्येति । साक्षात्प्रभृ । साक्षात् । मिथ्या । अमा । अद्धा । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । गतिसंज्ञासंनियोगेन लवणादीनां पञ्चानां मकारान्तत्वं निपात्यते । प्रादुस् । नमस् । अविस् । इत्यादि । आकृतिगणोऽयम् । साक्षात्कृत्येति । असाक्षाद्भूतं यथा साक्षाद् भवति तथा कृत्वेत्यर्थः । च्व्यन्तेषु तु पूर्वविप्रतिषेधाद् 'ऊर्यादिच्विडाचश्च' इति नित्यैव संज्ञा । तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति । तद्धि पाक्षिकम्, गतिसंज्ञासंनियोगेनेह गणे निपातनात् । भाष्यकृता लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणशब्द आदिश्यते तस्य च संज्ञाविकल्प इत्युक्तम् । उभयथापि त्रैरूप्यं निर्बाधम् । अनत्या । उरसिमनसी-

निवचनेकृत्य, निवचने कृत्वा । वाचं नियम्येत्यर्थः । ७७८ नित्यं हस्तेपाणावुपयमने (१–४–७७) कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य । ७७९ प्राध्वं बन्धने । (१–४–७८) प्राध्वम् इत्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूल्यं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणे प्राध्वं कृत्वा । ७८० जीविकोपनिषदावौपम्ये । (१–४–७९) जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । औपम्ये किम्–जीविकां कृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । अत्र वार्तिकानि । 'प्रादयो

---

क्त्वो ल्यप् । पदं कृत्वेत्यर्थः । निवचनेकृत्येति । वचनाभावं कृत्वेत्यर्थः । तदाह—वाचं नियम्येत्यर्थं इति । वचनस्य अभावो निवचनम् । अर्थाभावे अव्ययीभाव इति भावः । नित्यं हस्ते । शेषपूरणेन सूत्रं व्याचष्टे—कृञीति । हस्ते इति पाणाविति च शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने इति यावत् । हस्तेकृत्य पाणौकृत्येति । कन्यां स्वीकर्तुं पाणिं गृहीत्वेत्यर्थः । एदन्तत्वमौदन्तत्वं चानयोर्निपात्यते । उपयमने किम् ? हस्ते कृत्वा सुवर्णं गतः । अन्यदीयमिति बुद्ध्या दातुं परावृत्त इत्यर्थः । प्राध्वं बन्धने । प्राध्वमिति न द्वितीयान्तमित्याह—प्राध्वमित्यव्ययमिति । बन्धने गम्ये प्राध्वमित्यव्ययं गतिसंज्ञं स्यादित्यर्थः । प्राध्वंकृत्वेति । गतिसमासे क्त्वो ल्यप् । अत्र प्राध्वमिति मान्तमव्ययं बन्धनेन आनुकूल्ये वर्तते, तदाह—बन्धनेनेति । बन्धनग्रहणस्य प्रयोजनमाह—प्रार्थनादिनेति । जीविकोपनिष । उपमैव औपम्यम्, तस्मिन् विषये जीविकाशब्द, उपनिषच्छब्दश्च कृञो योगे गतिसंज्ञौ स्त । जीविकामिवेति । अशनपानादिजीवनोपायो जीविका । तामिव अवश्यं कृत्वेत्यर्थः । जीविकाकृत्येति । गतिसमासे क्त्वो ल्यप् । उपनिषदमिव कृत्वेति । उपनिषद् वेदान्तभागः तामिव रहसि ग्राह्यत्वेन कृत्वेत्यर्थः । उपनिषत्कृत्येति । गतिसमासे क्त्वो ल्यप् । उभयत्रापि सुब्लुक् । तदेवं 'कुगतिप्रादय' इत्यत्र यगतिसमासाः प्रपञ्चिताः । ननु गतिग्रहणेनैव सिद्धे प्रादिग्रहणं व्यर्थमित्यत आह—प्रादिग्रहणमगत्यर्थमिति । सुपुरुष इति । अत्र क्रियायोगाभावादगतित्वेऽपि समासः । सा पूजार्थकत्वेऽपि धातुवाच्यक्रियायोगाभावान्न गतित्वम् । भाष्ये तु 'कुगतिप्रादय' इति सूत्रमपनीय तत्स्थाने 'स्वाङ्स्वतिदुर्गतयः समस्यन्त इति वक्तव्यम्' इत्युक्त्वा 'कुब्राह्मणः, आकडारः, सुब्राह्मणः, अतिब्राह्मणः,

---

विभक्तिप्रतिरूपकौ । मध्ये पदे । 'विभाषा कृञि' इति वर्तते । चकाराद् 'अनत्याधाने' इति च । एषामनत्याधानरूपार्थविशेषे एदन्तत्वमविशेषेण निपात्यते, न तु गतिसंज्ञानियमेन । अनत्याधाने किम्, पदे कृत्वा शिरो नमति । वाचं नियम्येति । निवचनं हि वचनाभावः । अर्थाभावेऽव्ययीभावः । नित्यं हस्ते । उपयमनरूपार्थं एवैनयोरेदन्तत्वमौदन्तत्वं च निपात्यते । हस्तेकृत्येति । परिणीयेत्यर्थः । उपयमने किम्, हस्ते कृत्वा कार्षापणं गतः । स्वीकारमात्रमिति पक्षे तु नाऽयमिति बुद्ध्या परावृत्य दानार्थं गत इति मन्यते । एवं तावद् गतिसमासमुदाहृत्य प्रादिसमासान् वक्तुमारभते । प्रादिग्रहणमिति । सुपुरुष इति । क्रियायोगाभावाद् गतित्वाभावः ।

गताद्यर्थे प्रथमया' (वा १३३५) प्रगत आचार्यः प्राचार्यः। 'अत्यादयः, क्रान्ताद्यर्थे द्वितीयया' (वा १३३६)। अतिक्रान्तो मालामतिमालः। 'अवादयः क्रुष्टाद्यर्थे तृतीयया' (वा १३३७) अवक्रुष्टः कोकिलया अवकोकिलः। 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' (वा १३३८)। परिग्लानोऽध्ययनाय पर्यध्ययनः। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (वा १३३९) निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। 'कर्मप्रवचनीयानां प्रतिषेधः' (वा १३४०) वृक्षं प्रति। ७८१ **तत्रोपपदं सप्तमीस्थम्।** (३-१-९२) सप्तम्यन्ते पदे 'कर्मणि-' (सू २९१३)

---

दुर्ब्राह्मणः, दूरीकृत्य' इत्युदाहृतम्। स्वती पूजायाम्, दुर्निन्दायाम्, आङीषदर्थे कुः पापार्थे इति सौनागव्याकरणवचनम् इति भाष्ये स्पष्टम्। **अत्र वार्तिकानीति।** 'प्रादयो गताद्यर्थे समस्यन्त इति वक्तव्यम्' इति वार्तिकं पठित्वा तत्र व्यवस्थापकानि पञ्च वार्तिकानि सौनागव्याकरणसिद्धानि भाष्ये यानि पठितानि तानि प्रदर्श्यन्त इत्यर्थः। **प्रादय इति।** गताद्यर्थे विद्यमानाः प्रादयः समस्यन्त इत्यर्थः। **प्रगत आचार्य इति।** प्रेत्यस्य विवरणं गत इति, गत आचार्य इत्येव अस्वपदविग्रहः, नित्यसमासत्वात्। अभिगतो मुखम् अभिमुखः, प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि। **अत्यादय इति।** क्रान्ताद्यर्थे अत्यादयः समस्यन्त इत्यर्थः। **अतिक्रान्तो मालामिति।** अतिशब्दः क्रान्ते वर्तते। क्रान्तो मालामित्यस्वपदविग्रहः। तत्र क्रमुधातोरतिक्रमणमर्थः। **अतिमाल इति।** 'एकविभक्ति च-' इति मालाशब्दस्य उपसर्जनत्वाद् 'गोस्त्रियोः' इति ह्रस्वः। **अवादय इति।** क्रुष्टाद्यर्थे अवादयः समस्यन्त इत्यर्थः। **अवकोकिल इति।** कोकिलया आहूत इत्यर्थः। **पर्यादय इति।** ग्लानाद्यर्थे पर्यादयः समस्यन्त इत्यर्थः। अध्ययनाय अध्ययनार्थम्, तेन श्रान्त इत्यर्थः। परिरत्र ग्लाने वर्तते। **निरादय इति।** क्रान्ताद्यर्थे निरादयः समस्यन्त इत्यर्थः। **निष्कौशाम्बिरिति।** अतिमालवद् ह्रस्वः। निरित्यव्ययं निर्गमने वर्तते। **कर्मप्रवचनीयानां प्रतिषेध इति।** वार्तिकमेतत्। **वृक्षं प्रतीति।** 'लक्षणेत्थम्-' इति कर्मप्रवचनीयत्वान्न प्रादिसमासः। इदं तु वार्तिकं भाष्ये प्रत्याख्यातम्। अथोपपदसमासं वक्ष्यन्नुपपदसंज्ञामाह--**तत्रोपपदं सप्तमीस्थम्।** अधिकारोऽयम्। सप्तमीति तदन्तग्रहणम्। सप्तम्यन्ते पदे वाच्यवाचकभावसंबन्धेन तिष्ठतीति सप्तमीस्थम्। सप्तम्यन्तवाच्यमिति यावत्। धातोरित्यधिकारसूत्रादुत्तरसूत्रमिदम्। ततश्च तदधिकारान्तर्गतेषु 'कर्मण्यण्' इत्यादिसूत्रेषु यत्सप्तम्यन्तमुच्चारितं तदेव इह विवक्षितम्। एवं च तदुदाहरणे कुम्भं करोति कुम्भकार इत्यत्र सप्तम्यन्तवाच्यं कुम्भादीति

---

अव्यवस्थया समासप्रसक्तौ व्यवस्थाप्रवचनानि पठ्यन्ते। **प्रादय इति।** आदिशब्द उभयत्र प्रकारे। तेन दुराचारः पुरुषो दुष्पुरुष इत्यादि सिद्धम्। **प्रगत आचार्य इति।** अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासतां च दर्शयति। एवं प्रगतः पितामहः प्रपितामहः। प्रमातामह इत्यादि। **अत्यादय इति।** आदिपदादभिगतो मुखमभिमुखः। उद्गतो वेलामुद्वेलः। प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि सिद्धम्। **अतिमाल इति।** 'गोस्त्रियोः-' इति ह्रस्वः। **अवादय इति।** आदिपदात् परिणद्धो वीरुधा

इत्यादौ वाच्यत्वेन स्थितं कुम्भादि, तद्वाचकं पदमुपपदसंज्ञं स्यात्। तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात्। ७८७ उपपदमतिङ्। (२-२-१९) उपपद

---

पर्यवसन्नम्। कुम्भादेश्च उपपदसंज्ञाया प्रयोजनाभावात्तद्वाचकपदेषु विश्राम्यति। तथा च धातोरित्यधिकारान्तर्गते कर्मणीत्यादिसूत्रे यत्सप्तम्यन्तं कर्मणीत्यादि तद्वाच्यं यत् कुम्भादि तद्वाचकं पदम् उपपदसंज्ञं स्यादित्यधिकृतं वेदितव्यमित्यर्थः फलति। तदाह—सप्तम्यन्ते पद इत्यादिना। तत्र 'धातोः कर्मणः समानकर्तृकात्—' इति, 'धातोरेकाचो हलादेः—' इति 'धातोः' इति च क्रमेण त्रयो धात्वधिकाराः। तत्र प्रत्यासत्त्या तृतीयधात्वधिकारस्थ-सप्तम्यन्तस्यैव ग्रहणाद् 'धातोरेकाच—' इत्यधिकारे 'च्लि लुङि' इत्यत्र सप्तम्यन्तं न गृह्यते। अन्यथा कर्मणीत्यादाविव लुङन्ते अभूदित्यादावुपपदे धातोः च्लिरित्यर्थः स्यात्। ननु तत्रेति व्यर्थम्, तृतीयधात्वधिकारस्य प्रवृत्तत्वादेव ग्रहणसम्भवादित्याशङ्क्याह—तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यादिति। अयमाशयः। तत्रेति भिन्नं वाक्यं क्रमव्यत्यासेन योज्यम्। सप्तमीस्थमुपपदसंज्ञं स्यात्। तत्र—तस्मिन्सति इति चाधिकृतं वेदितव्यमिति। तथा चोपपदे सति वक्ष्यमाणः प्रत्ययः स्यादिति तत्रेत्यस्यार्थः फलति। तथा च 'कर्मण्यण्' इत्यत्र इदं सूत्रमुपस्थितम्। कर्मणीति सप्तम्यन्तं प्रथमान्तत्वेन विपरिणम्यते। सप्तमीनिर्देशस्तु उपपदसंज्ञाप्रवृत्त्यर्थः। धातोरण् स्यात् कर्त्रर्थे, कर्मवाचकं तु कुम्भादिपदम् उपपदसंज्ञं प्रत्येतव्यम्, तस्मिन्नुपपदे सत्येव अण् स्यादिति फलति। तस्मिन् सत्येवाण् स्यादित्यभावे तु कार इत्येवं केवलादपि धातोः कर्त्रर्थे अण्प्रत्ययः स्यात्।

---

परिवीरुत्। सन्नद्धो वर्मणा सवर्मेति। पर्यादय इति। आदिपदादुद्युक्तः सङ्ग्रामाय उत्सङ्ग्रामः। अध्ययनायेति। तादर्थ्ये चतुर्थी। गुरुकुलवासादिना परिग्लानोऽध्ययनार्थमित्यर्थः। निरादय इति। आदिपदादुत्क्रान्तः कुलादुत्कुलः। निर्गतमङ्गुलिभ्यो निरङ्गुलम्। प्रतिषेध इति। 'कुगतिप्रादयः' इति प्रसक्तसमासस्य वक्तव्यः प्रतिषेधः, स च 'सुराजा, अतिसखा' इति भाष्योदाहरणात्स्वतिभिन्नानामेव कर्मप्रवचनीयानामित्यर्थः। वृक्षं प्रतीति। 'लक्षणेत्थम्भूता—' इति कर्मप्रवचनीयत्वविधिसामर्थ्यादिह समासो नेति चेत्, तर्हि अपिस्तुतमित्युदाहार्यम्। 'अपि स्तुयाद्विष्णुम्' इत्यादौ 'अपिः पदार्थसम्भावना—' इत्यस्य सावकाशत्वात्स्वरे विशेषश्चेत्याहुः। तत्रोपपदम्। सप्तमीस्थमित्येतद्व्याचष्टे—सप्तम्यन्त इत्यादिना तद्वाचकं पदमिति। एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते। अत एव संज्ञाविधावपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्यते। 'धातोः' इति पृथगधिकारबलात् 'सन्निहिते धात्वधिकारे' इति लभ्यते। तेन 'च्लि लुङि' इत्यस्य लुङन्ते अभूदित्यादावुपपदे धातोश्च्लिरित्यर्थो न भवति। तत्रग्रहणं व्याचष्टे—तस्मिन् सत्येवेति। उपपदे सत्येवेत्यर्थः। तत्रग्रहणाभावे तु 'घः कर्मणि ष्ट्रन्' इत्यादाविव 'कर्मण्यण्' इत्यादावपि कर्मण्यभिधेये अणित्यर्थः स्यात्। तथा च कर्त्र्यण् प्रत्ययो न स्यात्। किं च सप्तम्यन्तनिर्देशस्य उपपदसंज्ञार्थतया चरितार्थत्वात् केवलादपि धातोः कर्त्र्यण्प्रत्ययः सम्भाव्येत, कृते तु तत्रग्रहणे कुम्भाद्युपपदस्य प्रत्ययोत्पत्तौ निमित्तत्वप्रतीत्या केवलादण्प्रत्यय-

सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । अतिङ् किम् । मा भवान् भूत् । 'माङि लुङ्' (सू २२१९) इति सप्तमीनिर्देशान्माङुपपदम् ।

---

कर्मणीति सप्तम्यन्तनिर्देशस्तु कुम्भकार इत्यादौ उपपदसंज्ञा प्रापय्य 'उपपदमतिङ्' इति नित्यसमाससंपादनेन कुम्भ इत्यस्य कार इत्यस्य च साधुत्वप्रापणार्थतया चरितार्थः । तस्मिन्नुपपदे सत्येवाण् स्यादित्युक्ते तु कुम्भाद्युपपदस्य अण्प्रत्ययोत्पत्तौ निमित्तत्वावगमान्न केवलादण्प्रत्ययः, उपपदसंज्ञायाः प्रत्ययविधिसंनियोगशिष्टत्वलाभात् । 'घः कर्मणि ष्ट्रन्' 'भुवो भावे' इत्यादौ सप्तम्यन्तमर्थनिर्देशपरमेव, व्याख्यानादिति भाष्यकैयटादिषु स्पष्टम् । उपपदमतिङ् । सुबन्तमिति । 'सुबामन्त्रिते' इत्यतस्तदनुवृत्तेरिति भावः । समर्थेनेति । प्रथमान्तं समर्थग्रहणं तृतीयान्ततया विपरिणम्यत इति भावः । अतिङन्तश्चायं समास इति । सूत्रे तिङिति तदन्तग्रहणमिति भावः । समासः तिङन्तघटितो न भवतीत्यर्थः । अतिङ् किम् ? कारको व्रजति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति व्रजतावुपपदे कृञो ण्वुल्, अकादेशः । उपपदं समर्थेनेत्येतावत्युक्ते इहाप्युपपदसमासः स्यात् । अतः अतिङ्ग्रहणम् । नचैवं सुबित्यनुवृत्तेः प्रयोजनाभावः इति वाच्यम्, चर्मकार इत्यत्र नलोपार्थकत्वात् । उपपदमतिङन्तं समर्थेन समस्यत इति व्याख्याने तु सुबिति नानुवर्तेत । ततश्च चर्मकार इत्यत्र नलोपो न स्यादिति भावः । कुम्भमिति । कुम्भं करोतीत्यर्थे 'कर्मण्यण्' इति कर्मीभूतकुम्भवाचकपदे उपपदे कृञ्धातोः कर्तरि अण्प्रत्यये 'अचो ञ्णिति' इति वृद्धौ रपरत्वे कारशब्दः । तेन कुम्भशब्दस्य समासे कुम्भकारशब्द इत्यर्थः । ननु कुम्भं करोतीति कथं विग्रहप्रदर्शनम्, अतिङन्तः समास इत्युक्तत्वादित्यत आह—कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यमिति । लोके प्रयोगानर्हत्वमलौकिकत्वम् । 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्यरीत्या अलौकिकविग्रहवाक्य एव समासप्रवृत्तिः । कुम्भं करोतीति तदर्थप्रदर्शनमात्रमिति भावः । कुम्भ अम् कार इत्यपपाठः, कृद्योगे षष्ठ्या विधानात् । मा भवान् भूदिति । अत्र भूदिति तिङन्तेन माङः समासनिवृत्त्यर्थमतिङ्ग्रहणमिति भावः । भवानिति पदं तु समासाभावसूचनाय मध्ये प्रयुक्तम् । ननु माङः तृतीयधात्वधिकारे सप्तमीनिर्दिष्टत्वं तु अदृष्टम्, येन तस्य उपपदत्वात् समासः प्रसज्यत इत्यत आह—माङिति । ननु अतिङ्ग्रहणं व्यर्थम्, मा भवान् भूदित्यत्र सुपेत्यनुवृत्त्यैव समासनिवृत्तिसंभवादित्यत

---

शङ्कैव नास्ति । एवं स्थिते 'घः कर्मणि—' इत्यादौ क्वचिदर्थग्रहणं व्याख्यानादित्याहुः । अन्ये तु 'तत्रोपपदम्—' इत्यस्य 'कर्मण्यण्' इत्यादेश्चैकवाक्यतया प्रवृत्तावुपपदसंज्ञाया निर्विषयत्वापत्तेस्तत्रग्रहणं विनापीष्टं सिद्ध्यत्येवेत्याहुः । उपपदमतिङ् । समर्थेनेति । तेन महान्तं कुम्भं करोतीत्यादौ नातिप्रसङ्गः । अतिङन्तश्चेति । सुबिति तु अनुवर्तत एवेति अतिङन्तमिति नोक्तमिति भावः । कुम्भ असिति । अमिति तु नोक्तम्, कृद्योगे षष्ठीविधानात् । अतिङ् किमिति । 'सुपा' इत्यधिकारात्किमनेनेति प्रश्नः । इतरो वक्ष्यमाणं ज्ञापकं मनसि निधाय प्रत्युदाहरति—मा भवानिति । समासाभावसूच-

अतिङ्ग्रहणं ज्ञापयति सुपा इत्येतन्नेहानुवर्तत इति । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते । सुपा इति च निवृत्तम् । तथा च 'गति-कारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' (प ७६) इति सिद्धम् । व्याघ्री । अश्वक्रीती । कच्छपी । ७८३ अमैवाव्ययेन । (२-२-२०) अमैव

---

आह—अतिङ्ग्रहणमिति । एवं च उपपदम् असुबन्तेन समस्यत इति फलितम् । गतिसमासोऽप्यसुबन्तेनेत्याह—पूर्वसूत्र इति । उत्तरसूत्रात्पूर्वसूत्रे अनुवृत्तिरपकर्षः । 'कुप्रादयः' इति 'गतिः' इति च योगो विभज्यते । कुप्रादयः सुबन्तेन समस्यन्ते । गतिस्तु समर्थेन समस्यते । अतिङन्तश्च समास इति व्याख्येयमिति यावत् । ततः किमित्यत आह—तथा चेति । गतिकारकोपपदानां कृदन्तैः सह सुबुत्पत्तेः प्राक् समासो वक्तव्य इति प्राचीन-व्याकरणात् सिद्धं भवतीत्यर्थः । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथाप्येकदेशानुमति-द्वारा प्राचीनपरिभाषेयं सिध्यति । अथ परिभाषायाः फलं दर्शयितुं गतिसमासमुदाहरति—व्याघ्रीति । व्याजिघ्रतीति व्याघ्री । व्याङ्पूर्वाद् घ्रातेः 'आतश्चोपसर्गे' इति कः, 'आतो लोप इटि च' इत्याल्लोपः । 'पाघ्राध्माधेट्दृशः शः' इति तु न भवति, 'जिघ्रतेः संज्ञायां नेति वाच्यम्' इति निषेधात् । आङा घ्रशब्देन गतिसमासः । व्याघ्रशब्देन वि गतिसमासः । तत्र यदि घ्रशब्दस्य सुबन्तत्वमपेक्ष्येत तर्हि ङीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात् स्वार्थद्रव्यलिङ्ग-सङ्ख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्य 'कुत्सिते' इति सूत्रस्थभाष्यदर्शितस्य 'ङ्याप्प्रातिप-दिकात्' इत्यत्र अस्माभिः प्रपञ्चितत्वात् । ततश्च सुबुत्पत्तये लिङ्गसङ्ख्याकारक क्रमेण अपेक्ष्य-मिति प्रथमं लिङ्गसंयोगे सति अदन्तत्वात् टाप् स्यात् । न तु जातिलक्षणङीप्, घ्रशब्द-मात्रस्य जातिवाचित्वाभावात् । ततश्च घ्राशब्देन सुबन्तेन समासे सति व्याघ्राशब्दस्य

---

नाद् भवानिति मध्ये प्रयुक्तम् । पूर्वसूत्र इति । 'कुप्रादयः गतिः' इति योगं विभज्य 'कुप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते, गतिस्तु सुबन्तोऽतिङन्तेन समस्यते' इति व्याख्येय-मित्यर्थः । तथा चेति । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः तथापि त्रिनयविष-यिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः । कारकांशे तु 'कर्तृकरणे कृता—' इति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरमायां स्थितम् । प्रागिति । कृदन्ताधारमपदात् सुबुत्पत्तेः पूर्वं समासः इत्यर्थः । प्रथमान्तसुब्ग्रहणं त्विहानुवर्तत एव । तेन राजदर्शीत्यादौ पूर्वपदं नगणादिकार्यं सिद्ध्यति । परिभाषा-फलं दर्शयन् गतिमुदाहरति—व्याघ्रीति । व्याजिघ्रतीति व्याघ्री । 'आतश्चोपसर्गे' इति कः । 'पाघ्राध्माधेट्—' इति शस्तु संज्ञायां न भवति, व्याघ्रादिभिरिति निर्देशादिति वक्ष्यते । व्याङ्घ्रशब्देन गतिसमासः । यदि घ्रशब्दस्य सुबन्ततामपेक्षेत, तर्हि सुबुत्पत्तये सङ्ख्यापेक्षेत । तत्र प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यं न तु ङीपा । घ्रशब्दमात्रस्य जातिवाचित्वाभावात्, ततो घ्रशब्देन समासे इत्यदन्तत्वाज्जातिलक्षणो ङीप् न स्यादिति भावः । यद्यप्युपपदत्वेनाप्येत-त्सिद्धम्, तथापि गतिग्रहणमाङा घ्रशब्देन समासे पश्चादाघ्रशब्देन विशब्दस्य समासा-र्थमावश्यकमेव । आङ्पूर्वाद्घ्रातेः कप्रत्ययविधानादाङ्युपपदसंज्ञाभ्युपगमेऽपि विशब्दे

तुल्यविधान' यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम् । नेह—'काल-

---

अदन्तत्वाभावाद् जातिलक्षणो ङीष् न स्यादिति भावः । यद्यप्युपपदत्वेनाप्येतत्सिद्धम्, तथापि गतित्वसंभवमात्रेणेदमित्याहुः । वस्तुतस्तु आङो घ्राशब्देन उपपदसमासः, 'आतश्चोपसर्गे' इति सप्तमीनिर्देशात् . येस्तु आघ्राशब्देन गतिसमास इति तदंशे गतिसमासोदाहरणमित्याहुः । अथ कारकसमासमुदाहरति—अश्वक्रीतीति । अश्वेन क्रीतेति विग्रहे 'कर्तृकरणे कृता–' इति समासः । 'क्रीतात्करणपूर्वात्' इति ङीष् । सुबन्तेन समासे तु उक्तरीत्या पूर्वं टापि अदन्तत्वाभावाद् ङीष् न स्यादिति भावः । उपपदसमासमुदाहरति—कच्छपीति । कच्छः तीरम्, तेन तस्मिन् वा पिबतीति कच्छपी ।' सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागात्, कः उपपदसमासः तस्य सुबन्तापेक्षायाम् उक्तरीत्या टावेव स्यात्, न तु जातिलक्षणङीषिति भावः । **अमैवाव्ययेन** । अमैवेत्यनन्तरं तुल्यविधानमित्यध्याहार्यम् । 'तुल्यार्थैरतुलोपमाभ्याम्–' इति तृतीया । **अमैव तुल्येति** । अम्प्रत्ययमात्रविधायकशास्त्रेण अमैव सह यस्य उपपदसंज्ञा विधीयते तदुपपदमव्ययेन समस्यत इति यावत् । पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमित्याह—**तदेवेति** । विवरणवाक्ये द्वितीय एवकारो नियमलभ्यः, न तु सूत्रस्थः, तस्य अप्राप्ते अमा तुल्यविधानत्वे अवधारणार्थत्वात् । **स्वादुंकारमिति** । स्वादु कृत्वेत्यर्थः । ओदनं भुङ्क्त इति शेषः । 'स्वादुमि णमुल्' इति णमुल्, स्वादुशब्दस्य मान्तत्वं निपातनात् । 'कृन्मेजन्तः' इत्यव्ययत्वम् ।

---

तदनभ्युपगमादिति बोध्यम् । कारकमुदाहरति—**अश्वक्रीतीति** । अश्वेन क्रीता । 'कर्तृकरणे कृता–' इति समासः । 'क्रीतात्करणपूर्वात्' इति ङीष् । सुबन्तेन समासे तु टापा भाव्यमित्यदन्तत्वाभावात् 'क्रीतात्करण–' इत्ययं ङीष् न स्यादिति ज्ञेयम् । उपपदमुदाहरति—**कच्छपीति** । कच्छेन पिबतीति कच्छपी । 'सुपि' इति योगविभागात्कः । इहापि समासस्य सुबन्तापेक्षायां टावेव स्यान्न ङीषित्यादिव्याघ्रीत्यत्रेव बोध्यम् । प्राचा तु 'उपपदमतिङन्तं समस्यते' इत्युक्तम्, तदसत् । तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्यापत्त्या राजदर्शी चर्मकार इत्यादौ नलोपो न स्यादपदान्तत्वात् । घटितेत्यादौ 'अतो गुणे' इति पररूपं च स्यात् । स्यादेतत्—कच्छेन साधनेन पिबतीत्यर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्यासाधारणोदाहरणमिति चेत्, एवं तर्हि मापवापिणीत्युदाहर्तव्यम् । 'सुप्यजातौ–' इति णिनौ कृते मापोपपदस्य कृदन्तेन समासे 'प्रातिपदिकान्त–' इत्यादिना पूर्वपदस्थान्निमित्तात्परस्य समासप्रातिपदिकान्तनकारस्य णत्वं सिद्ध्यति । सुबन्तेन समासे त्वन्तरङ्गत्वान्नान्तलक्षणे ङीपि पश्चाद्वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्वं न स्यादित्येके । अन्ये तु कच्छेन हेतुना पिबतीत्यर्थविवक्षायां कच्छस्याकारकत्वात्कच्छपीत्युपपदस्योदाहरणं सम्यगेवेत्याहुः । **अमैवाव्ययेन** । पूर्वेण सिद्धे नियमार्थमिदम् । **तुल्यविधान-मेति** । एतच्चाध्याहारेण लभ्यम् । **तदेवेति** । यस्मिन्नुपपदे येन वाक्येन अमेव विहितस्तदेवोपपदमव्ययेन समस्यते नान्यदित्यर्थः । नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः । **स्वादुंकारमिति** । 'स्वादुमि णमुल्' अव्ययेनेति किम्, कुम्भ-

समयवेलासु तुमुन्' (सू ३१७९)। कालः समयो वेला वा भोक्तुम्। अमैवेति किम्—अग्रे भोजम्—अग्रे भुक्त्वा। 'विभाषाग्रेप्रथमपूर्वेषु' (सू ३३४५) इति क्त्वाणमुलौ। अमा चान्येन च तुल्यविधानमेतत्। ७८४ तृतीयाप्रभृतीन्यन्यतरस्याम्। (२-२-२१) 'उपदंशस्तृतीयायाम्' (सू ३३६८) इत्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते। मूलकेनोपदंशं भुङ्क्ते—मूलकोपदंशम्। उच्चैःकारम्। ७८५ क्त्वा च। (२-२-२२)

तदेवेति नियमस्य प्रयोजनमाह—नेहेति। उपपदसमास इति शेषः। भोक्तुमिति। यद्यपि 'कालसमयवेलासु—' इति सप्तमीनिर्देशात् कालसमयवेलानामुपपदत्वम्, तथापि कालादीनामुपपदसंज्ञा तुमुना तुल्यविधानैव, न त्वमा। अत एव कालादीनामुपपदत्वेऽपि न समास इत्यर्थः। अमैवेति किमिति। अमैवेत्येवकारः किमर्थ इति प्रश्नः। अमा चान्येन चेति। अम्प्रत्ययेन क्त्वाप्रत्ययेन च सह उपपदसंज्ञा अग्रेप्रथमपूर्वशब्दानां विहिता, ततश्च उपपदत्वस्य अमैव तुल्यविधानत्वाभावाद् न उपपदसमास इति भावः। तृतीयाप्रभृतीन्यन्यतरस्याम्। तृतीयाशब्देन 'उपदंशस्तृतीयायाम्' इत्यारभ्य 'अन्वच्यानुलोम्ये' इत्यन्तसूत्रोपात्तान्युपपदानि विवक्षितानि। अमेति, अव्ययेनेति चानुवर्तते, एवकारस्तु नानुवर्तते, अस्वरितत्वात्। अमेत्येतदव्ययविशेषणम्। तदाह—उपदंशस्तृतीयायामित्यादिना। मूलकेन उपदंशं भुङ्क्ते मूलकोपदंशमिति। 'उपदंशस्तृतीयायाम्' इति णमुल्। अमैव तुल्यविधानत्वात्। पूर्वसूत्रेण नित्यं[1] प्राप्ते विकल्पोऽयम्। ननु मूलकेनेत्यस्य भुङ्क्त इत्यनेनैवान्वयाद् उपदंश इत्यनेनान्वयादसामर्थ्यात् कथमिह समास इति चेत्, मैवम्—उपदंशनक्रियां प्रति हि मूलकस्य आर्थिकं कर्मत्वमादाय सामर्थ्यमुपपाद्यम्। तृतीया तु प्रधानक्रियानुरोधात् परत्वाच्चोपपाद्येत्यन्यत्र विस्तरः। उच्चैःकारमिति। उच्चैः कृत्वेत्यत्र तु 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ'। तत्र उच्चैःकारमित्यत्र उपपदत्वस्य 'अमैव' तुल्यविधानत्वाभावाद् 'अमैवाव्ययेन' इत्यप्राप्ते अनेन विकल्पः। समासपक्षे 'गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरः आद्युदात्तत्वम्। असमासपक्षे तु उच्चैरिति फिट्सूत्रेण अन्तोदात्तत्वमिति फले भेदः। अमन्तेनेति किम्? पर्याप्तो भोक्तुम्। 'पर्याप्तिवचनेषु' इति तुमुन्। क्त्वा च। तृतीयाप्रभृतीनीति पूर्वसूत्रमनुवर्तते। क्त्वेति तृतीयार्थे प्रथमा। टाया 'सुपां सुलुक् पूर्वसवर्ण—' इति पूर्वसवर्णदीर्घ इत्यपरे। तदाह—तृतीयेति। ननु 'उपदंशस्तृतीयायाम्' इत्यतः प्रागेव समानकर्तृकयोरिति क्त्वाविधेः

प्रकारः। असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानं तदेव केनचित्समर्थेन समस्यते। तथा सति 'स्वादुंकारः' इत्यत्रैव समासः स्यात् न तु कुम्भकार इत्यत्र। अथ पूर्वसूत्रवैयर्थ्यमेव, अव्ययविषयकनियम इति चेत्, तर्हि अमन्तविषयक एव किं न स्यात्, 'अमन्तेन यः समासः सोऽमैव तुल्यविधानस्य' इति। तथा चाग्रेभोजमित्यत्र समासो मा भूत्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः। तदेवेति किम्, कालो भोक्तुम्, समयो भोक्तुम्। अमैवेत्येवकारेणामा चान्येन च तुल्यविधानस्योप-

1 'नित्ये' इति क्वचित् पाठः।

तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते। उच्चैः कृत्य, उच्चैः कृत्वा। 'अव्ययेऽयथाभिप्रेत—' (सू ३३८१) इति क्त्वा। तृतीयाप्रभृतीनीति किम्—अलं कृत्वा, खलु कृत्वा। ७८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः। (५-४-८६) संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु। निर्गतमङ्गुलिभ्यो निरङ्गुलम्।

---

पाठात् कथमुच्चैः कृत्वेत्युदाहरणमित्यत आह—अव्ययेऽयथेति। 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति सूत्रेणेत्यर्थः। अलं कृत्वेति। 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इत्येतद् 'उपदंशस्तृतीयायाम्' इत्यतः पूर्वमेव पठितम्। अतः तद्विहितक्त्वो मान्तेन सह समासाभावाद् न ल्यबिति भावः। इत्युपपदसमासाः।

अथ तत्पुरुषेषु असाधारणसमासान्तान् वक्तुमुपक्रमते—तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः। 'अच्प्रत्यन्ववपूर्वात्—' इत्यतः अजित्यनुवर्तते, समासान्त इत्यधिकृतम्। तेन समासस्य अन्तावयव इति लभ्यते। प्रत्ययः परश्च इत्यधिकाराद् अच्प्रत्ययस्य तत्पुरुषात् परत्वेऽपि तस्य तदवयवत्वाद् अङ्गुलेरिति अवयवषष्ठी। अङ्गुलेरिति तत्पुरुषविशेषणम्, तदन्तविधिः। तदाह—संख्याव्ययादेरिति। संख्या च अव्ययं च संख्याव्यये, ते आदी यस्येति विग्रहः। द्व्यङ्गुलमिति। 'तद्धितार्थे—' इति द्विगुः। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' 'प्रमाणे लः' 'द्विगोर्नित्यम्' इति लुक्। द्व्यङ्गुलिशब्दादचि तस्य तद्धितत्वात्तस्मिन् परे 'यस्येति च' इति इकारलोपः। निरङ्गुलमिति।

---

पदस्य समासनिवारणेऽपि तुमुना तुल्यविधानस्य स्यादेव, अतस्तन्निवारणाय तदेवेत्युक्तम्। तृतीयाप्रभृतीन्यन्यतरस्याम्। उभयत्र विभाषेयम्। अमैव तुल्यविधानस्य प्राप्तेऽमा चान्येन च तुल्यविधानस्याप्राप्ते चारम्भात्। प्राप्ते यथा—'उपदंशस्तृतीयाम्' मूलकेनोपदंशं। मूलकोपदंशम्। अप्राप्ते यथा—'अव्ययेऽयथाभिप्रेताख्यान—' इति क्त्वाणमुलौ। उच्चैःकारम्। इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः 'आदिर्णमुल्यन्यतरस्याम्' इत्याद्युदात्तत्वम्। असमासे तु उच्चैरित्यन्तोदात्तत्वम्। 'उदि चेर्डैसिः' इति व्युत्पत्तिपक्षे प्रत्ययस्वरस्य, अव्युत्पत्तिपक्षे तु 'फिषः' इत्यस्य च प्रवृत्तेरित्याहुः। मनोरमायां तु उच्चैरित्यन्तोदात्तस्वरादिषु तथा पाठादिति स्थितम्। अमेत्यनुवर्तते इत्याह—अमन्तेनेति। तेनेह न—पर्याप्तो भोक्तुम्। 'पर्याप्तिवचनेषु—' इति तुमुन्। क्त्वा च। क्त्वेति तृतीयान्तम्। 'आतः' इति योगविभागादालोपः, 'क्त्व स्कन्दिस्यन्दोः' इतिवदिति हरदत्तः। तन्न। सवर्णदीर्घेणापि तृतीयान्तत्वोपपत्तेः। अलं कृत्वेति। 'अलंखल्वोः प्रतिषेधयोः—' इति सूत्रस्य 'उपदंशस्तृतीयायाम्' इत्यस्मात्पूर्वत्वान्नेह समासः। तत्पुरुषे असाधारणान्समासान्तानाह—तत्पुरुषस्येति। अलोन्त्यविधिं बाधित्वा 'प्रत्ययः' 'परश्च' इति 'परत्वात्तत्पुरुषात्पर एवाच्प्रत्ययो भवति। यथा गापोष्टकः कित्त्वेऽपि गापाभ्यां पर एव टग् भवति, न त्वन्तावयवः। श्नमस्तु अनुबन्धकरणसामर्थ्यात्परत्विधिर्बाध्यते। एवं च लाघवात् 'तत्पुरुषादङ्गुलेः—' इति वक्तव्ये 'तत्पुरुषस्याङ्गुलेः—' इति तु समासान्तापेक्षया अवयवषष्ठीत्याहुः। द्व्यङ्गुलमिति। 'तद्धितार्थ—' इति समासः। 'द्विगोर्नित्यम्' इति मात्रचो लोप इति वृत्ति-

७८७ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।** (५-४-८७) एभ्यो रात्रेरच् स्यात् चात्संख्याव्ययादेः । 'अहर्ग्रहणं द्वन्द्वार्थम्' (वा ३३५३) अहश्च रात्रिश्चाहोरात्रः । सर्वा रात्रिः सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्वयो रात्र्योः समाहारो द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः । ७८८ **राजाहःसखिभ्यष्टच् ।** (५-४-९१) एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः । अतिराजः । कृष्णसखः । ७८९ **अह्नष्टखोरेव ।** (६-४-१४५) एतयोरेव परतोऽह्नष्टिलोपः

'निरादयः क्रान्ताद्यर्थे-' इति समासः, अच्, टिलोपः । **अहःसर्वैकदेशसंख्यातपुण्याच्च । एभ्यो रात्रेरिति ।** अहन्, सर्व, एकदेश, संख्यात, पुण्य एभ्यः परस्य रात्रिशब्दस्येत्यर्थः । अहरादिपूर्वपदकस्य राज्यन्तस्य तत्पुरुषस्येति यावत् । ननु अहरादि राज्यन्तस्तत्पुरुषो नास्त्येव । अह्नो रात्रिरिति वा अहश्चासौ रात्रिश्चेति वा असम्भवादित्यत आह—**अहर्ग्रहणं द्वन्द्वार्थमिति ।** न च ब्रह्मणो यदहः तस्यावयवभूता या मानुषी रात्रिरिति षष्ठीतत्पुरुषः सम्भवतीति वाच्यम्, अहर्ग्रहणं द्वन्द्वार्थमिति भाष्यप्रामाण्येन एवंजातीयकतत्पुरुषस्य प्रयोगाभावानयनात् । **अहोरात्र इति ।** द्वन्द्वात् अच्, टिलोपः, 'जातिरप्राणिनाम्' इत्येकवत्त्वम् । 'स नपुंसकम्' इति बाधित्वा, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । **सर्वरात्र इति ।** सर्वा रात्रिरिति विग्रहः 'पूर्वकालैक-' इति कर्मधारयः । अच्, टिलोपः । 'रात्राह्नाहाः-' इति पुंस्त्वम् । 'सर्वनाम्नो वृत्तिमात्रे-' इति पुंवत्त्वम् । एकदेशेत्यर्थग्रहणमित्यभिप्रेत्योदाहरति—**पूर्वमिति ।** पूर्वं रात्रेरितिविग्रहः 'पूर्वापराधरोत्तरम्-' इत्येकदेशिसमासः । अच्, टिलोपः, 'रात्राह्नाहाः-' इति पुंस्त्वम् । **संख्यातरात्र इति ।** संख्याता रात्रिरिति विग्रहः कर्मधारयः । 'पुंवत्कर्मधारय-' इति पुंवत्त्वम् । **पुण्यरात्र इति ।** पुण्या रात्रिरिति विग्रहः कर्मधारयः । 'पुंवत्कर्मधारय-' इति पुंवत्त्वम् । अच्, टिलोपः 'रात्राह्नाहाः-' इति पुंस्त्वम् । **द्विरात्रमिति ।** तद्धितार्थे इति द्विगुः । संख्यादित्वादच्, टिलोपः । 'संख्यापूर्वं रात्रं क्लीबम्' इति नपुंसकत्वम् । **अतिरात्र इति ।** 'अत्यादयः क्रान्ताद्यर्थे-' इति समासः । अव्ययादित्वादच्, टिलोपः, 'रात्राह्नाहाः-' इति पुंस्त्वम् । **राजाहःसखिभ्यष्टच् ।** 'तत्पुरुषस्याङ्गुलेः-' इत्यतः तत्पुरुषस्येत्यनुवृत्तं पञ्चमीबहुवचनेन विपरिणतं राजाहस्सखिभ्य इत्यनेन विशेष्यते । तदन्तविधिः, तदाह—**एतदन्तादिति । परमराज इति ।** परमश्चासौ राजा चेति विग्रहः । समासान्तष्टच् । 'नस्तद्धिते' इति टिलोपः । **अतिराज इति ।** अतिक्रान्तो राजानमिति विग्रहः, 'अत्यादयः-' इति समासः । टचि टिलोपः । **कृष्णसख इति ।** कृष्णस्य सखेति विग्रहः समासान्तष्टच् । 'यस्येति च'

धृत् । समारम्भाया तु द्वयमचा लुगिति स्थितम् । **द्वन्द्वार्थमिति ।** अह्नो रात्रिरिति षष्ठीतत्पुरुषस्यासम्भवादिति भावः । ननु अहःशब्दस्याहस्तुल्यतायां रात्रिशब्दस्य वा रात्रितुल्यतायां गौणत्वसम्भवादहश्चासौ रात्रिश्चेति कर्मधारयोऽस्त्विति चेन्न । मुख्यसम्भवे गौणग्रहणायोगात् । 'हेमन्तशिशिरावहोरात्रे च-' इत्यत्र द्वन्द्वे समासान्तदर्शनाच्च । **अहोरात्र इति ।** 'जातिरप्राणिनाम्' इत्येकवद्भावः । 'स नपुंसकम्' इत्येतद्बाधित्वा परत्वात् 'रात्राह्नाहाः-' इति पुंस्त्वम् । एतेनैकवद्भावात् क्लीबतेति प्राचा

स्यात्, नान्यत्र । उत्तमाहः । द्वे अहनी भूतो द्व्यहीनः क्रतुः । तद्धितार्थे द्विगुः । 'तमधीष्टः–' ( सू १७४४ ) इत्यधिकारे, 'द्विगोर्वा' इत्यनुवृत्तौ 'रात्र्यहस्संवत्सराच्च' ( सू १७५१ ) इति खः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह—मद्राणां राज्ञी मद्रराज्ञी । ७९० अह्नोऽह्न एतेभ्यः । ( ५–४–८८ ) सर्वादिभ्यः पर-

---

इति इकारलोपः । अह्नष्टखोः । शेषपूरणेन सूत्रं व्याचष्टे—टिलोपः स्यादिति । टेरित्यनुवर्तते, 'अल्लोपोऽनः' इत्यस्माद् लोप इति चेति भावः । 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदमित्याह—नान्यत्रेति । एवकारस्तु अह्न एव टखोरिति विपरीतनियमव्यावृत्त्यर्थः । टखोरेवेति किम् ? अह्नानिर्वृत्तम् आह्निकम्, 'कालाट्ठञ्' इत्यधिकारे 'तेन निर्वृत्तम्' इति ठञ् । टिलोपाभावादल्लोपः । टप्रत्यये उदाहरति—उत्तमाह इति । उत्तमं च तदहश्चेति विशेषणसमासः । 'राजाहस्सखिभ्यष्टच्' इति टच् । 'अह्नष्टखोरेव' इति प्रकृतिसूत्रेण टिलोपः, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । खे उदाहरति–द्वे अहनी भृत इति । अत्यन्तसंयोगे द्वितीया । भृतः परिक्रीत इत्यर्थः । द्व्यहीन इत्यत्र प्रक्रियां दर्शयति–तद्धितार्थे द्विगुरिति । कोऽत्र तद्धित इत्यत आह—तमधीष्ट इत्यादि । तथा च द्व्यहन्शब्दात् खस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपे द्व्यहीन इति रूपमित्यर्थः । नन्वत्र 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः कुतो न स्यात् । न च खे टिलोपविधिसामर्थ्यान्नाह्नादेश इति वाच्यम्, अहीन इत्यत्र खे टिलोपविधेः चरितार्थत्वात्, इति चेत्, न—समासान्ते पर एवाह्नादेशविधानात् । प्रकृते तु समासान्तविधेरनित्यत्वाद् 'राजाहस्सखिभ्यः–' इति न टच् । यद्यपि उत्तमाह इत्यत्र द्व्यहीन इत्यत्र च 'नस्तद्धिते' इत्येव टिलोपः सिद्धः तथापि आह्निकमित्यादावावश्यकस्य नियमविधेर्विधिमुखेनापि प्रवृत्त्यभ्युपगमादिह तदुपन्यासः । ननु मद्राणां राज्ञी मद्रराज्ञीत्यत्रापि लिङ्गविशिष्टपरिभाषया 'राजाहस्सखिभ्यः–' इति टच्स्यादित्याशङ्क्याह—लिङ्गेति । अनित्यत्वादिति । समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषा नेति 'ङ्याप्प्रातिपदिकात्' इत्यत्र भाष्ये उक्तत्वादिति भावः । मद्रराज्ञीति । न च टचि सत्यपि 'यस्येति च' इतीकारलोपे मद्रराज्ञ्शब्दात् टित्त्वाद् ङीपि मद्रराज्ञीति निर्बाधमिति वाच्यम्, टचि हि सति 'भस्याढे तद्धिते' इति पुंवत्त्वे टिलोपे मद्रराजी इति स्यादिति भावः । अह्नोऽह्न एतेभ्यः । पूर्वसूत्रे अहस्सर्वैकदेशसंख्यातपुण्यशब्दा

---

ग्रन्थः परास्तः । 'मासेन स्यादहोरात्रः' इत्यादिग्रन्थविरोधाच्च । सर्वरात्र इति । 'पूर्वकालैक–' इति समासः । पूर्वरात्र इति । 'पूर्वापराधरोत्तरम्–' इत्येकदेशिसमासः । यदा तु रात्रिशब्दस्यैकदेशे लक्षणां स्वीकृत्य कर्मधारयोऽभ्युपगम्यते तदा पूर्वरात्रिरित्येव भवति । द्विरात्रमिति । 'संख्यापूर्वं रात्रं क्लीबम्' इति वक्ष्यते । अह्नष्टखोरेव । 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदम् । एवकारस्त्वह्न एव टखयोरिति विपरीतनियमशङ्कानिरासार्थः । 'आत्माध्वानौ खे' इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः । टखोरेवेति किम्, अह्ना निर्वृत्तमाह्निकम् । 'कालात्' इत्यधिकारे 'तेन निर्वृत्तम्' इति ठञ् । टिलोपाभावाद् 'अल्लोपोऽनः' इत्यकारलोपः । उत्तमाह इति । 'सर्वैकदेशसंख्यात–' इत्यत्र उत्तमशब्दस्यापाठादह्ना-

अत्यहः । ९२ क्षुभ्नादिषु च (८—४—३९) एषु णत्वं न स्यात् । दीर्घाह्नी प्रावृट् । एवं चैतदर्थमाह इत्यदन्तानुकरणक्लेशो न कर्तव्यः । 'प्रातिपदिकान्त—'

---

अहनी प्रिये यस्येति विग्रहः । 'तद्धितार्थ—' इत्युत्तरपदे द्विगुः, टच्, अह्नादेश इति भावः । अव्ययपूर्वस्योदाहरति—अत्यह्न इति । अहरतिक्रान्त इति विग्रहः । 'अत्यादयः—' इति समासः । टच्, अह्नादेश इति भावः । क्षुभ्नादिषु च । दीर्घाह्नी प्रावृडिति । वर्षर्तौ प्रावृट्शब्दः स्त्रीलिङ्गः । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः । 'अन उपधालोपिनोऽन्यतरस्याम्' इति ङीप्, 'अल्लोपोऽनः' इत्युपधालोपः । 'अह्नोऽदन्तात्' इति णत्वं तु क्षुभ्नादित्वान्नेति भावः । ननु क्षुभ्नादिषु दीर्घाह्नीत्यस्य पाठो व्यर्थः, 'अह्नोऽदन्तात्' इत्यत्र हि अह्न इत्यदन्तात् पष्ठ्यर्थे प्रथमा । अदन्तपूर्वपदस्थान्निमित्तात् परस्य अहशब्दस्य नस्य णत्वं स्यादिति तदर्थः । दीर्घाह्नीत्यत्र च अह्नादेशस्याप्रसक्त्या अदन्तत्वाभावादेव णत्वस्याप्राप्तौ किं तन्निवृत्त्यर्थेन क्षुभ्नादिपाठेनेत्यत आह—एवं चेति । एवं सति-दीर्घाह्नीशब्दस्य क्षुभ्नादिपाठे सति, एतदर्थम्— 'अह्नोऽदन्तात्' इति णत्वनिवृत्त्यर्थम्, अह्न इत्यस्य अदन्तत्वानुसरणं पष्ठ्यर्थे व्यत्ययेन प्रथमानुसरणं क्लेशावहं न कर्तव्यमित्यर्थः, क्षुभ्नादिपाठादेव णत्वनिवृत्तिसिद्धेरिति भावः । ननु दीर्घाह्नीत्यस्य णत्वाभावाय

---

स्त्रियामिति । नन्विह स्त्रीत्वं दुर्लभं 'रात्राह्नाहाः पुंसि' इति वचनादिति चेत्, मैवम् । सर्वमहः सर्वाह्ण इत्यादावुपक्षीणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः । 'लुपि युक्तवत्—' इति लिङ्गातिदेशो ह्यत्र प्रमाणम् । प्राकृतलिङ्गानुशासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः । अत एव लवणः सूपः, लवणा यवागूरित्यादौ न क्लीबत्वम् । किं च 'द्विगुप्राप्तापन्ना—' इत्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः—' इत्यस्याप्राप्तिरेवेति द्व्यहशब्दोऽयं विशेष्यनिघ्न एव, न तु नियतपुंल्लिङ्गः । एवं चात्र भवार्थकतद्धिते लुप्तेऽपि 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन भावार्थवत्तन्निष्ठस्त्रीत्वाभिधानमपि न्याय्यमेवेति दिक् । टाविति । न चेह ठञन्तत्वाद् ङीप् स्यादिति शङ्क्यम्, ठञो लुप्तत्वात् । न च प्रत्ययलक्षणम्, वर्णाश्रयत्वात् । ठञो योऽकारस्तदन्तान्ङीविति तत्र व्याख्यातत्वात् । अत एव वृत्तिकाराद्युक्ताणो लुक्पक्षेऽपि न ङीप्, 'अणूयोकारः' इति तत्र व्याख्यातत्वात् । न चैवमपि टजन्तत्वान्ङीप् स्यादेवेति वाच्यम्, टचः समासान्ततया तदन्तस्य तद्धितार्थं प्रत्युपसर्जनत्वात् । अत एव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतं भाष्ये । 'द्विगोः' इति ङीप् तु न शङ्क्य एव, 'अपरिमाण—' इति निषेधात् । अतष्टावेवात्र युक्तस्तथैवोदाहरति—द्व्यहेति । । 'अह्नोऽह्न—' इति सूत्रे अह्नादेशं प्रत्याख्याय 'अच्प्रत्यन्वव—' इत्यतोऽचमनुवर्त्य 'टजपवादोऽच्' इति व्याचक्षाणस्य भाष्यकारस्य मते तु निर्विवाद एवात्र टाप् । कथं तर्हि कालनिर्णयदीपिकायां द्व्यह्नीति प्रयोग इति चेत् । अत्राहुः—द्वे अहनी यस्यां तिथाविति बहुव्रीहौ नान्तलक्षणो ङीव् बोध्यः । द्वयोरह्नोर्भव इति व्याख्यानग्रन्थस्तु फलितार्थकथनपरतया ज्ञेय इति । संख्यादिभिन्नस्य तत्पुरुषस्य

(सू १०५५) इति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्तादिति तपरकरणान्नेह—परागतमहः पराह्णः । ७९३ न संख्यादेः समाहारे । (५—४—८९) समाहारे वर्तमानस्य संख्यादेरह्लादेशो न स्यात् । 'संख्यादेः' इति स्पष्टार्थम् । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । ७९४ उत्तमैकाभ्यां च । (५—४—९०) आभ्यामह्लादेशो न । उत्तमशब्दोऽन्त्यार्थः । पुण्यशब्दमाह । 'पुण्यैकाभ्याम्' इत्येव सूत्रयितुमुचितम् । पुण्याहम् । सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची । एकाहः । 'उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थम्' इत्येके । संख्याताहः । ७९५ अग्राख्यायामुरसः । (५—४—९३) टच्स्यात् । अश्वानामुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः । ७९६ अनोश्मायस्सरसां जातिसंज्ञयोः । (५—४—९४) टच्स्याज्जातौ संज्ञायां च । उपानसम्, अमृताश्मम्, कालायसम्,

---

नि क्षुभ्नादिपाठोऽभ्युपगम्यताम् उत अह्नः इत्यस्य अदन्तत्वमित्यत्र विनिगमनाविरह इत्यत आह—प्रातिपदिकान्तेति । अथ 'अह्नोऽदन्तात्' इत्यत्र पूर्वपदविशेषणे अदन्तादिति तपरत्वस्य प्रयोजनमाह—अदन्तादिति । पराह्ण इति । 'प्रादयो गताद्यर्थे—' इति समासः, टच्, अव्ययात्परत्वादह्लादेशः । परेति पूर्वपदस्यादन्तत्वाभावात् न णत्वमिति भावः । न संख्यादेः समाहारे । अह्लादेश इति । 'अह्नः ह —' इत्यतस्तदनुवृत्तेरिति भावः । ननु संख्यादिभिन्नस्य तत्पुरुषस्य समाहारे अभावादेव सिद्धे संख्यादेरिति व्यर्थमित्यत आह—स्पष्टार्थमिति । द्व्यह इति । समाहारे द्विगुः । टच्, 'रात्राह्ना—' इति पुंस्त्वम् । संख्यादित्वात्प्राप्तस्य अह्लादेशस्य निषेधः । त्र्यह इति । त्रयाणामह्नां समाहार इति विग्रहः । समासादि द्व्यहवत् । उत्तमैकाभ्यां च । ननु उत्तमशब्दात्परस्याहन्शब्दस्य अह्लादेशाप्रसक्तेरुत्तमग्रहणं व्यर्थमित्यत आह—उत्तमशब्द इति । उत्तमशब्दः अन्त्ये वर्तते । यथा द्वादशाहे 'उदयनीयातिरात्र उत्तममहः' इति अन्त्यमिति गम्यते । 'अहस्सर्वैकदेशसंख्यातपुण्याद्—' इत्युपात्तेषु अन्त्यः पुण्यशब्दो विवक्षित इत्यर्थः । तर्हि पुण्यैकाभ्याम् इत्येव कुतो न सूत्रितमित्याशङ्क्य स्वतन्त्रेच्छत्वा महर्षेरित्याह—पुण्यैकाभ्यामित्येवेति । पुण्याहमिति । पुण्यमहरिति विग्रहः विशेषणसमासः, टच्, टिलोपः, 'पुण्यसुदिनाभ्यां च' इति नपुंसकत्वम् । एकाह इति । एकमहरिति विग्रहे 'पूर्वकाल—' इति समासः । टच् टिलोपः । उपान्त्यस्यापीति । लक्षणयेति शेषः । पुण्येत्यनुक्त्वा उत्तमग्रहणमेव लक्षणाबीजम्, उत्तमं च एकं चेति द्वन्द्वः, सौत्रं द्विवचनमिति भावः । संख्याताह इति । संख्यातमहरिति विग्रहः विशेषणसमासः, टच् टिलोपः । 'रात्राह्ना—' इति पुंस्त्वम् । उपान्त्य—संख्यातशब्दपूर्वकत्वात् नाह्लादेशः । अग्राख्यायामुरसः । शेषपूरणेन सूत्रं व्याचष्टे—टच् स्यादिति ।

---

समाहारे वृत्त्यर्थमेवाह—स्पष्टार्थमिति । पुण्याहमिति । 'पुण्यसुदिनाभ्याम्—' इति क्लीबत्वमिति । उपान्त्यस्यापीति । यथा 'प्रथमयोः—' इति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्, तथात्रापि उत्तमग्रहणसामर्थ्यादन्त्ययोर्द्वयोर्ग्रहणम् । उत्तमौ चैकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः । अग्राख्यायाम् । पञ्चम्यर्थे

मण्डूकसरसम् इति जातिः। महानसम्, पिण्डाश्मः, लोहितायसम्, जलसरसम् इति संज्ञा। ७९७ ग्रामकौटाभ्यां च तक्ष्णः। (५-४-९५) ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः, स्वतन्त्रः। स चासौ तक्षा च कौटतक्षः। ७९८ अतेः शुनः। (५-४-९६) अतिश्वो वराहः। अतिश्वी सेवा। ७९९ उपमानादप्राणिषु। (५-४-९७) अप्राणिविषयकोपमानवाचिनः शुनष्टच्स्यात्। आकर्षः श्वेवाकर्षश्वः। अप्राणिषु किम्—वानरः श्वेव वानरश्वा। ८०० उत्तरमृगपूर्वाच्च सक्थ्नः। (५-४-९८) चादुपमानात्। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। फलकमिव सक्थि फलकसक्थम्।

---

पञ्चम्यर्थे सप्तमी। अग्रं प्रधानं तद्वाची य उरश्शब्दः तदन्तात् तत्पुरुषात् टच् स्यादित्यर्थः। 'अग्रयाख्यायाम्' इति पाठान्तरम्। अग्रे भवमग्र्यम्, मुख्यमिति यावत्। अश्वानामुर इवेति। उरो यथा प्रधानं तथेत्यर्थः। उरश्शब्दस्य मुख्ये वृत्तौ लक्षणाबीजमिदम्। अश्वोरसमिति। उरश्शब्देन मुख्यवाचिना षष्ठीसमासः, टच्, 'परवल्लिङ्ग—' इति नपुंसकत्वम्। अग्राख्यायामिति किम्? देवदत्तस्योरः देवदत्तोरः। अनोऽश्मायस्। उपानसमिति। उपगतमन इति प्रादिसमासः। अमृताश्म इति। अमृतः अश्मेति विग्रहः। टचि, टिलोपः। कालायसमिति। कालम् अय इति विग्रहः, टच् 'परवल्लिङ्गम्—' इति नपुंसकत्वम्। मण्डूकसरसमिति। षष्ठीसमासः। टच्। जातिविशेषा एते। महानसम्, पिण्डाश्मः, लोहितायसम्, जलसरसमिति संज्ञाविशेषाः। ग्रामकौटाभ्यां च तक्ष्णः। आभ्यां टजिति। ग्रामकौटाभ्यां परो यस्तक्षन्शब्दः तदन्तात्तत्पुरुषाट्टच् स्यादित्यर्थः। ग्रामतक्ष इति। टचि टिलोपः। साधारण इति। ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इत्यर्थः। कुट्यां भव इति। कुटीमेकां क्रयादिना सम्पाद्य तत्र यो वसति, न तु परकीयभूमिप्रदेशे, स कौट इत्यर्थः। फलितमाह—स्वतन्त्र इति। कौटतक्ष इति। टचि, टिलोपः। अतेश्शुनः। अतीत्यव्ययात् परो यः श्वन्शब्दः, तदन्तात्तत्पुरुषाट्टजित्यर्थः। अतिश्व इति। श्वानमतिक्रान्त इति विग्रहः। अत्यादय इति समासः। टचि, टिलोपः। श्वापेक्षयाधिकवेगवान् वराह इत्यर्थः। अतिश्वी सेवेति। श्वानमतिक्रान्तेत्यर्थः, श्वापेक्षया नीचा सेवेति यावत्, टच्, टिलोपः। टित्वात् ङीप्, 'यस्येति च' इत्यकारलोपः। उपमानादप्राणिषु। आकर्ष श्वेवेति। आकृष्यते कुसूलादिगतधान्यमनेनेत्याकर्षः, पञ्चाङ्गुलो दारुविशेषः। 'उपमितं व्याघ्रादिभिः—' इति समासः। टच्, टिलोपः, आकर्षश्व इति रूपम्। उपमानात् किम्? शुनो निष्क्रान्तो निश्श्वा। उत्तरमृग। उत्तर, मृग, पूर्व एभ्य उपमानाच्च परो यः सक्थिशब्दः तदन्तात्तत्पुरुषाट्टच स्यादित्यर्थः। उत्तरसक्थमिति। उत्तरं सक्थीति विग्रहः। पूर्वं सक्थीति विग्रहे 'पूर्वकाल—' इति समासः। फलकसक्थमिति। फल-

---

सप्तमी। अग्रं प्रधानम्। अग्रवाची य उरः शब्दस्तदन्तात्तत्पुरुषाट्टच् स्यात्। अग्राख्यायां किम्, देवदत्तस्योरो देवदत्तोरः। ग्रामकौटाभ्याम्। 'जातिसंज्ञयोः' इति नानुवर्तते। ग्रामेति किम्, राज्ञस्तक्षा राजतक्षा। अतिश्व इति। श्वानमतिक्रान्तो

८०१ नावो द्विगो (५-४-९९) नौशब्दान्ताद् द्विगोष्टच्स्यात्, न तु तद्धितलुकि । द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः । 'द्विगोर्लुगनपत्ये' (सू १०८०) इत्यत्र अचि इत्यस्यापकर्षणाद्धलादेर्न लुक् । पञ्चनावप्रियः । द्विनावम् । त्रिनावम् । अतद्धितलुकीति किम्—पञ्चभिर्नौभिः क्रीतः पञ्चनौः । ८०२ अर्धाच्च । (५-४-१००) अर्धान्नावष्टच्स्यात् । नावोऽर्धम् अर्धनावम् । क्लीबत्वं लोकात् । ८०३ खार्याः प्राचाम् । (५-४-१०१) द्विगोरर्धाच्च खार्या टज्वा स्यात् । द्विखारम्, द्विखारि । अर्धखारम्, अर्धखारी । ८०४ द्वित्रिभ्यामञ्जलेः । (५-४-१०२) टज्वा स्याद् द्विगौ । द्व्यञ्जलम्, द्व्यञ्जलि । अनद्धितलुकीत्येव ।

---

श्रमिव मन्यतीति विग्रहे मयूरव्यंसकादित्वात् समासः । सर्वत्र टच्, टिलोपः । नावो द्विगोः । न तु तद्धितलुकीति । 'गोरतद्धितलुकि' इत्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । द्विनावरूप्य इति । तद्धितार्थे समासः, टच्, आवादेशः । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' तस्य 'द्विगोर्लुगनपत्ये' इति लुकमाशङ्कयाह—द्विगोर्लुगनपत्य इत्यत्रेति । अपकर्षणादिति । 'गोत्रेऽलुगचि' इत्युत्तरसूत्रादित्यर्थः । पञ्चनावप्रिय इति । पञ्च नावः प्रिया यस्येति विग्रहे द्विगुः, टच्, आवादेशः, 'स नपुंसकम्' इति नपुंसकत्वम् । द्विनावमिति । तिसृणां नावां समाहार इति विग्रहे, द्विनाववत् । पञ्चनौरिति । तद्धितार्थे समासः । आर्हीयष्ठक्, 'अध्यर्ध-' इति लुक् । अर्धाच्च । अर्धशब्दात् परो यो नौशब्दः तदन्तात् तत्पुरुषाट्टजित्यर्थः । अर्धनावमिति । 'अर्धं नपुंसकम्' इति समासः, टच्, आवादेशः । अत्र 'परवल्लिङ्गम्-' इति स्त्रीत्वमाशङ्कयाह—क्लीबत्वं लोकादिति । खार्याः प्राचाम् । खारीशब्दान्ताद् द्विगोः, अर्धपूर्वकाद् खारीशब्दान्तात्तत्पुरुषाच्चेत्यर्थः । द्विखारमिति । द्वयोः खार्योः समाहार इति विग्रहे द्विगुः । टच्, 'यस्येति च' । 'स नपुंसकम्' इति नपुंसकत्वम् । टजभावपक्षे 'स नपुंसकम्' इति नपुंसकत्वान्नपुंसके ह्रस्वः । अर्धखारमिति । खार्या अर्धमिति विग्रहे । 'अर्धं नपुंसकम्' इति समासः, टच्, 'यस्येति च' । क्लीबत्वं लोकात् । अर्धखारीति । पूर्ववत् समासः । टजभावपक्षे 'परवल्लिङ्गम्-' इति स्त्रीत्वम् । एकविभक्तावषष्ठ्यन्तवचनादुपसर्जनत्वाभावान्न ह्रस्वः । अर्धखारि इति क्वचिद्ध्रस्वान्तपाठः, तदा क्लीबत्वं लोकात्, ततो नपुंसकह्रस्वः । द्वित्रिभ्यामञ्जलेः । शेषपूरणेन सूत्रं व्याचष्टे—टज्वा स्यादिति । द्विगाविति । द्व्यञ्जलमिति । द्वयोरञ्जल्योः समाहार इति विग्रहे द्विगुः, टच्, 'यस्येति

---

च' इत्यर्थः । अतिश्वीति । नीचेत्यर्थः । आकर्ष श्वेति । 'उपमितं व्याघ्रादि-' इति समासः । आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः काष्ठविशेषः । उपमानात्विम निष्कासितः शुना निरस्तो । फलकसक्थमिति । अत एव ज्ञापकादसामान्यवचनेनाप्युपमानस्य समास इति माधवः । द्विनावरूप्य इति । हेतुमनुष्येभ्य-' इति रूप्यः । पञ्चनौरिति । आर्हीयष्ठक् । 'अध्यर्धपूर्व-' इति लुक् । खार्याः । द्विगोरिति । खारीशब्दान्ताद् द्विगोरित्यर्थः । अर्धखारमिति । अर्धनावमिव

द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः । ८०५ ब्रह्मणो जानपदाख्यायाम् । (५—४—१०४) ब्रह्मान्तात्तत्पुरुषाट्टच्स्यात्समासेन जानपदत्वमाख्यायते चेत्, सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । ८०६ कुमहद्भ्यामन्यतरस्याम् । (५-४-१०५) आभ्यां ब्रह्मणो वा टच्स्यात्तत्पुरुषे । कुत्सितो ब्रह्मा कुब्रह्मः, कुब्रह्मा । ८०७ आन्महतः समानाधिकरणजातीययोः । (६-३-४६) महत आकारो-

---

च' 'स नपुंसकम्' । द्व्यञ्जलीति । समाहारे द्विगुः । टजभावे सति नपुंसकह्रस्वत्वम् । अतद्धितलुकीत्येवेति । अनुवर्तत एवेत्यर्थः । अञ्जलिभ्यां क्रीत इति । अञ्जलिशब्दः अञ्जलिपरिमितधान्यादौ वर्तते, केवलस्याञ्जलेः मूल्यत्वासम्भवात् । परिमाणत्वात् ठञ् । 'अध्यर्ध-' इति तस्य लुक् । ब्रह्मणो जानपदाख्याम् । जनपदे भवो जानपदः, भावप्रधानो निर्देशः । तस्य केनाख्येत्याकाङ्क्षायां प्रकृतत्वात् समासेनेति लभ्यते, तदाह— समासेन जानपदत्वमाख्यायते चेदिति । जानपदत्वमित्यनन्तरं ब्रह्मण इति शेषः । सुराष्ट्रे ब्रह्मेति । ब्रह्मशब्दोऽत्र पुंल्लिङ्गः । ब्रह्मा विप्रः । 'वेदास्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । सप्तमीति योगविभागात् समासः टच्, टिलोपः, परवल्लिङ्गम्-' इति पुंस्त्वम् । जानपदेति किम् ? देवब्रह्मा नारदः । कुमहद्भ्यामन्यतरस्याम् । कुब्रह्मेति । टजभावे रूपम् । 'कुगतिप्रादयः' इति समासः । कुब्रह्म इति । टचि रूपम्, टिलोपः । अथ महत्पूर्वस्य टज्विकल्पमुदाहरिष्यन् विशेषमाह— आन्महतः । 'अलुगुत्तरपदे इत्युत्तरपदाधिकारस्थमिदं सूत्रम् । उत्तरपदे इत्यनुवृत्तं समानाधिकरणपदे अन्वेति, न तु जातीय इति, तस्य प्रत्ययत्वात्, तदाह—महत आत्त्वमित्यादिना । महाब्रह्म इति । महांश्चासौ ब्रह्मा चेति विग्रहः । 'सन्महत्-' इत्यादिना समासः । आत्त्वम् । सवर्णदीर्घः । 'कुमहद्भ्याम्-' इति टच् । टिलोपः, 'परवल्लिङ्गम्-' इति पुंस्त्वम् । महाब्रह्मेति । टजभावे आत्वे रूपम् । अथ प्रसङ्गादुक्तमात्त्वविधिं प्रपञ्चयिष्यन् समानाधिकरणे पुनरुदाहरति—महादेव इति । जातीये उदाहरति—महाजातीय इति । महत्सदृश इत्यर्थः । प्रकारवचने जातीयर्, आत्त्वम्, सवर्णदीर्घः । समानाधिकरणे किमिति । 'आन्महतो जातीये च' इत्येवास्तु । चकारादुत्तरपदसमुच्चये

---

क्लीवत्वं लोकात् । अर्धखारीति । 'परवल्लिङ्गम्-' इति स्त्रीत्वम् । टज्वा स्याद् द्विगाविति । द्विगाविति किम्, द्वयोरञ्जलिः द्व्यञ्जलिः । द्व्याञ्जलमिति । समाहारे द्विगुः । अतद्धितलुकीत्येवेति । एतच्च पूर्वसूत्रेऽपि बोध्यम् । अञ्जलिभ्यां क्रीत इति । नात्राञ्जलिः पाणिद्वयम्, तस्य मूल्यत्वासंभवात्, किं तु अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितः । ततश्च परिमाणत्वाद् द्व्यञ्जलिरित्यत्र ठञ् । तस्य तु 'अध्यर्धपूर्व-' इति लुक् । ब्रह्मणो । जनपदे भवो जानपदः । 'द्व्येकयोः-' इतिवद्भावप्रधानो निर्देशस्तस्याख्यायां प्रत्यासत्त्या समासेनेत्येतल्लभ्यते, तदाह—समासेन जानपदत्वमिति । कस्येत्याकाङ्क्षायां संनिधानाद् ब्रह्मण इति लभ्यते । सुराष्ट्रब्रह्म इति । 'सप्तमी' इति योगविभागात्समासः । जानपदेति किम्, देवब्रह्मा नारदः । कुब्रह्म इति । ब्राह्मणपर्यायो ब्रह्मन्शब्दः । आन्महतः । तकार उच्चारणार्थः, न तु सर्वादेशार्थं

न्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाब्रह्म, महाब्रह्मा। महादेवः। महाजातीयः। समानाधिकरणे किम्—महतः सेवा महत्सेवा। लाक्षणिकं विहाय प्रतिपदोक्तः 'सन्महत्—' (सू ७४०) इति समासो ग्रहीष्यत इति चेत्, महाबाहुः न स्यात्। तस्मात् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य—' (प ११४) इति परिभाषा नेह प्रवर्तते, समानाधिकरणग्रहणसामर्थ्यात्।

सति महत आत्वं स्याद् उत्तरपदे जातीये च परत इत्यर्थः। महादेव महादेव इत्यादिनिर्दे त्रि सामानाधिकरण्येनेति प्रश्नः। महतः सेवा महत्सेवेति। अत्र षष्ठी समासे आत्व-निवृत्त्यर्थं समानाधिकरणग्रहणमिति भावः। ननु षष्ठीसमासो लाक्षणिकः, समस्यमानपद विशिष्य अनुच्चार्य सामान्यशास्त्रेण एव निर्वर्तितत्वात्। 'सन्महत्—' इत्ययं समासस्तु सन्म-हदादिशब्दं समस्यमानं विशिष्योच्चार्य विहितत्वात् प्रतिपदोक्तः। ततश्च लक्षणप्रतिपदोक्त-परिभाषया 'आ महतो जातीये च' इत्यत्र 'सन्महत्—इति प्रतिपदोक्तसमासोत्तरपदग्रहणे सति तत एव षष्ठीसमासोत्तरपदनिराससंभवाद्व्यर्थमिव समानाधिकरणग्रहणमिति शङ्कते—लाक्ष-णिकमित्यादिना। परिहरति—महाबाहुर्न स्यादिति। महान्तौ बाहू यस्येति विग्रहः। अस्य समासस्य 'अनेकमन्यपदार्थे' इति सामान्यविहितत्वात् प्रतिपदोक्तत्वाभावात्तदुत्तरपदे परे आत्वं न स्यात्, अतः समानाधिकरणग्रहणमित्यर्थः। ननु कृतेऽपि समानाधिकरणग्रहणे लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेर्दुर्वारत्वाद् महाबाहुरित्यत्रात्वं न स्यादेवेत्यत आह—तस्मादिति। तच्छब्दार्थमाह—समानाधिकरणग्रहणसामर्थ्यादिति। एवं च लक्षणप्रति-पदोक्तपरिभाषां बाधित्वा लाक्षणिकस्यापि ग्रहणार्थं समानाधिकरणग्रहणमिति भावः। न च सुमहान्तौ बाहू यस्य स सुमहाबाहुरित्यत्र कथमात्वम्। आत्वविधेः पदाङ्गाधिकार-स्थत्वाभावेन तदन्तविध्यभावादिति वाच्यम्, उत्तरपदाक्षिप्तपूर्वपदस्य महता विशेषणे सति तदन्तविधिलाभात्। परममहत्परिमाणवानित्यत्र तु महतः परिमाणं महत्-परिमाणम्, परमं महत्परिमाणमिति षष्ठीसमासगर्भः कर्मधारय इति दिक्। ननु

इत्याह—आकारोऽन्तादेशः स्यादिति। इहोत्तरपदाधिकारे पूर्वपदमाक्षिप्यते। तच्च महता विशेष्यतेति तदन्तविधिर्लभ्यते। 'ग्रहणवता—' इति निषेधस्तु प्रत्यय-विधिविषय इत्युक्तत्वात्। तेन महाबाहुवदतिमहाबाहुरिति प्रयोगाः भवति। परम-महत्परिमाणमित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽभ्युपगम्यत इति न तत्रात्वप्रसक्तिरिति वृद्धाः। यत्तु वर्धमानेनोक्तम्—'इष्टकेषीकामालानाम्—' इत्यत्र तदन्तविध्युपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, तेन परम-महत आत्वं नेति, तद्भाष्यवैयटविरुद्धम्। तथा हि 'येन विधिः—' इति सूत्रे पदाधि-कारे प्रयोजनमिष्टकचितं पक्वेष्टकचितमिति भाष्ये उदाहृतम्, कैयटेन च पदशब्देन उत्तरपदं गृह्यत इति व्याख्यानम्। एतदेवार्थं काशिकायामुपनिबद्धम्, न तु 'इष्ट-केषीका—' इत्यत्र कात्यायनात्मुपसंख्यानमस्ति। ननु प्रतिपदोक्तसमासे यदुत्तरपदं तस्मिन्नेव परे आत्वं स्यान्नान्यत्रेति किमनेन समानाधिकरणग्रहणेनेत्यत आह—महाबाहुरिति। बहुव्रीहिरयम्, स च सामान्यशास्त्रनिर्वृत्तत्वाल्लाक्षणिक इति भावः।

'आत' इति योगविभागादात्वम्, 'प्रागेकादशभ्यः–' (सू १९९५) इति निर्देशाद्वा, एकादश । महतीशब्दस्य 'पुंवत्कर्मधारय–' (सू ७४६) इति पुंवद्भावे कृते आत्वम्, महाजातीया । 'महत आत्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च' (वा ३९५०)। असामानाधिकरण्यार्थमिदम् । महतो महत्या वा घासो महाघासः । महाकरः । महाविशिष्टः । 'अष्टनः कपाले हविषि' (वा ३९५१) अष्टाकपालः । 'गवि च युक्ते' (वा ३९५२) । गोशब्दे परे युक्त इत्यर्थे गम्ये अष्टन आत्वं स्यादिति वक्तव्यमित्यर्थः । अष्टागवं शकटम् । 'अच्प्रत्यन्वव–' (सू ९४३) इत्यत्र 'अच्' इति योगविभागाद्बहुव्रीहावप्यच् । अष्टानां गवां समाहारोऽष्टगवम्, तद्युक्तत्वाच्छकटमष्टागवमिति वा । ८०८ द्व्यष्टनः

---

'आन्महतः–' इत्यत्र महत एव ग्रहणाद् 'द्व्यष्टनः–' इत्युत्तरसूत्रे द्व्यष्टनोरेव ग्रहणाद् एकादशेत्यत्र कथमात्वमित्यत आह—आदिति । योगविभागादात्वमिति । योगविभागस्य भाष्यादृष्टत्वादाह—प्रागेकादशभ्य इति । निर्देशाद्वेति । एकादशेति । एकश्च दश चेति द्वन्द्वः । एकाधिका दशेति वा । आन्महत इत्यत्र लिङ्गविशिष्टपरिभाषया महतीशब्दस्यापि जातीयर्प्रत्यये परे महतीजातीयेति स्यादित्यत आह—महतीशब्दस्येति । न च परत्वात्पुंवत्त्वं बाधित्वा आत्वं स्यादिति वाच्यम्, 'आन्महतः–' इत्यत्र लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये उक्तत्वादिति भावः । महत आत्त्व इति । घास, कर, विशिष्ट एषु परतो महत आत्वं पुंवत्त्वं च वक्तव्यमित्यर्थः । ननु 'आन्महतः–'इत्यात्वे 'पुंवत्कर्मधारय–' इतिपुंवत्त्वे च सिद्धे किमर्थमिदमित्यत आह—असामानाधिकरण्यार्थमिदमिति । महाकर इति । महतो महत्या वा कर इत्यर्थः । महाविशिष्ट इति । महतो महत्या वा विशिष्टः, अधिक इत्यर्थः । अष्टन इति । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः । अष्टाकपाल इति । अष्टसु कपालेषु संस्कृतः पुरोडाश इत्यर्थे तद्धितार्थे द्विगुः । 'संस्कृतं भक्षाः' इत्यण् । 'द्विगोर्लुगनपत्ये' इति लुक् । आत्वं सवर्णदीर्घः । गवि च युक्त इति । वार्तिकमिदम् । तत्सूचयितुमाह—वक्तव्यमित्यर्थ इति । अष्टागवं शकटमिति । अष्टौ गावो यस्येति बहुव्रीहिः । आत्वम्, सवर्णदीर्घः । अष्टभिर्गोभिर्युक्तमित्यर्थः । ननु 'गोरतद्धितलुकि' इति टज्विधेस्तत्पुरुषमात्रविषयत्वाद् अष्टागवमिति कथमित्यत आह—अच्प्रत्यन्ववेत्यत्रेति । तत्पुरुषत्वे अष्टगवशब्दष्टजन्त एवेत्याह—अष्टानामिति । तथा च समाहारद्विगोस्तत्पुरुषत्वाद् 'गोरतद्धितलुकि' इति टच् सुलभ इत्यर्थः । नन्वष्टानां गवां समाहार इत्यर्थे शकटे कथमन्वयः, युक्तार्थवृत्तित्वाभावात्, कथं वा आत्वमित्यत आह—तद्युक्तत्वादिति । समाहारद्विगुरूपतत्पुरुषाट्टचि व्युत्पन्नस्य अष्टगवशब्दस्य लक्षणया अष्टभिर्गोभिर्युक्ते वर्तमानस्य आत्वमित्यर्थः । द्व्यष्टनः । शेषपूरणेन सूत्रं व्याचष्टे—आत्स्यादिति । द्विशब्दस्य अष्टन्शब्दस्य च संख्यावाचक उत्तरपदे

---

अष्टनः कपाल इति । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः । अष्टाकपाल इति । 'संस्कृतं भक्षाः' इत्यणो 'द्विगोर्लुगनपत्ये' इति लुक् ।

सङ्ख्यायामबहुव्रीह्यशीत्योः । (६-३-४७) आत्स्यात् । द्वौ च दश च द्वादश । द्व्यधिका दशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । अबहुव्रीह्यशीत्योः किम्-द्वित्राः, द्व्यशीतिः । 'प्राक्शतादिति वक्तव्यम्' (वा ३९५३) नेह-द्विशतम्, द्विसहस्रम् । ८०९ त्रेस्त्रयः । (६-३-४८) त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु त्रिदंश त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक्शतादित्येव, त्रिशतम् । त्रिसहस्रम् । ८१० विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् । (६-३-४९) द्व्यष्टनास्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत्, द्वाचत्वारिंशत् ।

परे आत्स्यात्, न तु बहुव्रीह्यशीत्योरित्यर्थः । द्विशब्दस्योदाहरति—द्वादशेति । द्वौ च एकश्च द्व्येकाः, द्व्यधिक एकः द्व्येकः इत्यादौ तु नास्ति, 'एकादिनवान्तानां परस्परं द्वन्द्वतत्पुरुषौ न स्तः' इति 'चार्थे-'इति सूत्रे भाष्ये ध्वनितत्वादिति शब्देन्दुशेखरे स्थितम् । द्वाविंशतिरिति । द्वौ च विंशतिश्चेति समाहारद्वन्द्वः । 'स नपुंसकम्' इति क्लीबत्वं तु न । किंतु लोकात् स्त्रीत्वम् । इतरेतरयोगस्तु न, अनभिधानात् । द्व्यधिका विंशतिरिति तत्पुरुषो वा । अथाष्टन्शब्दस्योदाहरति—अष्टादशेति । अष्टौ च दश चेति द्वन्द्वः । अष्टाधिका दशेति वा । अष्टाविंशतिरिति । अष्टौ च विंशतिश्चेति समाहारद्वन्द्वः । स्त्रीत्वं लोकात् । अष्टाधिका विंशतिरिति वा । द्वित्रा इति । द्वौ वा त्रयो वेति विग्रहः । 'सङ्ख्ययाव्यय-' इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये डच्' इति डच् । बहुव्रीहित्वादत्र द्विशब्दस्य आत्वं न । द्व्यशीतिरिति । द्वौ चाशीतिश्चेति समाहारद्वन्द्वः । स्त्रीत्वं लोकात् । द्व्यधिका अशीतिरिति वा । अत्राशीतिपरकत्वाद् द्विशब्दस्यात्वं न । प्राक्शतादिति । 'द्व्यष्टनः सङ्ख्यायाम्-' इत्येतत् शतप्रभृतिसङ्ख्याशब्दे परे न भवतीति वक्तव्यमित्यर्थः । द्विशतमिति । द्वौ च शतं चेति समाहारद्वन्द्वः । द्व्यधिकं शतमिति वा । एवं द्विसहस्रमित्यत्रापि । त्रेस्त्रयः । सन्धिवेलादिषु त्रयोदशेति पाठात् सकारान्तोऽयमादेश इत्याह—त्रयस्यादिति । पूर्वविषय इति । आनन्तर्यात् संख्याशब्दे उत्तरपदे परतः, न तु बहुव्रीह्यशीत्योरित्यर्थः । त्रयोदशेति । त्रयश्च दश चेति, त्र्यधिका दशेति वा विग्रहः । सुब्लुकि त्रिशब्दस्य त्रयस्, रुत्वम्, उत्वम्, आद्गुणः । एवं त्रयोविंशतिरित्यपि । त्रिदशा इति । त्रिरावृत्ता दशेत्यर्थः । 'बहुव्रीहौ संख्येये डच्-'इति डच् । नन्वत्र त्रिरित्यस्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति सुजन्तत्वात् समासेऽपि सुचः श्रवणापत्तिरित्यत आह—सुजर्थे बहुव्रीहिरिति । सुजर्थे क्रियाभ्यावृत्तौ लक्षणया विद्यमानस्य त्रिशब्दस्यैवात्र 'सङ्ख्ययाव्यय-' इति बहुव्रीहिः, न तु सुजन्तस्येत्यर्थः । त्र्यशीतिरिति । त्रयश्चाशीतिश्चेति समाहारद्वन्द्वः । स्त्रीत्वं लोकात् । त्र्यधिकाशीतिरिति वा । त्रिशतमिति । त्रयश्च शतं चेति समाहारद्वन्द्वः, त्र्यधिकं शतमिति वा । एवं त्रिसहस्रमित्यपि । विभाषा चत्वारिंशत् । व्यनहि-

---

'अप्यर्धपूर्व-'इत्यतो लुगिति केषाचिद् व्याख्यानं तु प्रामादिकम्, 'संस्कृतम्-'इत्यण. अनार्षेयत्वात् । त्रेस्त्रयः । सन्धिवेलादिषु त्रयोदशेति पाठात्सान्तोऽयमादेश इति

अष्टचत्वारिंशत्, अष्टाचत्वारिंशत् । त्रिचत्वारिंशत्, त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु । ८११ एकादिश्चैकस्य चादुक् । ( ६—३—७६ ) एकादिर्नञ्प्रकृत्या स्यादेकस्य चादुगागमश्च । नञो विंशत्या सह समासे कृते एकशब्देन सह 'तृतीया' इति योगविभागात्समासः । अनुनासिकविकल्पः । एकेन न विंशतिः एकान्नविंशतिः—एकादूनविंशतिः । एकोनविंशतिरित्यर्थः । 'षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च धासु वेति वाच्यम्' ( वा ४००१—४००२ ) ।

---

तस्यापि द्व्यष्टनोरित्यस्य सम्बन्धाय—सर्वेषामिति । द्व्यष्टनोस्त्रेश्चेत्यर्थः । तदाह-द्व्यष्टनोस्त्रेश्चेति । एकादिश्च । 'न लोपो नञः' इत्यतो नञ इति षष्ठ्यन्तमनुवर्तते । तच्च प्रथमया विपरिणम्यते । 'नभ्राण्नपात्–' इत्यतः प्रकृत्येत्यनुवर्तते, तदाह—एकादिर्नञ् प्रकृत्येति । एक आदिर्यस्येति विग्रहः । एकस्य चादुगागमश्चेति । आदुगिति अदुगिति वा छेदः । नञो विंशत्येति । न विंशतिरिति विग्रहे नञ्समासे सति नविंशतिशब्दस्य एकशब्देन तृतीयान्तेन सह एकेन नविंशतिरिति विग्रहे समास इत्यन्वयः । ननु तत्कृतत्वाद्यभावात् कथमिह तृतीयासमास इत्यत आह—तृतीयेति योगविभागादिति । अनुनासिकविकल्प इति । तृतीयासमासे कृते सुब्लुकि एक न विंशति इति स्थिते 'न लोपो नञः' इति प्राप्तस्य नकारलोपस्य प्रकृतिभावान्निवृत्तौ एकशब्दस्यादुगागमः, तत्र ककार इत्, उकार उच्चारणार्थः । कित्वादन्तावयवः, सवर्णदीर्घः, एकाद् न विंशतिरिति स्थिते 'यरोऽनुनासिके–' इति दकारस्य पक्षे अनुनासिकनकार इत्यर्थः । अदुगागमपक्षेऽपि पररूपं तु अकारोच्चारणसामर्थ्यान्न भवति । एकेन न विंशतिरिति विग्रहवाक्यम् । एकेन हेतुना विंशतिर्न भवतीत्यर्थः । एकान्नविंशतिः, एकादूनविंशतिरिति । अनुनासिकत्वे तदभावे च रूपम् । एकोनविंशतिरित्यर्थ इति । पर्यवस्यतीति शेषः । एकेन ऊनेति विग्रहः । 'पूर्वसदृश—' इति समासः । [1]सा चासौविंशतिश्च । षष उत्वमिति । उदतृशब्दे दशन्शब्दे च उत्तरपदे परे धाप्रत्यये च परे षष्शब्दस्य उत्वम् उत्तरखण्डस्य दतृशब्दस्य दशन्शब्दस्य धाप्रत्ययस्य च आदेर्दकारस्य धकारस्य च ष्टुत्वं च वक्तव्यमित्यर्थः । ष्टुत्वमित्येव छेदः, न तु ष्टुत्वमिति प्रयोजनाभावात् । 'धासु वा' इति बहुवचनाद्विधार्थधाप्रत्ययस्यैव ग्रहणमिति भाष्यम् । धाप्रत्यये परे षष उत्वं वा स्यात् । ष्टुत्वं तु उत्वपक्षे तदभावपक्षे च पूर्ववाक्यान्नित्यमेवेति कैयटः । उत्वपक्ष एवं नित्यं ष्टुत्वमिति हरदत्तः । षोडन्निति । षड् दन्ता यस्येति बहुव्रीहौ 'वयसि दन्तस्य दतृ' इति दत्रादेशः, ऋकारस्य इत्वम् । अन्त्यषकारस्य उत्वम् ।

---

ध्वनयन्नाह । त्रयस्यादिति । सुजर्थे बहुव्रीहिरिति । 'संख्ययाव्यया—' इत्यादिनेति शेषः । एकादिरिति । अदुगिति छेदः । पररूपं त्वकारोच्चारणसामर्थ्यान्न भवति । धासु वेति । 'संख्याया विधार्थे–' इत्यादिना विहितस्य धाप्रत्ययस्यैवेह ग्रहणम्, 'प्रत्ययाप्रत्यययोः–' इति परिभाषया । तेनेह न षट् दधातीति षड्धा । 'आतोऽनुपसर्गे कः, टाप् । षोडन्निति । षड् दन्ता अस्य षोडन् । 'वयसि दन्तस्य–' इति

---

१—सा चेत्यादि विग्रहः क्वचिन्नास्ति ।

षोडन्, षोडश, षड्धा, षोढा। ८१२ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। (२-४-२६) एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्धपिप्पली। 'द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः' (वा १५४५) पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै अलंकुमारिः। अत एव ज्ञापकात्समासः।

---

आद्गुणः, दकारस्य ष्टुत्वेन डकारः, सुप्रत्यये उगित्वान्नुम्, सुलोपः, संयोगान्तलोपः। तस्यासिद्धत्वान्न दीर्घः। षोडन् इति रूपम्। षोडशेति। षट् च दश चेति, षडधिका दशेति वा विग्रहः। अन्त्यस्य षकारस्य उत्वम्, आद्गुणः, दकारस्य ष्टुत्वेन डकारः। हरदत्तमतमनुसृत्य उत्वाभावपक्षे धामु वक्ष्यस्योदाहरति—षड्धेति। 'संख्याया विधार्थे धा'। अन्त्यस्य षकारस्य उत्वाभावपक्षे तु ष्टुत्वमपि न भवति।' झलां जशोऽन्ते' इति जश्त्वेन षकारस्य ड इति भावः। उत्वपक्षे उदाहरति—षोढेति। धाप्रत्ययः, अन्त्यस्य षकारस्य उत्वम्, आद् गुणः, ष्टुत्वेन धस्य ढ इति भावः। कैयटमते तु उत्वाभावपक्षेऽपि ष्टुत्वं नित्यमेव। षड्ढा। कैयटमतमेव युक्तम्, षोढा, षड्ढा इत्येवं भाष्ये उदाहृतत्वादिति शब्देन्दुशेखरे स्थितम्। परवल्लिङ्गम्। परवदिति षष्ठ्यन्ताद्वतिः। तदाह—एतयोः परपदस्येति। द्वन्द्वपदमत्र इतरेतरयोगद्वन्द्वपरम्, समाहारद्वन्द्वे 'स नपुंसकम्' इत्यस्य तदपवादत्वात्। कुक्कुटमयूर्याविमे इति। अत्र द्वन्द्वे अवयवलिङ्गेनानियमे प्राप्ते नियमार्थमिदम्। अर्धपिप्पलीति। 'अर्धं नपुंसकम्' इति तत्पुरुषः। अस्य एकदेशिसमासस्य पूर्वपदार्थप्रधानतया पूर्वपदलिङ्गे प्राप्ते उत्तरपदलिङ्गार्थं विधिः। अत्र 'द्वन्द्वतत्पुरुषयोः' इति षष्ठ्यन्तमर्थपरम्। द्वन्द्वतत्पुरुषार्थयोरित्यर्थः। एवं च कुक्कुटमयूर्याविमे इत्यनुप्रयोगेऽपि तदेव लिङ्गम्। द्विगुप्राप्तेति। द्विगु, प्राप्त, आपन्न, अलम्पूर्व, गतिसमास एतेषु परवल्लिङ्गस्य प्रतिषेधो वक्तव्य इत्यर्थः। पञ्चकपाल इति। उत्तरपदस्य नपुंसकत्वात् समासस्य नपुंसकत्वं प्राप्तं न भवति, किन्तु विशेष्यलिङ्गमेव। प्राप्तजीविक इति। अत्र उत्तरपदस्य जीविकाशब्दस्य यल्लिङ्गं तत्समासस्य न भवति। अलम्पूर्वस्योदाहरति—अलं कुमार्यै, अलंकुमारिरिति। अत्र उत्तरपदकुमारीलिङ्गं समासस्य न भवति। नन्वत्र तदर्थादियोगाभावान्न चतुर्थीसमासः। 'पर्यादयो ग्लानाद्यर्थे—' इत्यपि न भवति, तस्य समासस्य नित्यत्वेन अलं कुमार्यै इति भाष्ये विग्रहप्रदर्शनानुपपत्तेरित्यत आह—अत एवेति। 'एकविभक्ति च—' इति कुमारीशब्दस्योपसर्जनत्वाद्ध्रस्वः।

---

दकारेशः। परवल्लिङ्गम्। इतरेतरयोगे द्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्वः। 'स नपुंसकम्' इत्यपवादस्य वक्ष्यमाणत्वात्। सूत्रे 'द्वन्द्वतत्पुरुषयोः' इति न सप्तमीद्विवचनम्। तथा च द्वन्द्वे तत्पुरुषे च यत्परपदं तद्वल्लिङ्गं पूर्वपदस्यातिदिश्येत, परपदस्य सर्वविशब्दत्वेन पूर्वपदापेक्षत्वात्, ततश्च मयूरीकुक्कुटावित्यत्र पूर्वपदे ईकारनिवृत्तिप्रसङ्गः। 'कुक्कुटमयूर्यौ', अर्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्ययः उत्पद्येत। किं तु षष्ठीद्विवचनमित्याशयेनाह—एतयोरिति। द्वन्द्वतत्पुरुषार्थयोरित्यर्थः। एवं चानुप्रयोगेऽपि तदेव लिङ्गं सिद्धम्। उपमेये षष्ठ्युपगमाद्वतिरपि षष्ठ्यन्तादेव

निष्कौशाम्बिः । ८१३ पूर्ववदश्ववडवौ । (२—४—२७) द्विवचनमतन्त्रम् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः । ८१४ रात्राह्नाहाः पुंसि । (२—४—२९) एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते । अहोरात्रः । रात्रेः पूर्वभागः पूर्वरात्रः । पूर्वाह्णः ।

---

गतिसमासमुदाहरति—निष्कौशाम्बिरिति । अत्र कौशाम्बीशब्दलिङ्गं समासस्य न भवति । यद्यपि निरादिसमास एवायम्, न तु गतिसमासः, प्रादिग्रहणमगत्यर्थमित्युक्तेः। तथापि गतिसमासग्रहणं प्रादिसमासोपलक्षणमित्याशयः । पूर्ववदश्ववडवौ । अश्वश्च वडवा च इति द्वन्द्वे परवल्लिङ्गं बाधित्वा पूर्ववल्लिङ्गार्थमिदम् । अश्ववडवाविति द्वन्द्वः पूर्वपदस्य लिङ्गं लभत इत्यर्थे बहुवचने विभक्त्यन्तरे च न स्यादित्यत आह—द्विवचनमतन्त्रमिति । उपलक्षणमिदम् । द्विवचनं विभक्तिश्चेति द्वयमपि अविवक्षितमित्यर्थः पूर्ववद्ग्रहणमत्र लिङ्गम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः । रात्राह्नाहाः । द्वन्द्वतत्पुरुषयोरित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणतं रात्रादिभिर्विशेष्यते, तदन्तविधिः । रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः पुंसीत्यर्थः । फलितमाह—एतदन्ताविति । परवल्लिङ्गतापवादः । ननु अहोरात्र इति समाहारद्वन्द्वे 'स नपुंसकम्' इति नपुंसकत्वप्रसङ्गः । न च नपुंसकत्वस्याप्ययं पुंस्त्वविधिरपवाद इति वाच्यम्, 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इति न्यायेन अस्य पुंस्त्वविधेः परवल्लिङ्गतामात्रापवादत्वात् । तस्मादहोरात्राविति इतरेतरद्वन्द्व एवोदाहर्तुमुचित इत्यत आह—अनन्तरत्वादिति । अयमिति । पुंस्त्वविधिरिति शेषः । अहोरात्र इति । अहश्च रात्रिश्च तयोस्समाहार इति द्वन्द्वे परत्वान्नपुंसकत्वम् अपवादत्वात् परवल्लिङ्गमपि बाधित्वा अनेन पुंस्त्वम् । 'अहस्सर्वैकदेश—' इत्यच् । पूर्वाह्ण इति । अह्नः पूर्वमित्येकदेशिसमासः । 'राजाहस्सखिभ्यः' इति टच् । 'अह्नोऽह्नः'

---

इत्याशयेनाह—परपदस्येवेति । भाष्ये तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति प्रत्याख्यातमिदं सूत्रम् । अस्मिंश्च प्रत्याख्याते तुल्यन्यायत्वाल्लिङ्गानुशासनं सर्वमेव प्रत्याख्यातम् तथापि तत्प्रौढिवादमात्रम् । अन्यथा व्याकरणस्यैव वैयर्थ्यप्रसङ्गात् । गतिसमासेष्विति । गतिग्रहणं प्रादीनामुपलक्षणं मुख्यस्य गतेरसंभवादित्याशयेन उदाहरति । निष्कौशाम्बिरिति । अतन्त्रमिति । अत्र च लिङ्गं पूर्ववद्ग्रहणम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः । इह समासार्थस्य वा पूर्ववल्लिङ्गातिदेशः, उत्तरपदार्थस्य वा, उभयथाप्यश्ववडवौ शोभनावित्यनुप्रयोगेऽपि पुंस्त्वं सिध्यति । ननु समासार्थस्य पुंस्त्वेऽपि स्वाश्रयस्त्रीत्वस्यानिवर्तनाट्टापः श्रवणप्रसङ्गः । न चातिदेशवैयर्थ्यम्, शसि नत्वप्रवृत्त्या अनुप्रयोगे पुंल्लिङ्गत्वभावेन च सत्सार्थक्यादिति चेदत्राहुः—इहैव निपातनाद् 'अश्ववडवपूर्वापराधरोत्तराणाम्—' इत्यत्र निपातनाद्वा टापो निवृत्तिरिति । अहोरात्र इति । प्राचा तु अहोरात्रमित्युदाहृतम् । तन्नेति प्रागेवोक्तम् । अत्र वदन्ति 'रात्राह्ना—' इत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते । तदन्तस्य तु 'परवल्लिङ्गम्—' इत्येव सिध्यति । अत एव भिन्नविषयत्वाद् 'विप्रतिषेधे परं कार्यम्' इति न प्रवर्तते । एवं च 'रात्राह्नाहाः' इति पुंस्त्वाप्रवृत्त्या समाहारे 'स नपुंसकम्' इत्येव भवति;

द्व्यहः 'सङ्ख्यापूर्वं रात्रं क्लीबम्' (लि १३१)। द्विरात्रम्, त्रिरात्रम्, गणरात्रम्। ८१५ अपथं नपुंसकम्। (२—४—३०) तत्पुरुष इत्येव। अन्यत्र तु—अपथो देशः। कृतसमासान्तनिर्देशान्नेह—अपन्थाः। ८१६ अर्धर्चाः पुंसि च। (२—४—३१) अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः, अर्धर्चम्। ध्वजः, ध्वजम्। एवं तीर्थशरीरमण्डपपीयूषदेहाङ्कुशकलशेत्यादि।

---

इत्यह्नादेशः। परवल्लिङ्गं नपुंसकं च बाधित्वा पुंस्त्वम्। द्व्यह इति। द्वयोरह्नोः समाहार इति विग्रहे द्विगुः, टच्, 'न सङ्ख्यादेः समाहारे' इत्यह्नादेशनिषेधः। परवल्लिङ्गं बाधित्वा पुंस्त्वम्। उत्तरपदस्याहन्शब्दस्य अकारान्तत्वाभावात् क्लीबत्वम्, समासान्तस्य समासभक्तत्वात्। सङ्ख्यापूर्वम्। लिङ्गानुशासनसूत्रमिदम्। न त्वष्टाध्यायीस्थं सूत्रम्, नापि वार्तिकम्, भाष्ये अदर्शनात्। 'रात्राह्नाहाः पुंसि' इत्यस्यायमपवादः। द्विरात्रमिति। समाहारद्विगुः। 'अहःसर्वैकदेश—' इत्यच्। गणरात्रमिति। गणशब्दो बहुपर्यायः, 'बहुगणवतु—' इति संख्यात्वम्। गणानां रात्रीणां समाहार इति द्विगुः, अच्। अपथं नपुंसकम्। न पन्था इति विग्रहे नञ्समासे नञो नस्य लोपे 'ऋक्पू—' इत्यप्रत्यये टिलोपे अपथशब्दः, स नपुंसकमित्यर्थः। परवल्लिङ्गतापवादः। तत्पुरुष इत्येवेति। 'परवल्लिङ्गम्—' इत्यतस्तदनुवृत्तेरिति भावः। द्वन्द्वग्रहणं तु नानुवर्तते, अयोग्यत्वात्। अन्यत्र त्विति। बहुव्रीहावित्यर्थः। अपन्था इति। 'पथो विभाषा' इति समासान्तविकल्पः। 'पथः सङ्ख्याव्ययादेः' इति वक्ष्यमाणवार्तिकेन गतार्थमिदं सूत्रम्। अर्धर्चाः। बहुवचनात्तदादीनां ग्रहणमित्याह—अर्धर्चादय इति। अर्धर्चमिति। ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासः।

---

परवल्लिङ्गापवादत्वादिति। तन्न। उत्तरीत्या द्व्यहत्र्यहादावपि नपुंसकत्वप्रसङ्गात्। न चेष्टापत्तिः। द्व्यहस्त्र्यह इति प्राचाप्युदाहृतत्वेन स्वमूलग्रन्थेन सह विरोधापत्तेः। 'ते तु त्रिंशदहोरात्राः' इत्यादिकोशविरोधाच्च। तस्माद्रात्राह्नान्तस्यैवायं पुंस्त्वविधिः, 'द्वन्द्वतत्पुरुषयोः—' इति प्रक्रमणात् तथा च भिन्नविषयत्वादप्रभावाद् 'रात्राह्नाहाः—' इति पुंस्त्वं समाहारनपुंसकता परत्वेन बाधत एव। संख्यापूर्वमिति। अत्र च 'अपथपुण्याहौ नपुंसकौ'। 'सङ्ख्यापूर्वा रात्रिः' इति लिङ्गानुशासनसूत्रं मूलम्। सङ्ख्याग्रहणेषु कृत्रिमाकृत्रिमन्यायो न प्रवर्तते 'द्व्यष्टनः सङ्ख्यायाम्—' इति सूत्रे अशीतिपर्युदासादित्याशयेनोदाहरति। द्विरात्रम्। त्रिरात्रम्। गणरात्रमिति। गणानां बहुरात्रीणां समाहार इति विग्रहः। अपथं नपुंसकम्। तत्पुरुष इत्येवेति। द्वन्द्वग्रहणं तु नानुवर्तते अयोग्यत्वादिति भावः। अपन्था इति। 'पथो विभाषा' इति समासान्तविकल्पः। इदं सूत्रं शक्यमकर्तुम्। 'पथः सङ्ख्याव्ययादेः' इति वक्ष्यमाणवार्तिकेन गतार्थत्वात्। प्रसङ्गादाह अर्धर्चा इति। इह केषाञ्चिदर्थभेदेन व्यवस्थेष्यते सा च व्यवस्था मद्यमकरन्दमाक्षिकाणां वाचो मधुशब्दो द्विलिङ्गः, चैत्रादिवाची तु पुंलिङ्गः। क्रियावचनस्तु विशेष्यलिङ्ग इत्येवं यथायथं ज्ञेयम्। 'अर्धर्चाः पुंसि च' 'स नपुंसकम्' इत्यनयोर्मध्ये 'जातिरप्राणिनाम्—' इति चतुःसूत्र्या सर्वांसिद्धिः चिन्त्या। बहूनां वचनं प्रतिपादनमिति व्याख्यानात् फलितोऽर्थ-

८१७ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ( १—२—५८ ) एकोऽप्यर्थो वा बहुवद्भवति। ब्राह्मणाः पूज्याः-ब्राह्मणः पूज्यः। ८१८ अस्मदो द्वयोश्च। ( १—२—५९ ) एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात्। वयं ब्रूमः। पक्षे, अहं ब्रवीमि, आवां ब्रूव इति वा। 'सविशेषणस्य प्रतिषेधः' (वा ७२१)। पटुरहं ब्रवीमि। ८१९ फल्गुनीप्रोष्ठपदानां च नक्षत्रे। ( १—२—६० ) द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात्। पूर्वे फल्गुन्यौ, पूर्वाः फल्गुन्यः। पूर्वे प्रोष्ठपदे—पूर्वाः प्रोष्ठपदाः। नक्षत्रे किम्—*फल्गुन्यौ माणविके। ८२० तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्। ( १—२—६३ ) बहुत्वं द्वित्ववद्भवति। तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू। तिष्येति किम्—†विशाखानूराधाः। नक्षत्रेति किम्—तिष्यपुनर्वसवो माणवकाः।

---

'ऋत्वपूः—' इति अच्। परवल्लिङ्गं स्त्रीत्वं बाधित्वा पुंनपुंसकत्वविकल्पः। जात्याख्यायाम्। आकृत्यधिकरणन्यायेन घटादिशब्दानां जातिवाचकत्वाज्जातेश्चैकत्वादेकवचनमेव स्यादित्यारम्भः। जातिशब्दे एकत्वे बहुवचनं वा स्यादित्यक्षरार्थः। तथा सति ब्राह्मणाः भोज्या इत्यादौ। विशेषणान्न स्यादित्याशङ्क्य एकस्मिन्नर्थे विद्यमानः शब्दो बहूनर्थान् वक्ति एकार्थो बहुवद्भवतीति लभ्यते इत्यभिप्रेत्याह—एकोऽप्यर्थ इति। बहुत्वप्रयुक्तं कार्यं लभत इत्यर्थः। अस्मदो द्वयोश्च। सविशेषणस्येति। 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' इत्यत्र तु अवयवगतबहुत्वाभिप्रायं बहुवचनम्। फल्गुनी। नक्षत्रे इति प्रथमाद्विवचनम्। नक्षत्रे यद्यभिधीयेते इत्यर्थः। चेन द्वयोरित्यनुकर्षः तदाह—द्वित्वे इति। पूर्वे प्रोष्ठपदे इति। स्त्रीत्वादीङश्शीभावः। 'प्रोष्ठपदा भाद्रपदा स्त्रियाम्' इत्यमरः। फाल्गुन्यौ माणविके इति। फाल्गुनीनक्षत्रयुक्तकाले जाते इत्यर्थः। 'नक्षत्रेण युक्तः—' इत्यण्। 'लुबविशेषे' इति लुप्। ततो जातार्थे 'फल्गुन्याषाढाभ्यां टानौ' इति टः। टित्वात् ङीप्। तिष्यपुनर्वस्वोः। विशाखानुराधा इति। विशाखे च अनुराधाश्चेति विग्रहः। तिष्यतिपुनर्वसव इति। तिष्यश्च पुनर्वसूचेति विग्रहः। तिष्यशब्दात् पुनर्वसुशब्दाच्च 'नक्षत्रेण युक्तः—' इत्यण्। 'लुबविशेषे' इति लुप्। ततो जातार्थे सन्धिवेलाद्यण्। 'श्रविष्ठाफल्गुनी—'

---

देश इत्याशयेनाह। एकोऽप्यर्थो वा बहुवदिति। एवं च विशेषणादपि सिद्धमिति ध्वनयन्नुदाहरति—ब्राह्मणाः पूज्या इति। जात्याख्यायां किम्, देवदत्तो यज्ञदत्तः। एकस्मिन् किम्, व्रीहियवौ। अस्मदो द्वयोश्च। चाद् 'एकस्मिन् बहुवचनमन्यतरस्याम्' इति च वर्तते तदेवाह—एकत्वे द्वित्वे च विवक्षित इत्यादि। फल्गुनीप्रोष्ठपदानां च। चकारेण द्वयोरनुकर्षणादाह—द्वित्व इति। फल्गुन्यौ माणविके इति। फल्गुनीशब्दाद् 'नक्षत्रेण युक्तः कालः' इत्यण्। तस्य 'लुबविशेषे' इति लुप्। ततो जातार्थे 'फल्गुन्यषाढाभ्यां टानौ' इति टः, टित्वाद् ङीप्। न चायं गौणः, यौगिकत्वात्। तथा च गौणमुख्यन्यायाप्रवृत्त्या नक्षत्रग्रहणमावश्यकमिति भावः। तिष्यपुनर्वस्वोः विशाखानुराधा इति। विशाखे चानुराधाश्चेति विग्रहः

---

* 'पूर्वफल्गुन्यौ' इति क्वचित् पाठः। † 'नुराधः' इति क्वचित् पाठः।

८२१ स नपुंसकम्। (२—४—१७) समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। परवल्लिङ्गापवादः। पञ्चगवम्। दन्तोष्ठम्। 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' (वा १५५६)। *पञ्चमूली। 'आवन्तो वा' (वा १५५७) पञ्चखट्वम्, पञ्चखट्वी। 'अनो नलोपश्च, वा च द्विगुः स्त्रियाम्' (वा १५५८) पञ्चतक्षी, पञ्चतक्षम्।

इत्यादिना लुक्। जात्याख्यायामित्यादिचतुस्सूत्र्या अत्र संगतिश्चिन्त्या। स नपुंसकम्। 'द्विगुरेकवचनम्' इति द्विगुः 'द्वन्द्वश्च प्राणि—' इति द्वन्द्वश्च तच्छब्देन परामृश्यते। तौ च समाहारार्थावेव विवक्षितौ व्याख्यानात्। तदाह—समाहार इति। पञ्चगवमिति। पञ्चानां गवां समाहार इति द्विगुः। दन्तोष्ठमिति। दन्ताश्च ओष्ठौ चेति विग्रहः। 'द्वन्द्वश्च प्राणि—' इति समाहारद्वन्द्वः। अकारान्तेति। अकारान्तम् उत्तरपदं यस्येति विग्रहः। 'स नपुंसकम्' इत्यस्यापवादः। पञ्चमूलीति। समाहारद्विगुः, स्त्रीत्वम्, 'द्विगोः' इति ङीप्। आवन्तो वेति। स्त्रियां वेति वक्तव्यमित्यर्थः। पञ्चखट्वमिति। समाहारद्विगुः। नपुंसकत्वे ह्रस्वः। पञ्चखट्वीति। उपसर्जनह्रस्वत्वे अदन्तत्वाद् 'द्विगोः' इति स्त्रीत्वपक्षे ङीप्। अनोनलोपश्चेति। अन इत्यावर्तते। एकं प्रथमया विपरिणतं द्विगुरित्यत्रान्वेति। तदन्तविधिः। अन्नन्तो द्विगुः स्त्रियां वा स्यात्, अनो नस्य लोपः स्यादित्यर्थः। वाग्रहणं स्त्रियामित्यनेनैव सबध्यते, न तु नलोपेऽपि। तेन स्त्रीत्वाभावेऽपि नलोपः। पञ्चतक्षीति। पञ्चानां तक्ष्णां समाहार इति द्विगुः, स्त्रीत्वम्, नलोपः, 'द्विगोः' इति ङीबिति भावः। पञ्चतक्षमिति। समाहारद्विगुः। स्त्रीत्वाभावपक्षे 'स नपुंसकम्' इति नपुंसकत्वम्, नलोप इति भावः। न च चान्तर्वर्तिनीं विभक्तिमाश्रित्य तक्षणशब्दस्य सुबन्तत्वेन पदत्वाद् 'न लोपः, प्रातिपदिक—' इत्यनेन नलोपो भविष्यतीति वाच्यम्,

तिष्यपुनर्वसव इति। तिष्यपुनर्वसुशब्दाभ्यां पूर्ववद् 'नक्षत्रेण युक्तः कालः' इत्यण्, 'लुबविशेषे' इति च लुप्। ततो जातार्थे 'संधिवेला—' आदिसूत्रेण अण्, तस्य तु 'श्रविष्ठाफल्गुन्यनुराधा—' इत्यादिना लुक्। नक्षत्र इत्यनुवर्तमाने पुनर्नक्षत्रग्रहणं पर्यायाणामपि यथा स्यादित्येतदर्थमित्याकरः। एवं च 'सिध्यपुनर्वसू' इत्यपि सिध्यतीति दिक्। बहुवचनस्य किम्, इदं तिष्यपुनर्वसु। 'चार्थे द्वन्द्वः' इति समाहारद्वन्द्वोऽयम्। स नपुंसकम्। 'अनन्तरस्य—' इति न्यायोऽत्र नाश्रीयते, तथात्वे द्विगुसंग्रहो न स्यादित्याशयेनाह—द्विगुर्द्वन्द्वश्चेति। अत्र व्याचक्षते—प्रकरणादेवानुवादलाभे 'स' ग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य संग्रहार्थम्, तेन सज्ञापरिभाषायामित्यादि सिद्धमिति। पञ्चगवमिति। 'तद्धितार्थे—' इत्यादिना समाहारे द्विगुः। दन्तोष्ठमिति। 'द्वंद्वश्च प्राणि—' इत्यादिना समाहारे द्वन्द्वः। पञ्चखट्वमिति। नपुंसकह्रस्वः। पञ्चखट्वीति। उपसर्जनह्रस्वत्वे सत्यदन्तत्वाद् 'द्विगोः' इति स्त्रीत्वपक्षे ङीप्। अनो नलोपश्चेति। 'उत्तरपदत्वे चापदादिविधौ—' इति प्रत्ययलक्षणप्रतिषेधादप्राप्तो नलोप इति भावः। इह वा शब्दः स्त्रियामित्यनेन सबध्यते, न तु पूर्वेण। तेन नित्यो नलोप इत्याह—पञ्चतक्षमित्यादि।

* 'पूली' इति क्वचित्।

'पात्राद्यन्तस्य न' (वा १५५९)। पञ्चपात्रम्। त्रिभुवनम्। चतुर्युगम्। पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा' (वा १५५३) पुण्याहम्। सुदिनाहम्। 'पथः संख्याव्ययादेः' (वा १५५४)। संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः। त्रयाणां पन्थास्त्रिपथम्। विरूपः पन्था विपथम्। कृतसमासान्तनिर्देशान्नेह—सुपन्थाः, अतिपन्थाः। 'सामान्ये नपुंसकम्' (वा ५०४३) मृदु

'उत्तरपदत्वे च—' इति प्रत्ययलक्षणनिषेधात्। **पात्राद्यन्तस्य नेति**। पात्रादिर्गणः। तदन्तस्य समाहारद्विगोः न स्त्रीत्वमिति वक्तव्यमित्यर्थः। **पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगमिति**। स्त्रीत्वाभावे 'स नपुंसकम्' इति नपुंसकत्वमिति भाव। **पुण्येति**। पुण्यसुदिनाभ्यां परो यः अहन्शब्दः तदन्तस्य तत्पुरुषस्य नपुंसकत्वं वक्तव्यमित्यर्थः। 'रात्राह्न—' इत्यस्यापवादः। **पुण्याहमिति**। पुण्यम् अहरिति कर्मधारयः, 'राजाहः—' इति टच्, टिलोपः। 'उत्तमैकाभ्यां च' इति अह्नादेशनिषेधः। सुदिनशब्द इति न पौनरुक्त्यम्। **पथः संख्याव्ययादेरिति**। नपुंसकत्वं वक्तव्यमिति शेषः। संख्याव्ययेति समाहारद्वन्द्वः। संख्याव्ययमादिरिति कर्मधारयः, दिग्योगे पञ्चमी, पर इति शेषः, पथ इति कृतसमासान्तादकारान्तात् प्रथमा। तदाह—**संख्याव्ययादेरिति**। परवल्लिङ्गतापवादः। **त्रिपथमिति**। 'ऋक्पूः—' इति अप्रत्ययः, टिलोपः। एवं विपथमित्यपि। 'प्रादयो गताद्यर्थे—' इति समासः। **सुपन्थाः, अतिपन्था इति**। 'स्वती पूजायाम्' इति समासः। 'न पूजनात्' इति समासान्तनिषेधः। आवश्यकत्वादनेन सिद्धे 'अपथं नपुंसकम्' इति न कार्यम्। सामान्ये **नपुंसकमिति**। न्यायसिद्धमेतत्, विशेष्यविशेषणासंनिधाने सति स्त्रीत्वपुंस्त्वयोरनभिव्यक्तौ 'उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति लक्षणलक्षित-

**पात्राद्यन्तस्येति**। स्त्रीत्वमिति शेषः। आकृतिगणोऽयम्। **सुदिनाहमिति**। प्रशस्तपर्यायः सुदिनशब्दः, 'सुदिनासु सभासु कार्यमेतत्प्रतिचिन्वीत विशेषतः स्वयं च' इत्यादिप्रयोगात्। **पथः संख्याव्ययेति**। संख्याव्ययरूपो य आदिस्तस्मादित्यर्थः। **त्रिपथम्,, विपथमिति**। 'ऋक्पूरब्धूः—' इत्यप्रत्ययः। **सुपन्थाः, अतिपन्था इति**। 'न पूजनात्' इति समासान्तनिषेधः। कथं तर्हि 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इत्यमर इति चेत् प्रमाद एवायमिति बहवः। मनोरमायां तु 'पथे गतौ' इत्यस्मात् पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति। तथा च त्रिकाण्डशेषः 'वाटः पथश्च मार्गः स्यात्' इति। पथशब्देन समासे पुंस्त्वमुपपन्नम्। न चैवं विपथसिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्, 'ईषदर्थे च' इति तत्संभवात्कुत्सायामर्थतः पर्यवसानादिति स्थितम्। केचित् तु 'पथः संख्या—' इति वार्तिके कृतसमासान्तस्यैव ग्रहणं न तु पचाद्यजन्तस्य, इत्यत्र बीजाभावाद्विपथः कापथ इति प्रयोगो दुरुपपाद एवेत्याहुः। अत्र माधवः—परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं प्रवर्तते नान्यत्र। विपथानगरी, बहुव्रीहिरयम्। पन्थानमतिक्रान्ता अतिपन्था। इहापि न, 'द्विगुप्राप्ता—' इत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति। **सामान्ये नपुंसकमिति**। अनियतलिङ्गविषयकमिदम्।

पचति। प्रातः कमनीयम् । ८२२ तत्पुरुषोऽनञ्कर्मधारयः । (२—४—१९) अधिकारोऽयम् । ८२३ संज्ञायां कन्थोशीनरेषु । (२—४—२०) कन्थान्तस्तत्पुरुषः क्लीबं स्यात्, सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः, तेषां कन्था । सौशमिकन्थम् । संज्ञायां किम्—वीरणकन्था । उशीनरेषु किम्—दाक्षिकन्था । ८२४ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । (२—४—२१) उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्,

नपुंसकत्वस्यैव न्याय्यत्वात् । अत एव 'दाण्डिनायन—' इति सूत्रभाष्ये एकश्रुतिस्वरसर्वनाम, नपुंसकलिङ्गसर्वनाम युक्तम् । मृदु पचतीति । क्रियाविशेषणमिदं द्वितीयान्तम् । पचेर्हि विक्लित्त्यनुकूलव्यापारोऽर्थः । तत्र विक्लित्त्यंशे मृदुत्वमन्वेति । विक्लित्तिश्च व्यापारे साध्यत्वेनान्वेति । तथा च मृदु पाकं करोतीत्यर्थः । तथा च धातूपात्तव्यापारं प्रति कर्मीभूतेन विक्लित्त्यंशेन सामानाधिकरण्याद् मृद्विति द्वितीया यत्र तु धात्वर्थे करणत्वेनान्वेति 'यजेत स्वर्गकाम' इत्यादौ, तत्र हि यागेन स्वर्गं कुर्यादित्यर्थः । तत्र क्रियाविशेषणस्य तृतीयान्तत्वमेव 'ज्योतिष्टोमेन यजेत स्वर्गकाम' इत्यादावित्यन्यत्र विस्तरः । प्रातः कमनीयमिति । रमणीयमित्यर्थः । अत्रापि प्रातरित्यव्ययस्य विशेष्यस्यालिङ्गत्वात् तद्विशेषणस्य कमनीयशब्दस्यानव्ययस्य लिङ्गविशेषावगमकत्वाभावाद् नपुंसकत्वमेवेति भावः । इदं चानियतलिङ्गविषयम् । तेन आदिः पचति प्रातरादिरित्यत्र न भवति, आदिशब्दस्य नियतलिङ्गत्वात् । तत्पुरुषोऽनञ् । नञ्समासकर्मधारयाभ्यां भिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभागित्यर्थः । तदाह—अधिकारोऽयमिति । 'परवल्लिङ्गम्—' इत्यतः प्रागिति शेषः । संज्ञायां कन्था । सुगममेव । उपज्ञा । उपज्ञायते प्रथमं ज्ञायत इत्युपज्ञा । 'स्त्रियां क्तिन्' इत्यधिकारे 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यते आरभ्यते इत्युपक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्य' इति वृद्धिनिषेधः । उपज्ञा चोपक्रमश्चेति समाहारद्वन्द्वः । तत्पुरुष इत्यस्य विशेषणमिदम्, तदन्तविधिः, 'स नपुंसकम्' इत्यतो नपुंसकमित्यनुवर्तते । तदाह—उपज्ञान्त उपक्रमान्तश्चेति । तच्छब्देन उपज्ञोपक्रमौ विवक्षितौ । आदिशब्दः भावप्रधानः प्राथम्ये

तेनादिः पचति, प्रातरादिरिति पुंस्त्वमेव । मृदु पचतीति । क्रियाविशेषणत्वाद् द्वितीयान्तम् । धातूपात्तभावनां प्रति हि फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये द्वितीया । अत एव मङ्गल्यत्वादित्यादौ कारकपूर्वकत्वात्यण् । यत्र तु भावनां प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव, ज्योतिष्टोमेन यजेत यथा । एतच्च 'करणे यजः' इति सूत्रे वृत्तिपदमञ्जर्यो स्पष्टम् । तत्पुरुषोऽनञ् । नञ्समासकर्मधारयाभिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभाग्भवतीति सूत्रार्थः । उपज्ञो । उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्य—' इति वृद्धिप्रतिषेधः । उपज्ञा च उपक्रमश्चेति समाहारद्वन्द्वः । स चानुवर्तमानस्य तत्पुरुषस्य विशेषणम् । तच्छब्देन उपज्ञोपक्रमौ परामृश्येते । तदेतत्सकलमभिप्रेत्याह—उपज्ञान्त इत्यादि । आख्यातुमिच्छा

मलकानि। ९११ **विशिष्टलिङ्गो नदीदेशोऽग्रामाः** । (२—४—७) ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात् । उद्धयश्च इरावती च

---

चिनावेतौ। ननु वदर्याः फलानि वदराणि, आमलक्याः फलान्यामलकानि, 'फले लुक्' इति विकारप्रत्ययस्य लुकि 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । फलत्वव्याप्यजातिविशेषवाचिनावेतौ। ततश्च वदराणि चामलकानि च वदरामलकं वदरामलकानीति कथं रूपद्वयम्; 'जातिरप्राणिनाम्' इत्येकवत्त्वस्य नित्यत्वादित्यत आह—**जातिप्राधान्य इति**। व्यक्तिविशेषानादरेण सकलतत्तद्व्यक्त्यनुस्यूतजातिविवक्षायामित्यर्थः। घटमानयेत्यादौ हि घटादिशब्दानामाकृत्यधिकरणन्यायेन घटत्वादिजातिरर्थः। जातेश्च निराश्रयाया उपस्थित्यसंभवाद् आश्रयभूतव्यक्त्याकाङ्क्षायामविशेषात् कृत्स्नाप्युपस्थिता । तत्र घटमानयेत्यादिप्रयोगेषु जातेरतीतानागतवर्तमानकृत्स्नव्यक्तीनां च क्रियान्वयासंभावाद् व्यक्तिविशेषमेव कञ्चिदादाय क्रिया विश्राम्यति। इदमेव च जातेः प्राधान्यं तत्तज्जात्याश्रयसकलतत्तद्व्यक्तिबोधकत्वात्मकम् । घटाः शुक्ला इत्यादिप्रयोगेषु पदान्तरसमभिव्याहारादिवशाद्व्यक्तिविशेषानेव जातिरुपस्थापयतीति जातेरप्राधान्यम्, जात्याश्रयसकलव्यक्त्यनुपस्थापकत्वादिति 'तस्यादितः—' इति सूत्रे कैयटे स्पष्टम्। ततश्च फलत्वव्याप्यया वदरत्वजात्या आमलकत्वजात्या चाविशेषात्तदाश्रयसकलव्यक्त्युपस्थितौ वदरामलकमित्येकवद्भावः । **द्रव्यविशेषेति** । आरण्यानि वदरामलकानीत्यादौ फलत्वव्याप्यवदरत्वामलकत्वादिजातिभ्याम् आरण्यत्वादिविशेषितकतिपयव्यक्तीनामेवोपस्थितिः । ग्राम्याणां व्यक्तीनामनुपस्थितेः तयोर्जात्योरप्राधान्याद् नायमेकवद्भाव इत्यर्थः। क्षीरोदके संपृक्ते इत्यन्तादिवत्सूत्रभाष्यप्रयोगोऽत्र लिङ्गमित्याहुः । **विशिष्टलिङ्गो नदीदेशोऽग्रामाः** । अग्रामा इति च्छेदः। व्यत्ययेन वहुत्वे एकवचनम्। विपूर्वकशिषधातुः भेदे वर्तते—

---

**जातिप्राधान्य एवेति**। एतच्च जातिग्रहणाल्लब्धम्। अन्यथा पर्युदासेनैव जात्युपसर्जनद्रव्यवाचिनोऽपि ग्रहणोपपत्तौ किं तेनेति भावः। **द्रव्यविशेषेति**। नन्वेवं 'रञ्जिता नु विविधास्तरुशैलाः' इति भारविप्रयोगः संगच्छत एवेति किमिति तरुसहिताः शैला इति मनोरमायां समर्थितमिति चेत्—अत्राहुः—सकलतरुशैलरञ्जनं तत्र विवक्षितम्, न तु केषां चित्तरुशैलविशेषाणामिति जातिप्रधान्यादेकवद्भावमाशङ्क्य तथोक्तमिति । **वदरामलकानीति**। 'फले लुक्' इति लुक्। 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुकि फलत्वजात्युपसर्जनद्रव्यवचनावेतौ। 'विभाषा वृक्षमृग–' इति सूत्रे वदराणि चामलकानि च वदरामलकम्। 'जातिरप्राणिनाम्' इत्येकवद्भाव इति वक्ष्यति, तत्तु नानेन ग्रन्थेन विरुध्यते । फलत्वजातिवाचिनां वहुवचनान्तानामेव द्वन्द्व एकवद्भवति, न त्वेकवचनान्तानां द्वन्द्व इति 'फलसेनावनस्पति–' इति वार्तिकोक्तनियममुपेत्य तत्प्रवृत्तेः। **विशिष्टलिङ्गो**। सूत्रे चत्वारोऽपि शब्दा अवयवधर्मेणान्वयद्विन्द्वे वर्तन्ते इत्याशयेनाह—**ग्रामेत्यादि**। इह नदीवाचिनां द्वन्द्वः, देशवाचिनां द्वन्द्व इति वाक्यभेदेन व्याख्येयम्। तेन गङ्गाकुरुक्षेत्रे इत्यत्र न भवति । देशशब्देनात्र प्रसिद्ध एव जनपदो गृह्यते, नद्याः पृथक् ग्रहणात्। तेन पर्वतानां न, कैलासश्च गन्धमादनं च

गोव्याघ्रम्, काकोलूकम् इत्यादौ परत्वाद् 'विभाषा वृक्षमृग—' ( सू ९१६ ) इति प्राप्तं चकारेण बाध्यते। ९१४ शूद्राणामनिरवसितानाम् (२—४—१०) अबहिष्कृतानां शूद्राणां प्राग्वत्। तक्षायस्कारम्। पात्राद्बहिष्कृतानां तु चाण्डाल-मृतपाः। ९१५ गवाश्वप्रभृतीनि च। (२—४—११) यथोच्चारितानि साधूनि स्युः। गवाश्वम्। दासीदासमित्यादि। ९१६ विभाषा वृक्षमृगतृणधान्य-

कादाचित्कत्वात्। अमृतादिप्रयुक्तः कादाचित्क एव हि तेषां विरोधः, अमृतमथनादिकाले तेषां विरोधाभावात्। ननु 'विभाषा वृक्षमृग—' इति सूत्रे पशुशकुनिद्वन्द्वयोरेकवद्भावविकल्पो वक्ष्यते। तस्य तावद् गोमहिषं गोमहिषाः, हंसचक्रवाकं हंसचक्रवाकाः, इत्यत्रावकाशः। येषां चेत्यस्य अहिनकुलमित्यवकाशः। गोव्याघ्रं काकोलूकमित्यादौ तदुभयं प्रसक्तम्। तत्र परत्वाद्वक्ष्यमाणविभाषा प्राप्नोतीत्याशङ्क्याह-**गोव्याघ्रमिति**। **चकारेणेति**। येषां चेति चकारेणेत्यर्थः। एतच्च भाष्ये स्पष्टम्। **शूद्राणाम्**। अनिरवसितशब्दं व्याचष्टे—**अबहिष्कृतानामिति**। 'यैर्भुक्तं पात्रं क्षारोदकप्रक्षालनेन संस्कारेणापि न शुध्यति ते निरवसिताः चाण्डालादयः। यैस्तु भुक्तं पात्रं संस्कारेण शुध्यति तेऽनिरवसिताः' इति भाष्ये स्पष्टम्। **शूद्राणामिति**। त्रैवर्णिकेतरः शूद्रशब्देन विवक्षितः, अनिरवसितानामिति लिङ्गात्। **प्राग्वदिति**। समाहारद्वन्द्व एकवदित्यर्थः। **तक्षायस्कारमिति**। तक्षाणश्च अयस्काराश्चेति विग्रहः। अनिरवसितानामित्यस्य प्रयोजनमाह—**पात्रादिति**। **चाण्डालमृतपा इति**। एतद्भुक्तपात्रस्य संस्कारेणापि नास्ति शुद्धिरिति अत एव भाष्याद्विज्ञेयम्। धर्मशास्त्रेषु च प्रसिद्धमेतत्। **गवाश्वप्रभृतीनि च**। यथा गणे पठितानि तथैव साधूनीत्यर्थः। **गवाश्वमिति**। गावश्चाश्वाश्चेति विग्रहः। अत्र 'विभाषा वृक्ष' इति पशुद्वन्द्वत्वाद् विकल्पे प्राप्ते नित्योऽयं विधिः। अत्र 'सर्वत्र विभाषा—'इति प्रकृतिभावे पूर्वरूपे च गो अश्वं गोऽश्वमिति नैकवत्त्वनियमः यथोच्चारितानीत्युक्तेः, गणे च गवाश्वमित्येव निर्देशात्। गवाश्वादिषु 'यथोच्चारिते द्वन्द्ववृत्तम्' इति वार्तिकमत्र मानम्। **दासीदासमिति**। अत्रैकवत्त्वनियमः 'पुमान् स्त्रिया' इत्येकशेषस्तु

अतएव निपातनाद 'इसुसुक्तान्तात्—'इति कादेशः, 'अव्ययानां भमात्रे—'इति टिलोपश्च न। शाश्वतिकः किम्, 'देवासुरैरमृतमम्बुनिधिर्ममन्थे'। तेषां ह्यमृतादिप्रयुक्तः कादाचित्को विरोधो न तु नित्यः, मन्थनप्रवृत्तिकाले तद्विरहात्। **परत्वादिति**। पशुशकुनिद्वन्द्वस्यावकाशो गोमहिषं गोमहिषाः, हंसचक्रवाकं हंसचक्रवाकाः। 'येषां च—' इत्यस्यावकाशो मार्जारमूषकं श्रमणब्राह्मणमित्यादौ ज्ञेयः। **चकारेण बाध्यत इति**। चकारः पुनर्विधायक इति भावः। **शूद्राणाम्**। त्रैवर्णिकेतरमनुष्यपरः शूद्रशब्दो न तु शूद्रत्वजातिपरः, 'अनिरवसितानाम्' इति निषेधात्। **पात्रादिति**। यैर्भुक्ते 'भस्मना शुध्यते कांस्यम्' इत्यादिस्मृत्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः। **गवाश्व**। **यथोच्चारितानीति**। गणपाठे पाणिनिना यथा पठितानि तथैव साधूनीत्यर्थः। तेनावङः पाक्षिकत्वाद्यदा नावङ् तदा उत्तरसूत्रेण विकल्पो न भवति। गोअश्वम्। 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः'। **गवाश्वमिति**।

व्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । (२-४-१२) वृक्षादीनां सप्तानां द्वन्द्वः, अश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा । 'वृक्षादौ विशेषाणामेव ग्रहणम्' (वा ५१८) प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । रुरुपृषतम्, रुरुपृषताः । कुशकाशम्, कुशकाशाः । व्रीहियवम्, व्रीहियवाः । दधिघृतम्, दधिघृते । गोमहिषम्, गोमहिषाः । शुकबकम्, शुकबकाः । अश्ववडवम्, अश्ववडवौ । पूर्वापरम्, पूर्वापरे । अधरोत्तरम्, अधरोत्तरे । 'फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्' (वा १५४०) । बदराणि चामलकानि च बदरामलकम् । 'जातिरप्राणिनाम्' (सू ९१०) इत्येकवद्भावे ।

---

निपातनात् । इत्यादीति । *गवाश्वेत्यादिकमित्यादि वृत्तौ स्पष्टम् । विभाषा वृक्ष । द्वन्द्व इत्यनुवृत्तम् । अत्रापि षष्ठी विषयभेदाद्भिद्यते । वृक्षादिसप्तानामवयववाचकत्वेनान्वयः—वृक्षादीनां द्वन्द्व इति । वृक्षाद्यवयवको द्वन्द्व इति लभ्यते । अश्ववडवादियुगलत्रयस्य त्वभेदेनान्वयः—अश्ववडव, पूर्वापर, अधरोत्तर इत्यात्मको द्वन्द्व इति, तदाह—वृक्षादीनामिति । प्राग्वदिति । विकल्पेन एकवदित्यर्थः । वृक्षादाविति । वृक्षविशेषवाचिनां तृणविशेषवाचिनां धान्यविशेषवाचिनां पशुविशेषवाचिनां चेत्यर्थः । 'स्वं रूपम्-' इति सूत्रे भाष्यवार्तिकयोस्तथोक्तत्वादिति भावः । तथाच वृक्षाश्च धवाश्चेत्यादौ नायं विधिरिति फलितम् । किं तु 'जातिरप्राणिनाम्' इति नित्यमेवैकवत्त्वम् । तत्र वृक्षाद्यवयवकद्वन्द्वेषु सप्तसु वृक्षद्वन्द्वमुदाहरति—प्लक्षेति । प्लक्षाश्च न्यग्रोधाश्चेति विग्रहः । मृगद्वन्द्वमुदाहरति—रुरुपृषतमिति । रुरवश्च पृषताश्चेति विग्रहः । तृणद्वन्द्वमुदाहरति—कुशेति । कुशाश्च काशाश्चेति विग्रहः । धान्यद्वन्द्वमुदाहरति—व्रीहीति । व्रीहयश्च यवाश्चेति विग्रहः । व्यञ्जनद्वन्द्वमुदाहरति—दधीति । दधि च घृतं चेति विग्रहः । पशुद्वन्द्वमुदाहरति—गोमहिषमिति । गावश्च महिषाश्चेति विग्रहः । शकुनिद्वन्द्वमुदाहरति—शुकेति । शुकाश्च बकाश्चेति विग्रहः । अश्ववडवादिद्वन्द्वमुदाहरति—अश्ववडवमिति । अश्वाश्च वडवाश्चेति विग्रहः । 'पूर्ववदश्ववडवौ' इति अश्ववडवावित्यत्र पूर्वपदस्य पुंलिङ्गता । फलसेनेति । एकवद्भावप्रकरणशेषभूतमिदं वार्तिकम् । 'द्वन्द्वश्च प्राणि-' इत्यादिसूत्रे फलसेनादीनां द्वन्द्व एकवद्भवन् बहुवचनान्तावयवक एव एकवद्भवति, नत्वेकद्विवचनान्तावयवक इत्यर्थः । विकारतद्धितस्य फले लुक् । 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । जातिरिति । बहुवचनान्तावयवकद्वन्द्ववाद

---

इह पशुद्वन्द्वे विभाषा प्राप्ता, दासीदासमिति । अत्र 'पुमान् स्त्रिया' इत्येकशेषो बाध्यते । विभाषा । विशेषाणामेवेति । अयं भावः—वृक्षादिद्वन्द्वे प्रत्येकं द्वन्द्वा विशेष्यन्ते, न चैकः वृक्षशब्दो द्वन्द्वः, न च द्वयोः सह प्रयोगः, 'सरूपाणाम्-' इत्येकशेषात् । नापि पर्यायाणां 'विरूपाणामपि समानार्थानाम्' इत्येकशेषात् । नापि वृक्षश्च धवश्चेत्यादिसामान्यविशेषयोः, अनभिधानात्तथा द्वन्द्वस्यैवाभावादिति । सर्व-

---

* 'गवादिकम्' इति क्वचिन्नास्ति । † क्वचित् 'गर्वल्कम्' इति पाठः ।

नेह—बदरामलके, रथिकाश्वारोहौ, प्लक्षन्यग्रोधावित्यादि । 'विभाषा वृक्ष–' ( सू ९१६ ) इति सूत्रे येऽप्राणिनस्तेषां ग्रहणं 'जातिरप्राणिनां' ( सू० ९१० ) इति नित्ये प्राप्ते विकल्पार्थम् । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते 'मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः, अन्यैस्तु सहेतरेतरयोग एव'

---

'जातिरप्राणिनाम्' इत्येकवत्त्वमित्यर्थः । बहुप्रकृतिरेवेत्यस्य प्रयोजनमाह–नेहेति । बदरामलके इति । बदरं चामलकं चेति विग्रहः । बहुवचनान्तावयवकद्वन्द्वत्वाभावान्न 'जातिरप्राणिनाम्' इत्येकवत्त्वम् । रथिकाश्वारोहाविति । अत्र सेनाङ्गत्वेऽपि नैकवत्त्वम् । प्लक्षन्यग्रोधाविति । इह वृक्षद्वन्द्वत्वेऽपि 'विभाषा वृक्ष–' इत्येकवत्त्वं न । इत्यादीति । रुरुपृषतौ, अत्र मृगद्वन्द्वत्वेऽपि नैकवत्त्वम् । हंसचक्रवाकौ, अत्र शकुनिद्वन्द्वत्वेऽपि नैकवत्त्वम् । यूकालिक्षे, अत्र क्षुद्रजन्तुद्वन्द्वत्वेऽपि नैकवत्त्वम् । व्रीहियवौ, अत्र धान्यद्वन्द्वत्वेऽपि नैकवत्त्वम् । कुशकाशौ, अत्र तृणद्वन्द्वत्वेऽपि नैकवत्त्वम् । ननु 'चार्थे द्वन्द्वः' इत्यनेनेतरेतरयोगसमाहारद्वन्द्वाभ्यामेव एकवत्त्वविकल्पस्य सिद्धत्वाद् 'विभाषा वृक्ष–' इति सूत्रं व्यर्थमित्याशङ्क्याह—विभाषेत्यादि विकल्पार्थमित्यन्तम् । वृक्षमृगतृणधान्यव्यञ्जनद्वन्द्वेषु प्लक्षन्यग्रोधं रुरुपृषतं व्रीहियवं दधिघृतम् इत्येतेषु 'जातिरप्राणिनाम्' इति नित्यविहितैकवत्त्वानित्यत्वार्थमप्राणिवृक्ष आदिग्रहणमित्यर्थः । नन्वेवमपि पशुग्रहणं व्यर्थम् तदुदाहरणे गोमहिषमित्यत्र 'जातिरप्राणिनाम्' इति नित्यैकवत्त्वनियमस्याप्राप्त्या तन्निवृत्त्यर्थत्वायोगादित्यत आह—पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वाद् नित्ये प्राप्ते इति । विकल्पार्थमित्यनुपज्यते । नन्वेवमपि मृगशकुनिग्रहणं व्यर्थम्, तदुदाहरणे रुरुपृषतं शुकबकमित्यादौ 'जातिरप्राणिनाम्' इति एकवत्त्वस्य सेनाङ्गनिबन्धनैकत्वस्य च अप्राप्त्या तन्निवृत्त्यर्थत्वाभावेन 'चार्थे द्वन्द्वः' इत्येवेतरेतरयोग समाहारद्वन्द्वाभ्यामेकवत्त्वविकल्पसिद्धेरित्यत आह—मृगाणां मृगैरेवेत्यादि मृगशकुनिग्रहणमित्यन्तम् । मृगाणां मृगैरेव सह उभयत्र इतरेतरयोगे समाहारे च 'चार्थे–' इति द्वन्द्वः । यथा—रुरुपृषतं रुरुपृषतावित्यादि । तथा शकुनीनां शकुनिभिरेव उभयत्र इतरेतरयोगे समाहारे च 'चार्थे–' इति द्वन्द्वः । यथा शुकबकम्, शुकबकाविति । मृगाणां तदितरैः शकुनीनां तदन्यैश्च सह इतरेतरयोगद्वन्द्व एव भवति, न समाहारद्वन्द्वः । यथा—रुरुशुका इति । एतादृशनियमार्थं मृगशकुनिग्रहणमित्यर्थः । ननु पूर्वापरग्रहणम् अधरोत्तरग्रहणं च व्यर्थम्, 'चार्थे–'इत्येव सिद्धेः । 'जातिरप्राणिनाम्' इत्यादिनित्यैकवत्त्वस्य तत्र अप्रवृत्तया तन्निवृत्त्यर्थत्वासं-

---

प्रकरणशेषतया नियममाह—फलसेनेत्यादि । फलसेनादीनां द्वन्द्वो 'विभाषा वृक्षमृग–'इत्यनेन लक्षणान्तरेण वा एकवद्भवन्बहुप्रकृतिरेव एकवद्भवतीत्यर्थः । बहवो यस्य पदार्थाः, बहुवचनान्ता वा प्रकृतिः कारणं यस्य स बहुप्रकृतिः । बदराणि चामलकानि चेति । 'जात्याख्यायामेकस्मिन्–' इति वैकल्पिकं बहुवचनम् । बदरामलके इति । जातिप्राधान्येऽप्येकवचनान्तयोर्द्वन्द्व इति नास्त्येकवद्भाव इति भावः । पशुग्रहणमिति । विकल्पार्थमित्यनुपज्यते । 'चार्थे द्वन्द्वः' इत्यनेनैव सिद्धे मृग–

योग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धं किम्। नन्दकपाञ्चजन्यौ। इह पाक्षिकः समाहारद्वन्द्वो भवत्येव। ९१८ न दधिपयआदीनि। (२—४—१४) एतानि नैकवत्स्युः। दधिपयसी। इध्माबर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे। ९१९ अधिकरणैतावत्त्वे च। (२—४—१५) द्रव्यसङ्ख्यावगमे एकवदेवेति

द्रव्यवाचित्वाद् न समाहारद्वन्द्व इति भावः। नन्दकपाञ्चजन्याविति। विष्णोः खड्गः नन्दकः, शङ्खस्तु पाञ्चजन्यः, तयोरेकत्र विष्णौ सहावस्थानाद् न विरुद्धत्वमिति स्थितिः। इह विप्रतिषिद्धग्रहणाभावे 'चार्थे—' इति समाहारद्वन्द्वः अद्रव्यवाचिनामेवेति नियमो लभ्येत। एवं सति नन्दकपाञ्चजन्यमिति पाक्षिकसमाहारद्वन्द्वो न स्यात्, समाहारद्वन्द्वस्य सर्वस्यापि अद्रव्यवाचिष्वेव नियमितत्वात्। विप्रतिषिद्धमित्युक्तौ तु विरुद्धार्थानां समाहारद्वन्द्वश्चेत्, तर्हि अद्रव्यवाचिनामेवेति नियमो लभ्यते। नन्दकपाञ्चजन्ययोश्चाविरुद्धत्वादयं नियमो न प्रवर्तते। ततश्च द्रव्यवाचित्वेऽपि 'चार्थे—' इति कदाचित् समाहारद्वन्द्वः कदाचित् इतरेतरयोगद्वन्द्वश्च भवत्येव। तदाह—इह पाक्षिकः समाहारद्वन्द्वो भवत्येवेति। न दधिपयआदीनि। एतानि नैकवत् स्युरिति। एषां समाहारद्वन्द्वो नास्तीत्यर्थः। दधिपयसी इति। दधि च पयश्चेति विग्रहः। 'जातिरप्राणिनाम्' इति नित्यमेकवत्त्वं प्राप्तं बाधित्वा व्यञ्जनद्वन्द्वत्वाद्विकल्पः प्राप्तः, सोऽपि न भवति। इध्माबर्हिषी इति। इध्मं च बर्हिश्चेति विग्रहः। दीर्घ इति। इध्मशब्दस्येति शेषः। ऋक्सामे इति। ऋक् च साम चेति विग्रहः। 'अचतुर्' इत्यादिनाऽच्समासान्तः। वाङ्मनसे इति। वाक् च मनश्चेति विग्रहः। पूर्ववत्समासान्तः। अत्र गणे ब्रह्मप्रजापती इत्यादि पठितम्। समाहारद्वन्द्व एवेति नियमप्रसक्तेऽपि नानेन नियमस्यैव निषेधः, ब्रह्मप्रजापती इत्यादौ नियमस्याप्राप्तेः। किन्त्वेकवत्त्वस्यैव। तथाच 'चार्थे—' इति समाहारद्वन्द्वस्य निषेधः फलति। अधिकरणैतावत्त्वे च। अधिकरणं द्रव्यम्, तस्य एतावत्त्वमियत्ताविशेषः। तदाह— द्रव्यसंख्यावगम इति। समस्यमानपदार्थस्येयत्ताविशेषे पदान्तरसमभिव्याहार—

दुःखे इत्यादि। विरोधोऽत्र सहानवस्थानलक्षणः। भवत्येवेति। विप्रतिषिद्धग्रहणाभावे तु स न स्यात्, अद्रव्यवाचिनामेवेति नियमादिति भावः। अनधिकरणवाचीति किम्, शीतोष्णे उदके स्तः। इह पाक्षिकः समाहारद्वन्द्वोऽपि स्यादिति दिक्। न दधिपय। दधिपयसी इति। व्यञ्जनत्वाद्विकल्पः प्राप्तः। एवं 'मधुसर्पिषी', 'सर्पिर्मधुनी' इत्यत्रापि बाध्यम्। इह 'ब्रह्मप्रजापती' 'शिववैश्रवणौ' इत्यादौ समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वोऽनेन व्यवस्थाप्यते। तत्साहचर्याद्दधिपयसी इत्यादावपि तथैव। तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेऽपि जातिलक्षणो नित्यमेकवद्भावोऽस्त्विति न शङ्कनीयम्, किं च नेह लक्षणविशेषे आग्रहः। 'एतानि नैकवत्स्युः' इत्येकवद्भावमात्रस्य निषेधात्, यथा 'न षट्स्वस्रादिभ्यः' इत्यत्र ङीप्टापोरुभयोरपि निषेधसिद्धये 'स्त्रियां यदुक्तं तन्न' इति सामान्यतो निषिध्यत इति दिक्। ऋक्सामे, वाङ्मनसे इति। 'अचतुर—' इत्यादिनात्र समासान्तोऽच् निपात्यते। अधिकरणै।

(६—३—२५) विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः। मातापितरौ। 'पुत्रेऽन्यतरस्याम्' (सू ९८०)

ष्टेनेत्यादि सिद्धम्। समीपसमीपिनोरभेदविवक्षायां सामानाधिकरण्यम्। नवत्वसंख्यदन्तोष्ठसमूह एकादशत्वसंख्यदन्तोष्ठसमूह इति वा बोधः। **उपदशा दन्तोष्ठा इति**। इतरेतरयोगद्वन्द्वोऽयम्। दशानां समीपे ये सन्ति ते उपदशा इति बहुव्रीहिः। नव एकादश वेत्यर्थः। बहुव्रीहेरेवात्रानुप्रयोगः समानलिङ्गवचनत्वाद् इति भाष्यम्। **आनङृतो द्वन्द्वे। विद्यायोनिसंबन्धवाचिनामिति**। विद्यासंबन्धवाचिनां योनिसंबन्धवाचिनां चेत्यर्थः। 'ऋतो विद्यायोनिसंबन्धेभ्यः' इत्यतस्तदनुवृत्तेरिति भावः। **ऋदन्तानामिति**। बहुत्वे व्यत्ययेन 'ऋतः' इत्येकवचनम्। ऋदन्तसर्वावयवकानामित्यर्थः। ऋत इत्यनुवर्तमाने पुनरृदित्युक्तिः एतदर्थेति भावः। **उत्तरपदे पर इति**। 'अलुगुत्तरपदे' इत्यधिकारादिति भावः। **होतापोताराविति**। होता च पोता चेति विग्रहः। विद्याद्वारकैकयज्ञत्विक्त्वकृतः सम्बन्धः। आनङि ङकार इत्, अकार उच्चारणार्थः, 'ङिच्च' इत्यन्तादेशः, नलोपः, नकारस्तु रपरत्वनिवृत्त्यर्थं इति भाष्ये स्पष्टम्। **होतृपोत्रिति**। अत्र होतृशब्दस्य पोतृशब्दस्य च नानङ् नेष्टृशब्देन व्यवधानाद् उत्तरपदपरकत्वाभावात्। तथा च नेष्टृशब्दस्यैवानङ्। उत्तरपदेन तु न पूर्वपदमाक्षिप्यते, समर्थसूत्रे नेष्टृशब्दस्याऽनङ्दर्शनात्। अथ योनिसंबन्धमुदाहरति—**मातापितराविति**। पितृपितामहा इत्यादौ तु नानङ् ऋदन्तसर्वावयवकत्वाभावादिति भावः। तर्हि पितापुत्राविति कथमित्यत आह—**पुत्रेऽन्यतरस्यामिति**। 'ऋतो विद्यायोनिसंबन्धेभ्यः' इत्यत्र

---

स्यैवानुप्रयोगः। यदि तु बहुव्रीहेस्तदा 'उपदशस्य दन्तोष्ठस्य' इति षष्ठी स्यात्, 'उपदशं दन्तोष्ठस्य' इत्येवेष्यत इत्याकरः। दन्तोष्ठे दर्शनमित्यभिप्रायेण षष्ठ्या कृतायामपि उपदशशब्दे षष्ठी नेष्यते। अतो बहुव्रीहेर्नानुप्रयोगः किं त्वव्ययीभावस्यैवेति तदाशयः। 'आनङ्'। ऋत' इति षष्ठ्यन्तं जातावेकवचनम्। 'ऋतो विद्यायोनिसंबन्धेभ्यः' इति त्वनुवर्तते, तच्चात्र षष्ठ्या विपरिणम्यते, तदाह—**विद्यायोनिसंबन्धवाचिनामिति**। ननु 'ऋतः' इत्यनुवर्तनादेव सिद्धे किमनेन ऋतो ग्रहणेन। अत्राहुः—'ऋतः' इति श्रूयमाणद्वन्द्वविशेषम्। अनुवृत्तं तूत्तरपदे परतो यत्पूर्वं तस्य विशेषणं पुत्रशब्दे पर आनङ् विधास्यते तत्र कार्यिनिर्देशार्थम्। अन्यथा तत्पुत्रावित्यत्रापि स्यादिति। **उत्तरपद इति**। एतच्च 'अलुगुत्तरपदे' इत्यधिकाराल्लभ्यते। उत्तरपदे परतः पूर्वं यदृदन्तं तस्यानङित्यर्थः। **होतापोताराविति**। आनङो ङित्त्वात्पूर्वन्त्य ऋकारस्यादेशे सति नलोपः। न चाकारमात्रमेव विधीयतामिति वाच्यम्, 'उरण् रपरः' इति रपरप्रसङ्गात्। नन्विहोत्तरपदेन पूर्वपदं नाक्षिप्यते। अन्यथा होतृपोतृनेष्टोद्गातार इत्यत्र मध्यमस्यानङ् न स्यात्। ततश्च विशेष्यासन्निधानाद् ऋत एव स्थाने ओदेशेन भवितव्यम्, न तु ऋदन्तपदस्य स्थाने, इति किमनेनाङो ङित्करणेन, सत्यम्—ङित्करणाभावे मित्रावरुणावित्यादौ 'देवताद्वन्द्वे च' इत्युत्तरपदे परे विधीयमान आदेशः पूर्वस्याक्षरस्य पदस्य वा स्यात्, पूर्वस्याल

इत्यतो मण्डूकप्लुत्या 'पुत्रे' इत्यनुवृत्तेः पितापुत्रौ। ९२२ देवताद्वन्द्वे च। (६—३—२६) इहोत्तरपदे परे आनङ्। मित्रावरुणौ। 'वायुशब्दप्रयोगे प्रतिषेधः' (वा ३९०७) अग्निवायू, वाय्वग्नी। पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम्। तेन ब्रह्मप्रजापती इत्यादौ नानङ्। एतद्धि नैकहविर्भागित्वेन श्रुतम्, नापि लोके प्रसिद्धं साहचर्यम्। ९२३ ईदग्नेः सोमवरुणयोः। (६—३—२७) देवताद्वन्द्वे इत्येव। ९२४ अग्नेः स्तुत्स्तोमसोमाः। (८—३—८२) अग्नेः परेषामेषां सस्य षः स्यात्समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ।

---

'विभाषा स्वसृपत्योः' इत्यत्र च मध्येऽपवन्धादाह—मण्डूकेति। अनुवृत्तेरिति। न च तातपुत्रादिष्वपि स्यादिति वाच्यम्, ऋदन्तस्य पुत्रे परे आनङ् स्यादिति वाक्यभेदेन व्याख्यानात्। देवताद्वन्द्वे च। मित्रावरुणाविति। इह ऋदन्तत्वाभावात् पूर्वेणाप्राप्ते विधिरयम्। वायुशब्देति। वायुशब्दस्य पूर्वपदत्वेनोत्तरपदत्वेन वा प्रयोगे सत्यानङ्प्रतिषेधो वक्तव्य इत्यर्थः। ननु पूर्वसूत्राद् द्वन्द्वग्रहणे अनुवर्तमाने पुनः द्वन्द्वग्रहणं व्यर्थमित्यत आह—पुनरिति। निर्वापादौ प्रसिद्धसाहित्यकदेवतावाचकशब्दग्रहणार्थमित्यर्थः। तेनेति। प्रसिद्धसाहचर्यग्रहणेनेत्यर्थः। एतदिति। एतद् ब्रह्मप्रजापतियुगलं हविर्भागित्वेन न वेदे प्रसिद्धमित्यर्थः। नापि लोक इति। प्रौढिवादमात्रमेतदम्, 'वेदे ये सहनिर्वापनिर्दिष्टाः' इत्येव भाष्ये दर्शनात्, लोकप्रसिद्धसाहचर्यग्रहणे पार्वतीपरमेश्वरावित्यादावतिप्रसङ्गाच्च। ईदग्नेः। इत्येवेति। देवताद्वन्द्वे इत्यनुवर्तत एवेत्यर्थः। सोमशब्दे वरुणशब्दे च उत्तरपदे परे अग्नेरीदादेशः स्यात् देवताद्वन्द्वे इत्यर्थः। आनङोऽपवादः। अग्नेः स्तुत्। स्तुत्, स्तोम, सोम इति द्वन्द्वात् षष्ठ्यर्थे प्रथमा। 'सहेः साडः सः' इत्यतः स इति षष्ठ्येकवचनान्तमनुवर्तते। अग्नेरिति पञ्चमी। 'समासेऽङ्गुलेः—' इत्यतः समासे इत्यनुवर्तते। तदाह—अग्नेः परेषामिति। षः स्यादिति। 'अपदान्तस्य मूर्धन्यः' इत्यनुवृत्तेरिति भावः। 'सात्पदाद्योः' इति षत्वनिषेधापवादोऽयम्। अग्निष्टुदिति। क्रतुविशेषोऽयम्। अग्निष्टोम इति। स्तोमविशेषस्य संस्थाविशेषस्य च नाम। अग्नीषोमाविति। अग्निश्च सोमश्चेति विग्रहः। ईत्वषत्वे। अग्नीवरुणाविति। अग्निश्च वरुणश्चेति विग्रहः। ईत्वम्। देवताद्वन्द्वे किम्? अग्निर्नाम कश्चित् सोमो नाम कश्चित्—अग्निसोमौ।

---

एवेत्यत्र नियामकाभावात्। एतेन 'सस इति कार्यिनिर्देशार्थम्' इत्युक्तत्वात्तिष्ठ्यमानस्य सकारस्यैवादेशः स्यादिति विवरण व्यर्थमित्याशङ्कापि परास्ता। नेष्टोद्गातार इति। न ह्यत्र नेष्टा पूर्वपदम्, आद्यवयवस्यैव पूर्वपदत्वात्। मातापितराविति। पुत्रोत्पादने अनयोर्योनिकृतः संबन्धः। पूर्वत्र तु हौत्रादिरूपविद्याकृतः संबन्ध एवस्मिन्यज्ञे आर्त्विज्यरूप इति विवेकः। मण्डूकप्लुत्येति। तेन 'विभाषा स्वसृपत्योः' इत्यत्र न संबध्यत इति भावः। पितापुत्राविति। अनयोरपि योनिकृतः संबन्धो जन्यजनकभावलक्षणः। देवता। अनृकारान्तार्थमविद्यायोनिसंबन्धार्थं च वचनम्। ईदग्नेः। आनङोऽपवादोऽयम्। देवताद्वन्द्वे इत्येवेति। इदं च वृत्तिग्रन्थे स्थितम्। व्योनिर्देशयोरदेवताद्वन्द्वेऽपि 'अग्नीषोमौ प्रणेष्यामि' इत्याश्वलायनप्रयोग-

१२५ इद्वृद्धौ । (६-३-२८) वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे । अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । 'देवताद्वन्द्वे च' (सू १२३९) इत्युभयपदवृद्धिः । अलौकिके विग्रहवाक्ये आ-ङ्मीत्त्वं च बाधित्वा इत् । वृद्धौ किम्—आग्नेन्द्रः 'नेन्द्रस्य परस्य' (सू १२४०)

सोमौ । अदेवताद्वन्द्वत्वादीत्त्वं न । अत एव च न षत्वम्, 'अग्नेदीर्घात् सामस्य इष्यते' इति वार्तिकात् । इद्वृद्धौ । अग्नेरिति देवताद्वन्द्वे इति चानुवर्तते । वृद्धिशब्देन वृद्धिमल्लक्ष्यते, देवताद्वन्द्वे केवलवृद्धिरूपोत्तरपदासंभवात् । तदाह—वृद्धिमतीति । इदिति तकार उच्चारणार्थः । प्रयोजनाभावान्नेत्संज्ञा । नापि तपरकरणम्, विधीयमानत्वादेव सवर्णाग्राहकत्वात् । अग्नामरुताविति । अग्निश्च मरुच्चेति विग्रहः । 'देवताद्वन्द्वे च' इत्यानङ् । अग्निमारुतं कर्मेति । 'साऽस्य देवता' इत्यण् । तद्धितान्तप्रातिपदिकावयवत्वात् सुपो लुक् । अग्नीवरुणाविति । 'ईदग्नेः—' इतीत्त्वम् । आग्निवारुणमिति । 'साऽस्य देवता' इत्यण् । ननु 'तद्धितेष्वचामादेः' इत्यादेरचो वृद्धिविधानात् कथमुत्तरपदस्यादिवृद्धिरित्यत आह—देवताद्वन्द्वे चेत्युभयपदवृद्धिरिति । नन्वग्नेरिकारस्य इकारविधिर्व्यर्थं इत्यत आह—आनङ्मीत्त्वं च बाधित्वेति । आग्निमारुतमित्यत्रानङ आग्निवारुणमित्यत्र ईत्त्वस्य च बाधनार्थमग्नेरिकारस्य पुनरिकारविधानमित्यर्थः । ननु 'समर्थानां प्रथमाद्वा' इत्यत्र 'परिनिष्ठितात् तद्धितोत्पत्तिः' इति वक्ष्यते । तथा च अग्नामरुतौ देवते अस्येति, अग्नीवरुणौ देवते अस्येति च विग्रहे अग्नामरुच्छब्दाद् अग्नीवरुणशब्दाच्च आनङीत्त्वाभ्यां परिनिष्ठिताद् देवताद्वन्द्वात् 'सोऽस्य देवता' इत्यण् तद्धित उत्पद्यते । तद्धितोत्पत्तेः प्रागेव प्रवृत्तयोरानङीत्त्वयोः कथम् 'इद्वृद्धौ' इत्यनेन बाधः ? युगपत्प्रवृत्तावेव बाध्यबाधकभावाभ्युपगमात् । उक्तं च भाष्ये—'भुक्तवन्तं प्रति मा भुङ्क्था इत्युक्ते, किं तेन कृतं स्यात्' इति । अत आह—अलौकिके विग्रहवाक्य इति । अग्निमरुत आ देवते अस्येति, अग्निवरुण औ देवते अस्येति च तद्धितालौकिकविग्रहवाक्ये आनङीत्त्वे प्रवर्तमाने बाधित्वा इद्विधिः प्रवर्तत इत्यर्थः । यद्यपि तदानीम् उत्तरपदस्य वृद्धिमत्त्वं नास्ति, तद्धिताभावात्, तथाप्युत्तरपदस्य भाव्येव वृद्धिमत्त्वमिह विवक्षितमिति भावः । आग्नेन्द्र इति । अग्निश्च इन्द्रश्च आग्नेन्द्रौ ।

स्वार्थत्वात्साधुः । यद्वा—मास्तु तदनुवृत्तिः, अग्निसामौ माणवकावित्यत्र 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः' इति न्यायेनादोषत्वात् । अग्नेः । 'सात्पदाद्योः' इति निषेधेऽयमारम्भः । अग्निष्टुदिति । अग्निः स्तूयतेऽस्मिन् स क्रतुविशेषः । संपदादित्वादधिकरणे क्विप् । अग्निष्टोम इति । अग्निना स्तोमोऽग्निष्टोमः । सोमयागस्य संस्थास्वाद्या संस्था उच्यते । इद्वृद्धौ । तकार उच्चारणार्थः । इकारस्येकारविधानं तु बाधकबोधनार्थम् । वृद्धिशब्देनात्र वृद्धिमद् गृह्यते, वृद्धिमात्रस्योत्तरपदस्यासंभवादतो व्याचष्टे—वृद्धिमत्युत्तरपद इति । आनङ्मीत्त्वं च बाधित्वेति । यद्यपि वृद्धेः प्रागेव आनङीत्वयोरन्तरङ्गत्वात्प्रवृत्तिरस्ति, तथापि 'परिहृत्यापवादविषय-

इत्युत्तरपदवृद्धिप्रतिषेधः । 'विष्णौ न' (वा ३९०९) । आग्नावैष्णवम् । ९७६ दिवो द्यावा । (६-३-२९) देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामा । ९७७ दिवसश्च पृथिव्याम् । (६-३-३०) दिव इत्येव, चाद्द्यावा । आदेशेऽकारोच्चारणं सकारस्य रुत्वं माभूदित्येतदर्थम् । द्यौश्च पृथिवी च दिवस्पृथिव्यौ, द्यावापृथिव्यौ । 'छन्दसि दृष्टानुविधिः' । 'द्यावा चिदस्मै पृथिवी' । 'दिवस्पृथिव्योररति' इत्यत्र पदकारा विसर्गं पठन्ति । ९७८ उषासोषसः । (६-३-३१) उषस्शब्दस्योषासादेशो देवताद्वन्द्वे । उषासासूर्यम् । ९७९ मातरपितरावुदीचाम् । (६-३-३२) मातरपितरौ । उदीचां किम्—मातापितरौ ।

---

'देवताद्वन्द्वे च' इत्यानङ्, आद्गुणः । अग्नेन्द्रौ देवते अस्येत्याग्नेन्द्रः । 'साऽस्य देवता' इत्यण् । आदिवृद्धिः । अग्नेन्द्रशब्दस्योत्तरपदस्य वृद्धिमत्त्वाभावाद् 'इद्वृद्धौ' इति नाऽभावः । 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिमाशङ्क्याह—नेन्द्रस्येति । विष्णौ नेति । विष्णुशब्दे परे अग्नेरित्वं नेति वक्तव्यमित्यर्थः । आग्नावैष्णवमिति । अग्निश्च विष्णुश्च अग्नाविष्णू । 'देवताद्वन्द्वे च' इत्यानङ् । अग्नाविष्णू देवते अस्येत्यर्थे 'साऽस्य देवता' इत्यण् । आग्नावैष्णव इति । 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः । इत्त्वाभावादानङेव । दिवो द्यावा । शेषपूरणेन सूत्रं व्याचष्टे—देवताद्वन्द्व इति । द्यावाभूमी इति । द्यौश्च भूमिश्चेति विग्रहः । द्यावाक्षामा इति । 'द्यावाक्षामा रुक्मो अन्तर्विभाति' इति ऋचि पठितमिदम् । द्यावापृथिव्यावित्यर्थः । द्यौश्च क्षामा चेति विग्रहः । क्षामाशब्दो भूमिपर्यायो वेदे । तत्र द्वन्द्वे दिवो द्यावादेशः । षष्ठ्यास्तु 'सुपां सुलुक्—' इति डादेशः । 'देवताद्वन्द्वे च' इति पूर्वोत्तरपदयोः प्रकृतिस्वर इति वेदभाष्ये स्पष्टम् । दिवसश्च पृथिव्याम् । दिव इत्येवेति । दिव इत्यनुवर्तत एवेत्यर्थः, स्वरितत्वादिति भावः । तर्हि चकारो व्यर्थ इत्यत आह—चादिति । तथा च दिव्शब्दस्य दिवसादेशो द्यावादेशश्च स्यात् पृथिवीशब्दे उत्तरपदे परे देवताद्वन्द्वे इत्यर्थः । दिवस्पृथिव्यौ इत्यत्र सकारादकारस्याश्रवणाद्दिवसादेशस्य सकारान्तत्वावश्यम्भावाद् आदेशे सकारादकारोच्चारणस्य किं प्रयोजनमित्यत आह—आदेशेऽकारोच्चारणमिति । सामर्थ्यात् 'ससजुषो रुः' इति रुत्वं नेति भावः । ननु 'द्यावा चिदस्मै पृथिवी सन्नमेते' इत्यत्र दिव्शब्दपृथिवीशब्दयोः कथं द्वन्द्वः ? कथं वा दिवो द्यावादेशः ? उत्तरपदस्य चिदस्मै इत्यनेन व्यवहितत्वादित्यत आह—छन्दसि दृष्टानुविधिरिति । भाष्यवाक्यमेतत् । वेदे दृष्टानुसरणमित्यर्थः । यथा दृष्टं तथा प्रक्रिया कल्पनीयेति भावः । पदकारा इति । 'दिवस्पृथिव्या' इत्यवग्रहे विसर्गं पठन्तीत्यर्थः । पदकारा इत्यनेन पदपाठस्याधुनिकत्वं सूचितम् । तथा च विसर्गपाठः प्रामादिक इति सूचितम्, अकारोच्चारणेन रुत्वनिवृत्तेरुक्तत्वात् । उषासोषसः । उषासासूर्यमिति ।

---

'पुनर्गॉऽभिनिविशते' इति न्यायादानङात्र न भवति इति भावः । आग्नावैष्णवमिति । इत्वाभावादानङेव भवति । रुत्वं मा भूदिति । अकारे सति सकारस्य श्रवणं भवति, तेन प्रयोगे विकाराभावोऽनुमीयत इति भावः । विसर्गमिति ।

९३० द्वन्द्वाच्चुदषहान्तात्समाहारे ।•(५-४-१०६) चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक्च त्वक्च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्-प्रावृट्छरदौ ।

इति द्वन्द्वसमासप्रकरणम् ।

—०—

---

उषाश्च सूर्यश्चेति समाहारद्वन्द्वः । मातरपितरावुदीचाम् । उदीचां मते मातरपितराविति भवतीत्यर्थः । अत्र मातृशब्दस्यारङादेशो निपात्यते । मातापितराविति । अरङभावे 'आनङृतः-' इत्यानङ् । द्वन्द्वाच्चुदष । समासान्ताधिकारस्थं तद्धिताधिकारस्थं चेदं सूत्रम् । टच्स्यादिति । 'राजाहस्सखिभ्यः-'इत्यतस्तदनुवृत्तिरिति भावः । वाक्त्वचमिति । वाक्च त्वक्च इति समाहारद्वन्द्वः । कुत्वस्यासिद्धत्वाच्चवर्गान्तत्वाट्टच् । एवं त्वक्स्रजमित्यत्रापि । त्वक्च स्रक्चेति विग्रहः । शमीदृषदमिति । शमी च दृषच्चेति विग्रहः । दकारान्तत्वाट्टच् । वाक्त्विषमिति । वाक्च त्विट् चेति विग्रहः । षान्तत्वाट्टच्, जश्त्वस्यासिद्धत्वादिति भावः । छत्रोपानहमिति । छत्रं च उपानच्चेति विग्रहः । हान्तत्वाट्टच् । प्रावृट्छरदाविति । प्रावृट् च शरच्चेति विग्रहः । इतरेतरयोगद्वन्द्वत्वान्न टजिति भावः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां द्वन्द्वसमासनिरूपणम् ।



---

तथा च 'क्वचिद्विकारो न' इत्येवानुमेयं लक्ष्यानुरोधादिति भावः । उषासासूर्यमिति । उषाश्च सूर्यश्च तयोः समाहारः । मातरपितरौ । मातृशब्दस्यारङादेशो निपात्यते । द्वन्द्वात् । अन्तग्रहणं विस्पष्टार्थम् । चु इति वर्गग्रहणस्य प्रयोजनं ध्वनयति—त्वक्स्रजमिति । बहूनां द्वन्द्वे तु वाक्त्वक्स्रजम् । द्वन्द्वगर्भे द्वन्द्वे तु वाक्त्वचस्रजम् ।

इति तत्त्वबोधिनीव्याख्यायां द्वन्द्वप्रकरणम् ।

—:००००:—

## अथैकशेषप्रकरणम् ॥ २१ ॥

अथैकशेषः । 'सरूपाणाम्–' (सू १८८) । रामौ रामाः । 'विरूपाणामपि समानार्थानाम्' (वा ७४७) । वक्रदण्डश्च कुटिलदण्डश्च—वक्रदण्डौ । कुटिलदण्डौ । **९३१ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।** (१-२-६५) यूना सहोक्तौ गोत्रं शिष्यते, गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् । गर्गगार्ग्यायणौ । यूना किम्। गर्गगार्ग्यौ । तल्लक्षणः किम् । भागवित्तिभागवित्तिकौ । कृत्स्नम् किम् । गार्ग्यवात्स्या-

---

अथैकशेषो निरूप्यते—तदेव द्वन्द्वे निरूपिते तदपवादमेकशेषप्रकरणमारभते—अथैकशेष इति । निरूप्यत इति शेषः । तत्रैकशेषसूत्राणि व्याचिख्यासुः पूर्वं व्याख्यानमपि सूत्रं सन्दर्भशुद्धये आह—सरूपाणामिति । तदुदाहरणमपि स्मारयति—रामौ रामा इति । विरूपाणामिति । 'सरूपाणाम्–' इत्यनेन सूत्रेणार्थभेदेऽपि शब्दैकरूप्ये एकशेष उक्तः, एकार्थकत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः । वक्रदण्डश्चेति । अत्र शब्दवैरूप्येऽप्यर्थैक्याद् अन्यतरः शिष्यत इति भावः । वृद्धो यूना । रूपतोऽर्थतश्च भेदेऽपि प्राप्त्यर्थमिदम् । यूनेति । 'जीवति तु वंश्ये युवा' इति वक्ष्यमाणयुवप्रत्ययान्तेनेत्यर्थः । सहोक्ताविति । अध्याहारलब्धमेतत् । गोत्रमिति । वृद्धशब्देन 'अपत्यं पौत्रप्रभृति गोत्रम्' इति सूत्रोक्तं गोत्रं विवक्षितम् । अपत्यमन्तरितं वृद्धमिति पूर्वाचार्यपरिभाषितत्वादिति भावः । गोत्रप्रत्ययान्तमिति यावत् । न च 'गोत्रं यूना' इत्येव कुतो न सूत्रितमिति वाच्यम्, अनन्याधिकारादन्यत्र गोत्रग्रहणेन लौकिकं गोत्रं विवक्षितमिति सिद्धान्तज्ञापनार्थत्वात् । शिष्यत इति । शेष इति कर्मणि घञन्तमनुवर्तत इति भावः । तल्लक्षण इति । स गोत्रप्रत्ययो युवप्रत्ययश्च लक्षणं निमित्तं यस्येति विग्रहः । विशेषो वैरूप्यम् । तथाच गोत्रयुवप्रत्ययान्तयोर्विशेषो वैरूप्यम्, तल्लक्षणश्चेद् गोत्रयुवप्रत्ययनिमित्तकश्चेदित्यर्थः । अन्यनिमित्तको न चेदित्यर्थः सिद्धः तदाह—गोत्रयुवेति । कृत्स्नमिति । एवकारलभ्यमिदम् । गार्ग्यश्चेति । गर्गस्य गोत्रापत्यं गार्ग्यः । गर्गादिभ्यो यञ् । गार्ग्यायण इति । गर्गस्य गोत्रापत्यं गार्ग्यः । तस्यापत्यं युवा गार्ग्यायणः । 'यञिञोश्च' इति फक् । गार्ग्याविति । अत्र गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्ययकृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यत इति भावः । गर्गगार्ग्यायणाविति । गर्गश्च गार्ग्यायणश्चेति विग्रहः । अत्र गर्गशब्दस्य गार्ग्यायणशब्दस्य

---

द्वन्द्वापवादत्वेनाह—अथैकशेष इति । विरूपाणामिति । रूप्यते बोध्यत इति व्युत्पत्त्या मौनस्य रूपशब्दस्यार्थपरतया ... व्याख्यानात्सूत्रान्तरैरेव लब्धुं शक्यत इति प्रागेव व्याख्यातम् । वृद्धो यूना । 'अपत्यमन्तर्हितं वृद्धम्' इति पूर्वाचार्यैः परिभाषितस्य पारिभाषिकगोत्रापरपर्यायस्येह ग्रहणम्, कृत्रिमेण यूना साहचर्यात् तदाह—गोत्रं शिष्यत इति । 'गोत्रं यूना' इत्येव तु न सूत्रितम् । 'अन्यत्राधिकारादपत्ये लौकिकं गोत्रग्रहणम्' इति सिद्धान्तेन पौत्रप्रभृत्यनन्तरं, पौत्रश्च

यनौ। ९३२ स्त्री पुंवच्च । (१-२-६६) यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणौ च गर्गाः । 'अस्त्रियाम्' इत्यनुवर्तमाने 'यञञोश्च' (सू ११०८) इति लुक् । दाक्षी च दाक्षायणश्च दाक्षी।

---

च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाभावान्नैकशेष इति भावः। गर्गगार्ग्याविति। अत्र गर्गशब्दस्य गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्यभावादिति भावः। भागवित्तिभागवित्तिकाविति। भगवित्तस्य गोत्रापत्यं भागवित्तिः। अत इञ्। भागवित्तेः सौवीरस्यापत्यं युवा कुत्सितो भागवित्तिकः। 'वृद्धाट्ठक् सौवीरेषु-' इति ठक्। अत्र भागवित्तिशब्दस्य भागवित्तिकशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, कुत्सासौवीरत्वकृतस्यापि वैरूप्यस्य सत्त्वात्। अतो गोत्रप्रत्ययान्तो भागवित्तिशब्दो न शिष्यत इति भावः। गार्ग्यवात्स्यायनाविति। गर्गस्य गोत्रापत्यं गार्ग्यः, वत्सस्य गोत्रापत्यं वात्स्यः, गर्गादित्वाद्यञ्। वत्सस्यापत्यं युवा वात्स्यायनः। 'यञिञोश्च' इति फक्। गार्ग्यश्च वात्स्यायनश्चेति विग्रहः। अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यम्, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाभावात्। अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यत इति भावः। स्त्री पुंवच्च। वृद्धो यूनेत्यनुवर्तते। वृद्धेति स्त्रीलिङ्गेन विपरिणम्यते। तदाह—यूना सहोक्तौ वृद्धा स्त्री शिष्यत इति। गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः शिष्यत इति भावः। स्त्रीत्वस्य वैरूप्यकारणस्याधिकस्य सत्त्वात् पूर्वेणाप्राप्ते वचनमिदम्। तदर्थ इति। तस्य शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्यार्थः पुमानिव स्यादित्यर्थः। गार्गी चेति। गर्गस्यापत्यं स्त्रीत्यर्थः। गर्गादियञन्ताद् 'यञश्च' इति ङीप्। गार्ग्यायणौ चेति। गर्गाद्यञन्ताद् यून्यपत्ये 'यञिञोश्च' इति फक्। गर्गा इति। अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते। स पुंवत्। तर्हि यञ् कुतो न श्रूयत इत्यत आह—अस्त्रियामितीति। उपलक्षणमिदम्। 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यतः अस्त्रियामिति, तेनैवेति, बहुष्विति चानुवर्तमाने सतीत्यर्थः। एतेन पुंवदित्यस्य प्रयोजनमुक्तम्। गार्गी च गार्ग्यायणश्चेति विग्रहस्तु न दर्शितः। तथा सति अबहुत्वाद् यञो लुगभावे सति पुंस्त्वे स्त्रीत्वे च रूपं तुल्यम् —गार्ग्याविति, तत्र पुंवत्त्वं निरर्थकं स्यात्। उदाहरणान्तरमाह—दाक्षी चेति। दक्षस्य गोत्रापत्यं स्त्री दाक्षी। 'अत इञ्' इतीञन्ताद् 'इतो मनुष्यजातेः' इति ङीष्। दाक्षायणश्चेति। दक्षस्यापत्यं पुमान् दाक्षिः, तस्यापत्यं

---

युवेत्यत्र नैकशेषः। भागवित्तीति। भागवित्तस्य गोत्रापत्यं भागवित्तिरित्यस्माद्यूनि 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति कुत्सायां ठक्। इह कुत्सा सौवीरत्वं चाधिकमपेक्ष्यते। न तु युवत्वमात्रकृतं वैरूप्यम्। गार्ग्यवात्स्यायनाविति। इह प्रकृत्यंशे वैरूप्यं न गोत्रादिकृतम्। स्त्री पुंवच्च। वृद्धा स्त्रीति। गोत्रप्रत्ययान्तं स्त्रीवाचकमित्यर्थः। पुंवद्भावकृतवैलक्षण्यं स्फुटीकर्तुं द्विवचनान्तेन विग्रहमाह—गर्गगार्ग्यायणाविति। अनुवर्तमान इति। 'तद्राजस्य बहुषु-' इत्यतः 'पुंवत्' इत्यर्थातिदेशस्य फलमनेन

९३३ पुमान् स्त्रिया। (१-२-६७) स्त्रिया सहोक्तौ पुमाञ्छिष्यते, तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ। ९३४ भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। (१-२-६८) भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। युवा दाक्षायणः 'यञिञोश्चेति' फक्। दाक्षी च दाक्षायणश्चेति विग्रहे दाक्षीशब्दः

---

शिष्यते। तस्य पुंवत्त्वे सति ङीपो निवृत्तौ दाक्षिशब्दात् प्रथमाद्विवचने दाक्षी इति भवति। अत्र तल्लक्षणश्चेदेव विशेष इत्यप्यनुवर्तते। ततश्च भागवित्ती भागवित्तिकश्च, गार्गी च वात्स्यायनश्चेत्यत्र न भवति। पुमान्स्त्रिया। तल्लक्षण एवेति। 'वृद्धो यूना–' इत्यतस्तदनुवृत्तेरिति भावः। हंसी चेति। अत्र पुंस्त्वस्त्रीत्वमात्रकृतवैरूप्यात् पुंलिङ्गो हंसशब्दः शिष्यते। स्त्रीत्वपुंस्त्वकृतवैरूप्यादेव 'सरूपाणाम्–'इत्यस्याप्राप्तिः। मातृमातरावित्यत्र जननीवाचकपरिच्छेत्तृवाचकमातृशब्दयोस्तु नायमेकशेषः। एकविभक्तौ सरूपाणामित्यनुवर्त्य एकविभक्तौ सरूपाणां स्त्रीत्वपुंस्त्वेतरकृतवैरूप्यरहितानामित्याश्रयणात्। इह च मातरावित्यत्र 'अप्तृन्–' इति दीर्घतदभावाभ्यामपि वैरूप्यात्। अत एव हंसश्च वरटा चेत्यत्रापि नेत्यलम्। भ्रातृपुत्रौ। स्वसृदुहितृभ्यां सहोक्तौ क्रमाद् भ्रातृपुत्रौ शिष्येते। स्वरूपतोऽपि वैरूप्यादप्राप्तौ वचनम्।

---

दर्शितम्। अन्यथा स्त्रीत्वस्यानिवर्तनाल्लुङ् न स्यात्। 'गर्गान्पश्य' इत्यत्र नत्वं च सिद्धम्। रूपातिदेशे तु नैतत्सिद्ध्येत्, सामान्यातिदेशे विशेषानतिदेशादित्याहुः। 'वृद्धो यूना' इत्याद्यनुवर्तनान्नेह—गार्गी च वात्स्यायनी च। पुमान्स्त्रिया। 'वृद्धो यूना–' इति निवृत्तम्। 'सरूपाणाम्' इति त्वनुवर्तते, 'भ्रातृपुत्रौ–'इत्युत्तरसूत्रारम्भात्। तेन हंसश्च वरटा च इत्यत्र न भवति। अन्यथा स्यादेवातिप्रसङ्गः। हंसत्वजातिसाम्येन शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वात्। स्यादेतत्—गौरियं गोश्चायं तयोः सहोक्तौ 'एतौ गावौ' इति नियमतो न स्यात्, तल्लक्षणविशेषाभावात्। किं तु स्त्रीवाचकस्य पुंवाचकस्य वा 'सरूपाणाम्–' इत्येकशेषोऽनियमेन स्यात्। अत्राहुः—तदितरकृतविशेषाभावे तात्पर्यान्न दोष इति। 'इन्द्रेन्द्राण्यौ' इत्यादौ त्वेकशेषो न भवति। स्त्रीत्वपुंस्त्वेतरपुंयोगकृतविशेषस्य सद्भावात्। स्यादेतत्—'एतौ गावौ' इति नियमतो न स्यादिति मनोरमादौ यदुक्तं तत्कथं संगच्छताम्। 'त्यदादिनः शेषे पुनपुंसक –'इति नियमप्रवृत्त्या स्त्रीवाचिगोशब्दस्य शेषेऽपि 'एतौ गावौ' इति नियमतः प्रयोगः सिद्ध्यत्येवेति चेत्—अत्र केचित्—दिक्प्रदर्शनमात्रमिदम्। 'नीलौ गावौ' इति नियमतो न स्यादित्युदाहर्तव्यम्। अथवा, एतशब्दोऽदन्तः कर्बुरवाची। एतश्च एता च एतौ गावौ—कर्बुरौ गावौ, 'सरूपाणाम्–'इत्यनेन स्त्रीलिङ्गशेषे तु 'एते गावौ' इत्यपि स्यादिति यथाश्रुतमेव समर्थनीयमित्याहुः, तदपरे न क्षमन्ते। 'त्यदादिनः शेषे–' इति नियमाप्रवृत्तावपि 'पुमान्स्त्रिया' इति नियमप्रवृत्त्या 'नीलौ गावौ' 'एतौ गावौ' इति नियमतः सिद्ध्यत्येवेति। अत्र वदन्ति—'अद्वन्द्वतत्पुरुषविशेषणानाम्' इत्येतन्न्यायसिद्धमेव वचनम्। 'विशेष्ये यल्लिङ्गं तदेव विशेषणेष्वपि' इति सर्वसंमतत्वात्, एवं च द्वन्द्वतत्पुरुषविशेषणेष्विव एकशेषविशेषणेऽपि 'एतौ' इत्यत्र 'त्यदादितः शेषे–' इत्यादिनियमाप्रवृत्त्या विशेष्यगतमेव लिङ्गं भवतीति स्त्रीवाचिगोशब्दस्य शेषे 'एते' इति

९३५ **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** । ( १-२-६९ ) अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रम् । तदिदं शुक्लं । तानीमानि शुक्लानि । ९३६ **पिता मात्रा** । (१-२-७०) मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ—मातापितरौ वा । ९३७ **श्वशुरः श्वश्र्वा** । ( १-२-७१ ) श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते, तल्लक्षण एव विशेषश्चेत् । श्वश्रूश्च श्वशुरश्च

---

**नपुंसकम्** । अन्यतरस्यांग्रहणम् एकवदित्यनेनैवान्वेति, आनन्तर्यात्, नत्वेकशेषेणेत्याह—**तच्चेति** । **तल्लक्षण एवेति** । नपुंसकत्वानपुंसकत्वमात्रकृतवैरूप्यं चेदित्यर्थः । **शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रमिति** । पटशब्दसमभिव्याहारात् शुक्लशब्दः पुंलिङ्गः, शाटीशब्दसमभिव्याहारात् स्त्रीलिङ्गः, वस्त्रशब्दसमभिव्याहारे तु नपुंसकलिङ्गः, 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यमरोक्तेरिति भावः । तच्च सा च इदं च तत् । अयं च इयं च इदं च इदम् । शुक्लश्च शुक्ला च शुक्लं च शुक्लम् । अत्र नपुंसकान्येव शिष्यन्ते एकवच्च भवन्ति । **तानीमानि शुक्लानीति** । नपुंसकत्वे एकशेषे सति एकवत्त्वाभावे रूपाणि । न चेतरेतरयोगविवक्षायां द्विबहुवचनान्तयोः, समाहारद्वन्द्वविवक्षायामेकवचनस्य च सिद्धत्वाद् एकवदिति व्यर्थमिति वाच्यम्, अत एवैकशेषप्रकरणस्य समाहारेऽप्रवृत्तिज्ञापनात् । तेन ओदनश्च ओदनं च तयोः समाहारे ओदनमिति न भवति । ओदनशब्दो ह्यर्धर्चादिः । ओदनश्च ओदनं चेति इतरेतरयोगद्वन्द्वेऽपि ओदनमिति न भवति, अनभिधानात् । एवं च क्वचिदनभिधानस्यावश्याश्रयणीयतया द्वन्द्वमात्रस्यैकशेषविषयेऽनभिधानमाश्रित्य एकस्य शब्दस्यानेकार्थत्वं चाश्रित्य एकशेषप्रकरणं भाष्ये प्रत्याख्यातम् । **पिता मात्रा** । 'पुमान् स्त्रिया' इत्यत्र सरूपाणामित्यनुवृत्तेरप्राप्तमिदं वचनं विकल्पार्थं च । **मातापितराविति** । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति स्मृत्या मातुरभ्यर्हितत्वात्पूर्वनिपातः । 'आनङृतः' इत्यानङ् । **श्वशुरः श्वश्र्वा** । **श्वश्रूश्वशुराविति** । श्वश्र्वा अपि मातृतुल्यत्वोक्तेरभ्यर्हितत्वम् । 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' इति स्मृतेः । इह तल्लक्षणग्रहणानुवृत्तिः स्पष्टार्था,

---

स्यादेवेति 'एतौ गावौ' इति नियमतो न स्यादित्याक्षेपः संगच्छत एवेति दिक् । **नपुंसकमन** । अन्यतरस्यांग्रहणम् 'एकवच्च' इत्यनेनैवानन्तर्यात्संबध्यते, न त्वेकशेषेणेत्याशयेनाह—**क्लीबं शिष्यते तच्च वा एकवदिति** । अनपुंसकेनेति किम्, शुक्लं च शुक्लं च शुक्ले । अत्र 'एकवच्च' इति न भवति । 'अस्य' ग्रहणम् 'अस्यैवैकशेषस्य एकवद्भावो यथा विज्ञायेत' इत्येवमर्थम् । अन्यथा उत्तरत्राप्येकवदित्यस्यानुवृत्तिः शङ्क्येत । **शुक्लः पट इत्यादि** । 'शुक्लः शुक्ला शुक्लम्' इत्येव विग्रहः, 'पटः पटी' इत्यादिप्रदर्शनं तु शुक्लशब्दस्य गुणिलिङ्गत्वस्फोरणाय । **पिता मात्रा** । **श्वशुरः श्वश्र्वा** । नन्वेतत्सूत्रद्वयं व्यर्थम्, पितृशब्देन मातापित्रोः श्वशुरशब्देन श्वश्रूश्वशुरयोर्लक्षणाया वोपसंभवात् । न च 'सरूपाणाम्' इत्यादिसूत्रसमूहवदिदमपि सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यम्, पक्षे तस्यापीष्टत्वादिति चेत्—अत्राहुः—पितृ-

श्वशुरौ—श्वश्रूश्वशुरौ वा । ९३८ त्यदादीनि सर्वैर्नित्यम् । ( १-२-७२) सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च देवदत्तश्च तौ । 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' (वा ८०१) स च यश्च यौ (सा च या च ये)। 'पूर्वशेषोऽपि दृश्यते' इति भाष्यम् । स च यश्च तौ । 'त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि' (वा ७९९) । स च देवदत्तश्च तौ । तच्च देवदत्तश्च यज्ञदत्ता च तानि । पुन्नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च देवदत्तश्च ते। 'अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्' (वा ८००) । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तच्च सा च अर्धपिप्पल्यौ ते । ९३९ ग्राम्यपशुसङ्घेषु-

'श्वशुर श्वश्र्वा' इति शब्दग्रहणात् । त्यदादीनि । सर्वैरिति । त्यदादिभिरितरैश्चेत्यर्थः । ताविति । अत्र देवदत्तशब्दो निवर्तते । तच्छब्दस्तु शिष्यते । तद्देवदत्ताविति न भवति । सर्वैः किम् ? प्रत्यासत्त्या त्यदादिभिरेव सहोक्ताविल्यर्थो मा भूदित्येतदर्थम् । त्यदादीनां मिथ इति । भाष्ये स्थितमेतत् । तत् परमिति । त्यदादिगणे यत् परं पठितं तच्छिष्यत इत्यर्थः, शब्दपरविप्रतिषेधाश्रयणादिति भावः । स च यश्च यौ, सा च या च ये इति । त्यदादिगणे यच्छब्दस्य तच्छब्दादूर्ध्वं पाठात् परत्वात् स एव शिष्यत इति भावः । पूर्वशेषोऽपीति । परशब्दस्यापूर्वत्वाच्चिल्वात् क्वचित्पूर्वमपि शिष्यत इति भावः । अत्र 'द्विपर्यन्तानाम्' इति न भवति । अहं च भवांश्चावमिति भाष्योक्तेः । त्यदादित इति । आद्यादित्वात् पञ्चम्यर्थे तसि । त्यदादीनां शेषेऽपि सहविवक्षितेषु यः पुमान्, यच्च नपुंसकं, तद्वशेन लिङ्गप्रतिपादनानि भवन्तीत्यर्थः । कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव सम्बध्यन्ते । सा च देवदत्तश्च ताविति । तत्र तच्छब्दः शिष्यते समभिव्याहृतदेवदत्तशब्दलिङ्गश्च । देवदत्तशब्दस्तु निवर्तत एव । पुन्नपुंसकयोरिति । सहोक्ताविति शेषः । परत्वादिति । पुंनपुंसकतो लिङ्गवचनानीत्यत्र पुमपेक्षया नपुंसकस्य पाठात् परत्वावगमादित्यर्थः । अद्वन्द्वेति । द्वन्द्वतत्पुरुषविशेषणानां त्यदादीनां शेषे 'त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि' इत्येतन्न भवतीत्यर्थः । द्वन्द्वं उदाहरति— कुक्कुटमयूर्याविमे इति । अयं च इयं च इमे इत्यत्र 'त्यदादितः शेषे' इति पुंलिङ्गत्वं न भवति, किन्तु विशेष्यनिघ्नत्वमेव । यद्यपि द्वन्द्वे उभयपदार्थप्रधानत्वाद् उभयमपि

श्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोरुक्तविषये प्रयोगं वारयितुमारम्भणीयमेव सूत्रद्वयम्, अनभिधानमाश्रित्य प्रत्याख्यानस्यानुचितत्वादिति । मातापितराविति । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः । 'आनङ् ऋतः—' इत्यानङ् । श्वश्रूश्वशुराविति । 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' इति स्मृतेः, श्वश्र्वा अभ्यर्हितत्वात्पूर्वनिपातः । त्यदादीनि सर्वैः । सर्वैः किम्, त्यदादिभिन्नैरपि सहोक्तौ यथा स्यात् । प्रत्यासत्त्या 'त्यदादिभिरेव सहोक्तौ' इत्यर्थो मा भूत् । यत्परमिति । शब्दपरप्रतिषेधादिति भावः । त्यदादित इति । आद्यादित्वात्तसि । 'त्यदादीनां शेषे सह विवक्षिते यः पुमान्, यच्च नपुंसकम्, तद्वशेन लिङ्गप्रतिपादनानि भवन्ति' इति वाच्यमित्यर्थः । कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव ।

तमे गोत्रे एकानेकश्च प्रत्ययाः स्युः । पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगारणा इष्टे सिद्धेऽप्यणन्तादिञपि स्यात् । ततश्चतुर्थे फगिति फगिञा परम्परायां शततमे गोत्रेऽष्टनवतेरनिष्टप्रत्ययाः स्युः, अतो नियमार्थमिदं सूत्रम् । एवमुत्तरसूत्रेऽप्यूह्यम् । १०९४ गोत्राद्यून्यस्त्रियाम् । ( ४—१—९४ ) यूय-

प्रकृतिभ्यः एकानेकश्च प्रत्यया अनिष्टाः स्युरित्यर्थः । अथापत्यशब्दः पुनः पौत्रादिष्वाधारण इति पक्षे अनिष्टं प्रपञ्चयति—पितामहादीनामपीति । मुख्यपक्षत्व त्वस्य भाष्ये पूर्वपक्षस्य निराकरणाद् 'अपत्यं पौत्रप्रभृति–' इति सूत्रस्वरसाच्च बोध्यम् । इष्टे सिद्धेऽपीति । तृतीयादीनामप्यपत्यत्वेन तत्र 'तस्यापत्यम्' इत्यणा निर्बाधत्वादिति भावः । तत इति । इञन्तादित्यर्थः । अष्टनवतेरिति । प्रकृतिभ्य इति शेषः । अनिष्टप्रत्ययाः स्युरिति । अष्टनवतिरिति शेषः । नियमार्थमिति । यद्यप्युपगास्तृतीयादिषु अपत्यप्रत्ययविध्यर्थत्वमेव प्रथमपक्षे, तथापि गर्गात्तृतीयादिषु विवक्षितेषु गोत्रविहितगर्गादियञो गार्ग्यशब्दस्यष्टस्य सिद्धावपि गर्गादिञि ततः फिञित्येव प्रत्ययपरम्पराप्यनिष्टा प्राप्नोतीति नियमार्थत्वमपि प्रथमपक्षेऽप्यस्य सूत्रस्येति भावः । एवमुत्तरसूत्रेऽप्यूह्यमिति । तत्प्रकारस्तु उत्तरसूत्रे एव वक्ष्यते । गोत्राद्यून्यस्त्रियाम् । गर्गस्य गोत्रं गार्ग्यः, गर्गस्य तृतीय । 'गर्गा

जीवद्वंश्ये वा युवसंज्ञाया सत्यां गोत्रसंज्ञा नेति भावः । इष्टे सिद्धेऽपीति । अस्मिश्च पक्षे औपगवस्य यदपत्यं तदुपगोरप्यपत्यमिति उपगोर्यदा प्रत्ययः तदा 'औपगव' इतीष्टं यद्यपि सिद्ध्यति, तथाप्यौपगविरित्यनिष्टं प्राप्नोतीत्यर्थः । तत इति । इञन्तादित्यर्थः । फगिञोरिति । फगन्तादिञ्, इञन्तात्फक्, तदन्तात्पुनरिञ् इत्यादिपरम्परायां सत्यामित्यर्थः । नियमार्थमिति । नन्वाद्यपक्षे तत्तत्पितृवाचकादेव प्रत्ययः, न तु मूलभूतात् स्यात्, अनन्तरापत्ये । मुख्यसंबन्धे चरितार्थस्याणादेर्गौणसंबन्धेऽपि प्रवृत्तेरन्याय्यत्वात् । तथा चौपगवापत्येन उपगोर्मुख्यसंबन्धाभावादप्राप्ते विध्यर्थमेवेदं सूत्रम्, न तु नियमार्थमिति औपगवशब्दादपि प्रत्यया दुर्वार इति चेत् । अत्राहुः—गोत्रे बोधनीये क्रमेणानेकप्रत्ययप्रसङ्गे एक एवापत्यप्रत्ययः स्यादिति सूत्रार्थे कृते औपगवशब्दस्यापत्यप्रत्ययान्तत्वात् पुनरपत्यप्रत्ययस्तता नोपपद्यते इत्यगत्या परम्परासंबन्धाभ्युपगमेनापगारेव तदुत्पत्तिः, न त्वौपगवशब्दादिति सिद्धमिष्टमिति । अत्र केचिद्व्याचक्षते—आद्यपक्षे प्रत्ययपरम्परायां प्राप्तायां 'एको गोत्रे' इत्यनेनैकः प्रत्ययो विधीयते । तथा चैको नामैकजातीय इत्यर्थसंपर्यवसानान्मूलप्रकृतेर्योऽयं प्रत्ययस्तज्जातीय एव गोत्रे बोधनीये तत्तत्पितृवाचकाद्भवति 'अणन्तादण्, इञन्तादिञ्, यञन्ताद्यञ्' इति । न चैवमणिञो परम्परायां निवृत्तायामप्यौपगव इत्यत्राप्रत्ययपरम्परा स्यात् । तथा गार्ग्य इत्यादौ यञादिपरम्परेति वाच्यम् । तस्यामपि तस्यामनिष्टाभावादिति । तच्चिन्त्यम् । फगन्तात्फगि नाडायन इत्यादावनिष्टप्रसङ्गादिति दिक् । ऊह्यमिति । 'अपत्यं पितुरेव' इति पक्षे चतुर्थप्रत्यये यूनि विवक्षिते 'गोत्राद्यूनि–' इति नियमसूत्रे सत्यपि च गोत्रप्रत्ययान्तादेव युवप्रत्यय इति द्वयोः परम्परा, सा चेष्टा सा नियमेन व्यावर्त्यते । पक्षे तु इति

पत्ये गोत्रप्रत्ययान्तादेवापत्यप्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा । गर्गस्य युवा-

दिभ्यः–' इति गोत्रे यञ् । गार्ग्यस्य तृतीयः, स गर्गस्य पञ्चमो युवापत्यम्, तस्मिन्युवोवर्ययिपिते गार्ग्यशब्दाद् गोत्रप्रत्ययान्ताद् 'यञिञोश्च' इति फकि गार्ग्यायण इति रूपमिष्यते । तथा पष्ठादिष्वपि युवापत्येषु गार्ग्यायण इत्येवेष्यते । तदिदमपत्यशब्दः पुत्रपौत्रादिसाधारण इति पक्षे यद्यपि सुलभमेव, गर्गात्तृतीयं गार्ग्यं प्रति पञ्चादीनामप्यपत्यत्वात् । तथापि गर्गस्य पञ्चमाद्यपत्ये यूनि विवक्षिते गर्गान्मूलप्रकृतेरपि इञ् स्यात् । तथा गर्गस्य अनन्तरापत्ये इञि गार्गिः, तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि गार्गायण इत्यपि स्यात् । तथा गर्गस्य चतुर्थे यूनि गोत्रत्वाभावाद् यञ्भावे इञि गार्गिः । तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि गार्गायण इति स्यात् । गोत्रप्रत्ययान्तादेव गार्ग्यशब्दाद् गर्गस्य पञ्चमाद्यपत्ये यूनि फकि गार्ग्यायण इत्येवेष्यते । तदर्थं गोत्रप्रत्ययान्तादेव यूनि प्रत्यय इति नियमः क्रियते—गोत्राद्यूनीति । तदाह—यून्यपत्ये गोत्रप्रत्ययान्तादेवेति । ननु मूलप्रकृतेस्तदनन्तरापत्यप्रत्ययान्ताद् युवप्रत्ययान्ताच्चेति भावः । नन्वपत्यशब्दः पुत्र एव रूढ इति पक्षे पञ्चमादौ यूनि चतुर्थाद्यपत्यप्रत्ययान्तादेव प्रत्ययः स्यात्, ननु तृतीयवाचिगोत्रप्रत्ययान्तादिति, तत्र विध्यर्थमेवेदं स्यात्, ननु नियमार्थमिति वाच्यम्, पुत्रपौत्रादिसाधारणोऽपत्यशब्द इत्येव भाष्ये सिद्धान्तितत्वादिति भावः ।

---

नियमाभावे त्रयाणां परम्परा प्रसज्यते । पष्ठे तु चतुर्णामित्यादि । ततः प्राचामपि इति द्वितीयपक्षे तु गर्गाच्चतुर्थे यूनि मूलप्रकृत्यनन्तराभ्यामनिष्टोत्पत्तिः प्रसज्यते । पञ्चमे तु मूलप्रकृत्यनन्तरयुवभ्यः । तथा नडाच्चतुर्थे यूनि पूर्ववद्द्वाभ्यामनिष्टोत्पत्तिः, पञ्चमे तु त्रिभ्यः । उपगोश्चतुर्थे वाच्ये तु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः । न त्वनन्तरापत्यवाचकात् । ततो जातेऽप्यत इञि रूपानिष्टाभावादित्यादि यथासंभवं तत्रोह्यमित्यर्थः । **गोत्राद्यूनि** । असत्यस्मिन् सूत्रे मुख्यमते पञ्चमादौ यूनि विवक्षिते गोत्रप्रत्ययान्तात् युवप्रत्ययोत्पत्ताविष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरयुवभ्योऽपि स्यादिति पाक्षिकानिष्टे प्राप्ते नियमार्थमिदमित्याशयेनाह—गोत्रप्रत्ययान्तादेवेति । ननु मूलप्रकृत्यनन्तरयुवभ्यः इत्यर्थः । मनोरमायां तु युवप्रत्यान्तादिति प्रथमपक्षेऽयं इत्यपि स्थितम् । अत्र वदन्ति—पञ्चमादौ यूनि विवक्षते तस्य पुनस्तृतीयं प्रत्यनपत्यत्वादप्राप्तौ विध्यर्थमेवेदं स्यात्, ननु नियमार्थमिति युवप्रत्ययान्तात्प्रत्ययो दुर्वारः स्यात् । तस्मादिह 'पितुरेवापत्यम्' इति पक्षो नाश्रयणीय इति । अन्ये त्वाहुः—आद्यपक्षे 'गोत्राद्यूनि–' इत्यावर्त्य एकेनाप्राप्तप्रत्ययं विधाय द्वितीयेन नियम्यते 'यूनि गोत्रादेव' इति । एवं च 'ततः प्राचामपि' इति पक्षेण सहास्यैकरूपता भवतीति । 'गोत्राच्चेद्यून्येव' इति विपरीतनियमस्त्विह न कृतः, व्यावर्त्यालाभात् । नच शैषिकाच्छादयो व्यावर्त्या इति वाच्यम् । 'गोत्रेऽलुगचि' इति लिङ्गात् । **स्त्रियां त्विति** । यद्यत्र 'अस्त्रियाम्' इत्यस्यैकवाक्यतया 'स्त्रीभिन्ने यूनि गोत्रादेव' इत्यर्थः क्रियते, तर्हि स्त्रीषु युवसंज्ञाया अनिषेधात् युवतिषु प्रत्ययानां परम्परा प्रसज्येत । नच 'एको गोत्रे' इत्यनेन निस्तारः । युवसंज्ञया गोत्रसंज्ञाया बाधात् । अथ 'स्त्रियां

पत्य गार्ग्यायणः । स्त्रियां गोत्रादेव प्रत्ययः । १०९५ अत इञ् । ( ४—१—९५ ) अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ्स्यादपत्यार्थे ।

---

स्त्रियां तु न युवसंज्ञेति । इह अस्त्रियामिति योगो विभज्यते । यूनीत्यनुवर्तते। उभयमपि प्रथमया विपरिणम्यते । तथा च स्त्री अपत्यं युवसंज्ञिका नेति फलितमिति भावः । न च स्त्रीभिन्ने यूनि गोत्रादेवत्यर्थे कुतो नाश्रीयते, एवं सत्येकवाक्यत्वलाभादिति वाच्यम्, पञ्चमादिषु युवतिषु प्रत्ययमालाप्रसङ्गात् । न च 'एको गोत्रे' इति नियमात्तन्निवृत्तिः सम्भवतीति वाच्यम्, युवसंज्ञया गोत्रसंज्ञाया बाधात् । नच सत्यपि योगविभागे स्त्रियां न युवप्रत्यय इति व्याख्यायतामिति वाच्यम्, गोत्रप्रत्ययेन युवत्वाभिधानानापत्तेरित्यलम् । गर्गस्येति । गर्गस्य पञ्चमादौ यूनि गार्ग्यशब्दाद् गोत्रे यञन्तात्फकि गार्ग्यायण इति रूपमित्यर्थः । [1]स्त्रियां युवसंज्ञानिषेधस्य प्रयोजनं दर्शयति—स्त्रियामिति । पञ्चमादियुवतीनां युवसंज्ञाविरहेण गोत्रत्वाद् 'एको गोत्रे' इति नियमाद्गार्गीत्येव भवति, न तु गार्ग्यायणीति रूपमित्यर्थः । स्त्रीभिन्ने यूनि गोत्रादेवत्यर्थाश्रयणे तु युवसंज्ञया गोत्रसंज्ञाया बाधाद् 'एको गोत्रे' इत्यस्याप्रवृत्तेः प्रत्ययमाला स्यादिति भावः । अत इञ् । प्रातिपदिकादित्यधिकृतम् अता विशेष्यते, तदन्तविधिः, तदाह—अदन्तं यत्प्रातिपदिकमिति । 'तस्यापत्यम्' इत्यनुवृत्तं 'समर्थानां प्रथमाद्वा' इति च । ततश्च प्रथमोच्चारिततच्छब्दवाच्यात्प्रातिपदिकादिति लब्धम् । सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात् सुबन्तादिति लभ्यते । सुप्स्वेहोपस्थितत्वात् षष्ठ्येव विवक्षिता । तथा च षष्ठ्यन्तात्प्रातिपदिकादिति लभ्यते । यद्यपि प्रातिपदिकं न षष्ठ्यन्तम्, प्रत्ययग्रहणपरिभाषया प्रकृतिप्रत्ययसमुदायस्यैव लाभात् । तथापि प्रातिपदिकप्रकृतिकषष्ठ्यन्तादित्यर्थो विवक्षितः । तदाह—तत्प्रकृतिकात्षष्ठ्यन्तादिति । दाक्षिरिति । दक्षस्यापत्यमिति विग्रहः । इञ्, आदिवृद्धिः, 'यस्येति च' इत्यकारलोपः । 'प्रदीयतां दाशरथाय मैथिली' इति त्वार्षमिति 'तस्यापत्यम्' इत्यत्र निरूपितम् । प्रातिपदिकग्रहणाननुवृत्तौ तु अदन्तात्षष्ठ्यन्तादिति लभ्येत । तथा च दक्षयोरपत्यं दाक्षिरिति न सिध्येदिति

---

युवप्रत्ययः' इति वाक्यभेदेनार्थं क्रियते, तदा गोत्रप्रत्ययेन युवत्वं नाभिधीयेत । किं तु वाक्यभेदेन स्यात् । ततश्च गार्ग्यस्यापत्यं स्त्री गार्गी न स्यात् । अतो 'युवसंज्ञानिषेधपरमेवेदम्' इत्याशयेन व्याचष्टे—न युवसंज्ञेति । अत्रायमाशयः—'अस्त्रियाम्' इति योगो विभज्यते । 'यूनि' इति शब्दस्वरूपमनुवर्तते । परिभाषा चेयम् । यत्र युवसंज्ञाविधानं तत्र 'अस्त्रियाम्' इत्युपतिष्ठत इति निष्कृष्य गतिरियम् । 'जीवति तु वंश्ये युवास्त्रियाम्' इत्येव सूत्रयितुं युक्तम् । अत इञ् । 'घकालतनेषु—' इति ज्ञापकात्सुबन्तादेव तद्धितोत्पत्तिरित्यभ्युपगमेऽप्यधिकृतप्रातिपदिकस्य न वैयर्थ्यं, किं तु प्रयोजनमस्तीति ध्वनयति—अदन्तं यत्प्रातिपदिकमिति । अत इत्यस्य सुबन्तविशेषणत्वे तु दक्षयोरपत्यमित्यादिविग्रहे दाक्षिरित्यादि न सिध्येदिति भावः । तपरः किम्, शिवस्य अपत्यं शैवः । 'प्रदीयतां दाशरथाय—' इत्यत्र तु 'तस्येदम्'

---

१ 'स्त्रियो' इति क्वचित्।

दाक्षिः। १०९६ बाह्वादिभ्यश्च। ( ४—१—९६ ) बाहविः। औडुलोमिः। आकृतिगणोऽयम्। १०९७ सुधातुरकङ् च। ( ४-१-९७ ) चादिञ्। सुधातुरपत्यं सौधातकिः। 'व्यासवरुडनिपादचण्डालबिम्बानां' चेति वक्तव्यम्' ( वा २६११ )। १०९८ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्।

भावः। बाह्वादिभ्यश्च। अपत्य इञिति शेषः। बाहविरिति। बाहुर्नाम कश्चिदृषिः, अथ 'ऋषयः' इत्यधिकृत्य 'बाहविर्गार्ग्यगौतमौ' इत्याश्वलायनसूत्रे दर्शनात्। बाहोरयमिति विग्रहः। इञि, ओर्गुणः। औडुलोमिरिति। उडुलोम्नोऽपत्यमिति विग्रहः। इञि 'नस्तद्धिते' इति टिलोपः। आदिवृद्धिः, अदन्तत्वाभावादप्राप्तिः। सुधातुरकङ् च। चादिञिति। सुधातुशब्दात्षष्ठयन्तादपत्येऽर्थे इञ्प्रत्ययः प्रकृतेरकङादेशश्चेत्यर्थः। अकङ ङकार इत्, अकार उच्चारणार्थः। ङिच्चेत्यन्तादेशः, तदाह—सौधातकिरिति। व्यासेति। व्यास, वरुड, निषाद, चण्डाल, बिम्ब एभ्यश्च इञि प्रकृतेरकङादेश इत्यर्थः। न य्वाभ्याम्। य् च वश्च य्वाविति

इत्यण्। अपत्यत्वविवक्षायां त्विञेव। बाह्वादिभ्यश्च। 'बाधृ लोडने इति धातौ 'केवलस्य बाहोरपत्ययोगासम्भवात्सामर्थ्यात्तदन्तविधौ सौबाहविः' इति माधवोक्तं चिन्त्यमिति ध्वनयन्नाह—बाहविरिति। 'जानन्ति बाहविर्गार्ग्यगौतम—' इत्याश्वलायनसूत्रप्रयोगाद्भाष्यवृत्त्याद्युदाहरणाच्च बाहुशब्दः संज्ञारूपोऽस्तीति भावः। औडुलोमिरिति। यद्यपि गणे बाहु कृष्ण युधिष्ठिर अर्जुन प्रद्युम्नेत्यादिषु केवलो लोमन्शब्दः पठितः, तथापि सामर्थ्यात्तदन्तग्रहणम्। 'तारकाप्युडु वा स्त्रियाम्' इत्यमरोक्त्या नक्षत्रवाच्युडुशब्दः। उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः। शरा इव लोमानि यस्य तस्यापत्यं शारलोमिः। बहुत्वे तु इञपवादोऽकारः प्रागेवाजन्तेषूक्तः। उडुलोमाः। शरलोमाः। इह प्रतिपदविधानेषु पुराणसिद्धाः संज्ञाशब्दा एव गृह्यन्ते, शीघ्रोपस्थितिकत्वात्। तेन इदानींतनो यो बाहुस्तस्यापत्ये बाहव इत्यणेव,न त्विञ्। उक्तं च हरिणा—'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥' अनर्थकं संदिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणत्रयव्यावर्त्यम्। तदुक्तिषु—तत्सदृशेष्वित्यर्थः। अत एव संज्ञा श्वसुरस्यापत्यं श्वाशुरिरित्यत्र 'राजश्वशुरात्—' इति यत् न। मिमीते माता, तस्याः स्वसा मातृस्वसा। इह 'मातृपितृभ्यां स्वसा' इति षत्वं न। नन्वेवं बाहवः श्वाशुरिरिति पूर्वोक्तौ न सिद्ध्यत इति चेत्। मैवम्, अणिञोर्विधौ शब्दविशेषानुपादानादप्रतिषिद्धेष्वपि तत्प्रवृत्तेः। व्यासेति। वेदान् व्यस्यतीति वेदव्यासः, 'कर्मण्यण्' भीमो भीमसेन इतिवदेकदेशग्रहणम्। न य्वाभ्याम्। य्वाभ्याम् किम्। न अर्थो यस्य नार्थः, तस्यापत्यं नार्थिः। पदान्ताभ्यां किम् याज्ञिकः। ऐचो विषयप्रदर्शनाय नेति निषेधोक्तिः। तेनेह -न—दार्व्याश्विर्माध्विश्विः। न ह्यत्र य्वाभ्यां परस्य वृद्धिप्रसक्तिरस्ति। क्वचित्तु वृद्धिप्रसक्तिसत्वेऽपि नेष्यते। द्वे अशीती भृते भृतो भावी वा

१ 'चाण्डाल' इति क्वचित्पाठः।

( ७-३-३ ) पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः । किं तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः । वैयासकिः । वात्स्यकिरित्यादि । १०९९ गोत्रे कुञ्जादिभ्यश्च्फञ् । ( ४-१-९८ ) ११०० व्रातच्फञोरस्त्रियाम् । ( ५-३-११३ ) व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यात्, न तु स्त्रियाम् । कौञ्जायन्याः । बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते । ब्राध्नायन्यः । स्त्रियां कौञ्जायनी ।

विग्रहः । वकारादकार उच्चारणार्थः । तदाह—यकारवकाराभ्यामिति । परस्ये-त्यध्याहारलभ्यम् । न वृद्धिरिति । मृजेर्वृद्धिरित्यतस्तदनुवृत्तेरिति भावः । तु शब्दो विशेषप्रदर्शनार्थ इत्याह—किन्त्विति । ताभ्यामिति । यकारवकाराभ्यामित्यर्थः । पूर्वाविति । पूर्वावयवावित्यर्थः । तेन आगमत्वं लभ्यते । तदाह—ऐचावागमाविति । ऐच् प्रत्याहारः । यथासङ्ख्यं यकारात्पूर्वं ऐकारः, वकारात्पूर्वं औकारः । वैयासकिरिति । वदान्व्यस्यति विविधमस्यति शाखाभेदेन विभजतीति वदन्यासः, कर्मण्यण् । अत्र नामैकदेशग्रहणम् । व्यासस्यापत्यमिति विग्रहः । इञ्प्रत्ययः प्रकृतेरकडादेशः । अत्र यकारः पदान्तः । तस्मात्परस्य आकारस्य पर्जन्यवल्लक्षणप्रवृत्त्या आदिवृद्धिः प्राप्ता न भवति । किन्तु यकारात्पूर्वं ऐकार आगमः, वैयासकिरिति रूपम् । स्वश्वस्यापत्यं सौवश्विरि-त्यत्र वकारात्परस्य न वृद्धिः, ततः पूर्वं औकारः । न च ऐचो वृद्ध्यपवादत्वादेव वृद्ध्यभाव-सिद्धेर्न निषेधो व्यर्थ इति वाच्यम्, यत्र य्वाभ्यां परस्य प्रसक्ताया वृद्धेर्निषेधः तत्रैव ऐजा-गमाविति विषयनिर्देशार्थत्वात् । तेन दाध्यश्विरित्यादौ न । वृद्धिनिषेधश्च येन नाप्राप्तिन्यायेन आदिवृद्धेरेव । तेन द्वे अशीती भृतो द्व्याशीतिक इत्यत्र 'संख्यायाः संवत्सरसंख्यस्य च' इत्यु-त्तरपदवृद्धिर्भवत्येव । वरडादयो जातिविशेषाः । वाग्डकिः, नैषादकिः, चाण्डालिः, वैम्बकिः । गोत्रे कुञ्ज । स्पष्टम् । इञोऽपवादः । च्फञि चञावितौ । व्रातच्फञोः । व्रातश्च च्फञ् चेति द्वन्द्वात्प्रत्ययेन पञ्चम्यर्थे षष्ठी । तदाह—व्रातवाचिभ्य इति । स्वार्थे ञ्यः स्यादिति । 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इत्यतो ञ्य इत्यनुवर्तते । स च स्वार्थिकः, 'ञ्यादयः प्राग्वुनः' इति स्वार्थेषु परिगणनादिति भावः । कौञ्जायन्य इति । कुञ्जस्य गोत्रापत्यमिति विग्रहः । च्फञि चञावितौ आयन्नादेशः, आदिवृद्धिः, ततो ञ्यः, यकार इत्, 'यस्येति च' इत्यकारलोपः । तद्राजत्वादिति । 'ञ्यादय-

द्व्याशीतिक । वाग्डकिरिति । वरुडादयो जातिविशेषाः । वकारस्यापदान्तत्वात् 'न य्वाभ्याम्—' इत्यैज् न । इत्यादीति । नैषादकिः, चाण्डालिः, वैम्बकिः । गोत्रे कुञ्जा । इतः प्राक् 'एको गोत्रे' इत्यादि सूत्रद्वयं चेत्पठ्यते तर्ह्यत्र गोत्रग्रहणं त्यक्तुं शक्यमित्याह । च्फञो ञकारो वृद्ध्यर्थः । कौञ्जायन्यः । चकारस्तु व्रातच्फञोः—इत्यत्र विशेषणार्थः । तेन 'अश्वादिभ्यः फञ्' आश्वायनः इत्यत्र ञ्यो न भवति अथेदमवधेयम्—कौञ्जायन्य इत्यादावेकवचने च ञ्यस्य ञित्त्वादाद्युदात्तत्वमेव । बहुत्वे तु ञ्यस्य लुकि च्फञश्चकारस्य तुल्यबलयोर्विरोधे सति परत्वाद् ञित्स्वरेणाद्युदात्तत्वं प्राप्तं भाष्यादौ 'तद्धितस्य कितः' इत्यत्र योगं विभज्य 'चितः' इत्यनुवर्त्य तद्धितस्य 'चितोऽन्तोदात्तत्वम्' इति व्याख्यानात् 'कौञ्जायनाः'

गोत्रत्वेन जातित्वान्ङीप् । अनन्तरापत्ये कौञ्जिः। ११०१ नडादिभ्यः फक्। (४-१-९९) गोत्र इत्येव। नाडायनः। चारायणः। अनन्तरो नाडिः। ११०२ हरितादिभ्योऽञः। (४-१-१००) एभ्योऽञन्तेभ्यो यूनि फक्।हारितायनः। इह गोत्राधिकारेऽपि सामर्थ्याद्यून्ययम्। न हि गोत्रादपरो गोत्रप्रत्ययः। बिदाद्यन्तर्गणो हरितादिः। ११०३ यञिञोश्च। (४-१-१०१) गोत्रे यौ यञिञौ तदन्तात्फक्स्यात्। 'अनाति' इत्युक्तेः 'आपत्यस्य-' (सू १०८२) इति यलोपो न। गार्ग्यायणः।दाक्षायणः। ११०४ शरद्वच्छुनकदर्भाद्-

स्तद्राजाः' इति वचनादिति भावः। लुग्वक्ष्यत इति। 'तद्राजस्य बहुषु-' इत्यनेनेति शेषः। ब्राध्नायन्य इति। ब्रध्नस्य गोत्रापत्यमिति विग्रहः। च्फञादि पूर्ववत्। ञ्यविधावस्त्रियामित्यस्य प्रयोजनमाह—स्त्रियां कौञ्जायनीति। कुञ्जस्यापत्यं स्त्री इति विग्रहः। स्त्रीत्वादिह न ञ्यप्रत्यय इति भावः। अदन्तत्वादिह टावमाशङ्क्याह—गोत्रत्वेनेति। कृतं तु ञ्यप्रत्यये योपधत्वाज्जातिलक्षणङीषभावे टाप् स्यादिति भावः। च्फञ्विधौ गोत्रग्रहणस्य प्रयोजनमाह—अनन्तरापत्ये कौञ्जिरिति। नडादिभ्यः फक्। इञोऽपवादः। अनन्तरो नाडिरिति। अनन्तरापत्यस्य गोत्रत्वाभावात् फगभावे इञेवेत्यर्थः। 'हरितादिभ्योऽञः' इत्यादि स्पष्टम्। यञिञोश्च। गोत्रे इत्यधिकृतं यञिञोर्विशेषणम्, नतु विधेयस्य फकः, व्याख्यानात्। तदाह—गोत्रे यौ यञिञाविति। सामर्थ्याद्यून्ययम्। न हि गोत्रप्रत्ययाद् गोत्रप्रत्ययोऽस्ति, 'एको गोत्रे' इति नियमात्। अनातीति। गर्गस्य गोत्रं गार्ग्यः। गर्गादित्वाद्यञ्। गार्ग्यस्यापत्यं युवेत्यर्थे यञन्तात् फकि आयन्नादेशे अनातीति पर्युदासाद् 'आपत्यस्य च'- इति यलोपाभावे णत्वे गार्ग्यायण इति रूपमित्यर्थः। दाक्षायण इति। दक्षस्य गोत्रापत्यं दाक्षिः, अत इञ्, दाक्षेरपत्यं युवः दाक्षायणः इञन्तात्फक्। 'गोत्रे किम् ? सुतङ्गमस्यादूरभव इत्यर्थे 'सुतङ्गमादिभ्य इञ्' इति इञि सौतङ्गमेरपत्ये न फक्। शरद्वच्छुनक। शेषपूरणेन सूत्रं

इत्यत्रान्तोदात्ततैव भवति। न चैवं हि फगेवात्रास्तु किमनेन गुरुनिर्देशेनेति वाच्यम्, तथा हि सति 'व्रातच्फञोरस्त्रियाम्' इति सूत्रप्रणयनापत्त्या नाडायनादिभ्योऽपि ञ्यः स्यादिति। कुञ्ज, ब्रध्न, शङ्ख, शकटेत्यादि। व्रातच्फञो। 'पूगाञ्ञ्योऽग्रामणी-' इत्यतोऽनुवर्तनादाह—ञ्यः स्यादिति। व्रातवाचिभ्यः 'कापोतपाक्यः' इत्युदाहरिष्यति। अस्त्रियां किम्, कपोतपाकी स्त्री। तद्राजत्वादिति। 'ञ्यादयस्तद्राजाः।' इति सूत्रेणेति शेषः। लुग्वक्ष्यत इति। 'तद्राजस्य बहुषु-' इत्यनेनेति शेषः। कौञ्जायनीति। इह सति ञ्यप्रत्यये यौपधत्वाद् 'जातेः' इति ङीषभावे टापि रूपे स्वरे च विशेषो बोध्य इत्याहुः। यञिञोश्च। अधिकारप्राप्ते गोत्रग्रहणं यञिञोर्विशेषणं न तु विधेयस्य फकः, व्याख्यानात्तदेतदाह—गोत्रे याविति। गोत्र किम्, 'द्वीपादनुसमुद्रं यञ्' द्वीपे भवो द्वैप्यः। सुतंगमादिभ्यश्चातुरर्थिक इञ्। सौतंगमिः। तदपत्ये फक् मा भूत्। फक् स्यादिति। सामर्थ्याद्यून्ययम्। शरद्वच्छुनक। भृगुः शरद्वतोऽपत्यं न भवति, पूर्वभावित्वात्। एवं शुनकस्यापत्यं

भृगुवत्साग्रायणेषु । ( ४-१-१०२) गोत्रे फक् । अञिञोरपवादः । आद्यौ विदादी । शारद्वतायनो भार्गवश्चेत्, शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत्, शौनकोऽन्यः । दार्भायण आग्रायणश्चेत्, दार्भिरन्यः । ११०५ द्रोणपर्वतजीवन्तादन्यतरस्याम् । (४-१-१०३) एभ्यो गोत्रे फक्वा । द्रोणायनः, द्रौणिः । पार्वतायनः, पार्वतिः । जैवन्तायनः, जैवन्तिः । अनादि-रिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात् । ११०६ अनृष्यानन्तर्ये बिदादिभ्योऽञ् । (४-१-१०४) एभ्योऽञ् गोत्रे, ये त्वत्रानृषयः पुत्रादयस्तेभ्यः अनन्तरे । सूत्रे स्वार्थे ष्यञ् । विदस्य गोत्रापत्यं वैदः । अनन्तरा बैदिः । बाह्वादेराकृतिगणत्वादिञ् । पुत्रस्यापत्यं पौत्रः ।

---

व्याचष्टे—गोत्रे फगिति । आद्यौ विदादी इति । शरद्वच्छुनकशब्दौ विदादी । अनयोः द्व्यच्चविषये अञपवाद इत्यर्थः । दर्भावपत्ये इञपवाद इति स्पष्टमेव । दर्भः कश्चिदृषिः । ऋष्यण बाधित्वा बाह्वादित्वादिञ् । आग्रायणश्चेति । अग्रो नाम कश्चिदृषिः । नडादि-फगन्ताद्यञ् । द्रोणपर्वत । अनादिरिति । अश्वत्थाम्नः पिता यो महाभारते कर्णादौ प्रसिद्धः, तदपेक्षया अन्य एवायं अनादिर्द्रोण इत्यर्थः । अश्वत्थाम्नीति । द्रोणाचार्यस्यान-न्तरापत्ये अश्वत्थाम्नि द्रौणायन इति प्रयोग इत्यर्थः । तदिदं 'बाह्वादिभ्यश्च' इति सूत्रे भाष्ये स्पष्टम् । अनृष्यानन्तर्ये । अनृषि इति लुप्तपञ्चमीकम् । विदादिभ्योऽञ् इति द्विरावर्तते । तथा च, 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इति कृत्स्नमेकं वाक्यम् । 'विदादिभ्योऽञ्' इति वाक्यान्तरम् । तत्र द्वितीयं वाक्यं व्याचष्टे—एभ्योऽञ् गोत्र इति । गोत्रे विवक्षिते विदादिभ्यः अञ् स्यादित्यर्थः । अत्र प्रथमं वाक्यं कृत्स्नसूत्रं व्याचष्टे—ये त्विति । अनृषिभ्यो विदादिभ्यः अनन्तरापत्ये अञ् स्यादित्यक्षरार्थः । विदादौ हि ऋषयः अनृषयश्च पठिताः । तत्र ये अनृषयः तेभ्योऽनन्तरापत्ये अञिति फलितमिति भावः । ननु आनन्तर्ये इति श्रवणादनन्तर इति कथमित्यत आह—सूत्रे स्वार्थे ष्यञिति । अनन्तरशब्दादिति शेषः । चतुर्वर्णादिवदिति भावः । विदस्य गोत्रापत्यं वैद इति । ऋविदस्य पित्रादितनो गोत्र

---

न भवति वत्सः । अनोऽत्र भार्गवश्च वात्स्यश्चाग्रायणश्चेति द्वन्द्वे 'अत्रिभृगु-' इति 'यञिञोश्च' इति च यथासम्भवं लुग् बोध्यः । यद्यप्यत्र बहुत्वाभावाद् 'अत्रिभृगु-'इत्यादिना लुग् दुर्लभः, तथापि युगपदधिकरणवचनतायां वनिपदानां बह्वर्थतासौलभ्याद्वा स्यादेव लुक् । अतो व्याचष्टे—भार्गवश्चेदिति । वात्स्यश्चेदिति च । अनादिरिति । अश्वत्थाम्नः पिता यो महाभारते प्रसिद्धः, तदपेक्षयाऽन्य एवायं द्रोण इत्यर्थः । अश्वत्थाम्नीत्यादि । द्रोणाचार्य-स्यानन्तरापत्ये अश्वत्थाम्नि द्रौणायन इति प्रयोगो भाष्य इत्यर्थः । अनृष्या । 'अनृषि' इति पञ्चम्याः सौत्रो लुक् । अनृषिभ्य इत्यर्थः । सूत्र इति । आनन्तर्य इत्यत्रेत्यर्थः । स्वार्थ इति । चातुर्वर्ण्यादिराकृतिगणत्वादिति भावः । वैदिरित्यत्र ऋष्यणमाशङ्क्याह—बाह्वादे-रिति । विद, उर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, किलात, 'परस्त्री परशुं च'

---

१ 'आनन्तर्ये' इति क्वचित्पाठः ।

दौहित्रः । ११०७ गर्गादिभ्यो यञ् । ( ४-१-१०५ ) गोत्र इत्येव । गार्ग्यः । वात्स्यः । ११०८ यञञोश्च । ( २-४-६४ ) गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम् । गर्गाः । वत्साः । विदाः । उर्वाः । तत्कृते इति किम्—प्रियगार्ग्याः । स्त्रियां तु गार्ग्यः स्त्रियः । गोत्रे किम्—द्वैप्याः, औत्साः । प्रवराध्यायप्रसिद्धमिह गोत्रम्, तेनेह न—पौत्राः,

एवाञिति भावः । ऋष्यणोऽपवादः । स्वरे विशेषः । ननु अनन्तरापत्ये अञभाव इञपवाद ऋष्यणेवोचित इति कथमनन्तरो वैदिरित्यत आह—बाह्वादिरिति । विदादिगणस्थादनृषेरनन्तरापत्ये अञमुदाहरति—पौत्रः । दौहित्र इति । पुत्रस्यानन्तरापत्यमिति दुहितुरनन्तरापत्यमिति च विग्रहः । यथायथमणिञोरपवादः अञ् । गर्गादिभ्यो यञ् । गार्ग्यः । वात्स्य इति । गर्गस्य गोत्रापत्यमिति वत्सस्य गोत्रापत्यमिति च विग्रहः । रामो जामदग्न्यः, पाराशर्यो व्यास इत्यादौ तु अनन्तरापत्ये गोत्रत्वारोपाद्यञित्यूह्यम् । यञञोश्च । द्वितीयचतुर्थपादे इदं सूत्रम् । न त्विदं चातुर्थिकमपत्याधिकारस्थम् । तत्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति सूत्रं तद्राजस्येतिवर्जमनुवर्तते । 'ण्यक्षत्रिय-' इत्यतो 'लुक्' इति 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्रे इति च । तदाह—गोत्रे यदिति । एतयोरिति । यञञोरित्यर्थः । प्रत्ययादर्शनस्यैव लुक्त्वादिति भावः । तत्कृत इति । यञञ्प्रत्ययार्थगतबहुत्वे इति यावत् । गर्गा इति । गर्गस्यापत्यानीत्यादिविग्रहः । प्रियगार्ग्या इति । प्रियो गार्ग्यो येषामिति विग्रहः । अत्र यञर्थगतबहुत्वाभावान्न लुगिति भावः । द्वैप्या इति । द्वीपे भवा इत्यर्थः । 'द्वीपादनुसमुद्रम्-' इति यञ् । औत्सा इति । उत्से भवा इत्यर्थः । 'उत्सादिभ्योऽञ्' इहोभयत्रापि यञञोर्गोत्रवाचित्वाभावान्न लुगिति भावः । ननु पौत्रा दौहित्रा इत्यत्राप्यनृषिविदादिलक्षणाञो लुक् स्यात् । नच तस्यानन्तरापत्यवाचित्वादगोत्रवाचित्वाभावान्न लुगिति वाच्यम्, 'यूनि लुक्' इति सूत्रभाष्ये अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते इति सिद्धान्तितत्वादित्यत आह—प्रवरेति । 'कश्य-

इत्यादि । गर्गादिभ्यो । गर्ग, वत्स, व्याघ्रपाद्, पुलस्ति, बभ्रु, मण्डु, वतण्ड, कपि, कत, शकल, कण्व, अगस्ति, [1]कुण्डिन, याज्ञवल्क, पराशर, जमदग्नि इत्यादि । कथं तर्हि 'रामो जामदग्न्यः' इति । अनन्तरापत्ये ह्ययम् । सत्यम् । अनन्तरेऽपि गोत्रत्वारोपाद्बोध्यः । यञञोश्च । 'ण्यक्षत्रियार्ष-'इत्यतो लुगिति, 'तद्राजस्य-' इति सूत्राद्बहुषु तेनैवास्त्रियामिति चानुवर्तते, 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्र इति च तदाह—गोत्रे यद्यञन्तमित्यादि । प्रवराध्यायप्रसिद्धगोत्रवाचिनौ केवलौ यञञौ न भवत इति 'गोत्र' इत्यनेन तदन्तं विशेषितम् । तदवयवयोरिति । 'निर्दिश्यमानस्यादेशा भवन्ति' इति भावः । प्रवराध्यायेति । एतच्च 'स्त्रीपुंसाभ्याम्-'इति सूत्रे 'लौकिकस्य गोत्रस्य ग्रहणम्' इति भाष्यमुपादाय कैयटेनोक्तमिति भावः । तेनेह नेति । यद्यलौकिकं गोत्रमपत्यमात्रं गृह्येत, तदास्यादेवातिप्रसङ्ग

१ क्वचित् 'कुण्डिनी' इति पाठः । गणपाठे तु 'कण्डिनी' इति लभ्यते ।

दौहित्राः। ११०९ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः। (४-१-१०६) गोत्रे यञ्। माधव्यो ब्राह्मणः, माधवोऽन्यः। बाभ्रव्यः कौशिकश्चेत्, बाभ्रवोऽन्यः। बभ्रुशब्दस्य गर्गादिपाठात्सिद्धेऽपि नियमार्थमिदम्। गर्गादिपाठफलं तु लोहितादिकार्यम्। बाभ्रव्यायणी। १११० कपिबोधादाङ्गिरसे। (४-१-१०७) गोत्रे यञ् स्यात्। काप्यः। बौध्यः। आङ्गिरसे किम्—कापेयः। बौधिः। ११११ वतण्डाच्च। (४-१-१०८) आङ्गिरसे इत्येव। वातण्ड्यः। अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठाद्यञणौ। वातण्ड्यः, वातण्डः। १११२ लुक् स्त्रियाम्। (४-१-१०९) 'वतण्डाच्च' (सू ११११) इति विहितस्य लुक्स्यात्स्त्रियाम्। शार्ङ्गरवादित्वान्ङीन्। वतण्डी। अनाङ्गिरसे तु वातण्ड्यायनी। लोहितादित्वात्ष्फः।

---

पार्श्वो भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। तेषां यदपत्यं तद्गोत्रमित्याचक्षते इति बौधायनीयादिप्रवराध्यायप्रसिद्धाः भार्गवादय एवेह गोत्रत्वेन विवक्षिता इत्यर्थः। कैयटस्तु लौकिकस्य गोत्रस्य ग्रहणमिति भाष्यमुपादाय तथैव व्याख्यातवानिति भावः। एवं च पौत्रा दौहित्रा इत्यादौ पौत्रदौहित्रयोः तथाविधगोत्रत्वाभावान्न दुगिति स्थितम्। विस्तरस्तु शब्देन्दुशेखरे ज्ञेयः। मधुबभ्र्वोर्ब्राह्मणकौशिकयोः। शेषपूरणेन सूत्रं व्याचष्टे—गोत्रे यञिति। मधुशब्दाद्बभ्रुशब्दाच्च गोत्रापत्ये यञ् स्याद् ब्राह्मणे कौशिके च यथासंख्यं वाच्ये इत्यर्थः। लोहितादिकार्यमिति। ष्फ इत्यर्थः। लोहितादिर्गर्गाद्यन्तर्गण इति भावः। बाभ्रव्यायणीति। बभ्रोर्गोत्रापत्यं स्त्रीति विग्रहः। गर्गादियञि बाभ्रव्यशब्दात् 'सर्वत्र लोहितादिकतन्तेभ्यः' इति ष्फः। आयन्नादेशः, षित्वाद् ङीषिति भावः। कपिबोधादाङ्गिरसे। गोत्रे यञ् स्यादिति। शेषपूरणमिदम्। कपिशब्दाद्बोधशब्दाच्च आङ्गिरसात्मके गोत्रे गम्ये यञ् स्यादित्यर्थः। कापेय इति। अत्र गोत्रस्य अनाङ्गिरसत्वाद् यञभावे 'इतश्चानिञः' इति ढक्। बौधिरिति। अनाङ्गिरसत्वाद् यञभावे ऋष्यणं बाधित्वा बाह्वादित्वादिञिति भावः। कपेर्गर्गादौ पाठेऽपि आङ्गिरस एवेति नियमार्थं ग्रहणम्। तस्य गर्गादौ पाठस्तु लोहितादिकार्यार्थः। काप्यायनी। बोधशब्दात्तु अप्राप्ते विधिः। वतण्डाच्च। वतण्डस्य गर्गादौ शिवादौ च पाठाद् यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थमिदम्। लुक् स्त्रियाम्।

---

इति भावः। लोहितादीति। 'सर्वत्र लोहितादि-' इत्यादिना ष्फः। ष्फेणोक्तेऽपि स्त्रीत्वे षित्त्वसामर्थ्याद् ङीषित्याशयेनाह—बाभ्रव्यायणीति। गर्गादिगण एव 'बभ्रु कौशिके' इति पठ्यते। एवं हि द्विर्बभ्रुग्रहणं न कर्तव्यं भवतीति हरदत्तादयः। कापेय इति। 'इतश्चानिञः' इति ढक्। कपेर्गर्गादिगणपाठो लोहितादिकार्यार्थः। तेन काप्यायनीति सिध्यति। बौधिरिति। अनृषित्वादिञ् बाह्वादित्वाद्वा। वतण्डाच्च। यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थं सूत्रम्। लुक् स्त्रियाम्। विहितस्येति। 'परिशेषितस्य वा' इति वाच्यम्। एतच्च 'आङ्गिरसे' इत्यनुवृत्त्या लभ्यते। यद्यपि 'वतण्डाल्लुक् स्त्रियाम्' इत्येकसूत्रकरणेऽपि 'आङ्गिरसे' इत्यनुवृत्त्या अनाङ्गिरसे यञणोरुभयोरभावात् स्त्रियामिष्टं सिध्यति, तथापि पुंस्याङ्गिरसे यञणोरुभया

अणि तु वातण्डी । अपित्वाद्वक्ष्यमाणः ष्यङ् न । १११३ अश्वादिभ्यः फञ् । ( ४-१-११० ) गोत्रे । आश्वायनः । 'पुंसि जाते' ( ग सू ६ ) पुंसीति तु प्रकृतिविशेषणम् । जातस्य गोत्रापत्यं जातायनः । पुंसि इति किम्—जाताया अपत्यं जातेयः । १११४ भर्गात्त्रैगर्ते । (४-१-१११) गोत्रे फञ् । भार्गायणस्त्रैगर्तः, भार्गिरन्यः । १११५ शिवादिभ्योऽण् । (४-१-११२) गोत्रे इति निवृत्तम् । शिवस्यापत्यं शैवः । गाङ्गः । पक्षे तिकादित्वात्फिञ् ।

---

वतण्डाच्चेति विहितस्येति । यञ इति शेषः । वतण्डीति । वतण्डस्य गोत्रापत्यं स्त्री आङ्गिरसीति विग्रहः । यञो लुकि आदिवृद्धिनिवृत्तौ ङीनिति भावः । वातण्ड्यायनीति । यञि आदिवृद्धौ लोहितादिलक्षणः ष्फः, पित्वाद् ङीपिति भावः । 'वतण्डाच्च' इति विहितस्येत्यस्य प्रयोजनमाह—अणि तु वातण्डीति । शिवादित्वादणि गोत्रत्वेन जातित्वातिलक्षणे ङीपि तस्याणो वतण्डाद्विहितत्वेऽपि 'वतण्डाच्च' इति विहितत्वाभावान्न लुगिति भावः । ननु वतण्डादणि तस्य 'अणिञोरनार्षयोः—' इति वक्ष्यमाणः स्यादित्यत आह—अपित्वादिति । अश्वादिभ्यः । गोत्र इति । शेषपूरणमिदम् । आङ्गिरस इति निवृत्तम् । आश्वायन इति । अश्वस्य गोत्रापत्यमिति विग्रहः । इञपवादः फञ् । पुंसि जात इति । गणसूत्रम् । प्रकृतिविशेषणमिति । पुंसि विद्यमानो यो जातशब्दः तस्माद्गोत्रे फञित्यर्थः । जातेय इति । 'स्त्रीभ्यो ढक्' । भर्गात्त्रैगर्ते । इदमपि गणसूत्रम् । त्रिगर्तो नाम भर्गस्य पुत्रः । तस्यापत्यं त्रैगर्तः । ऋष्यण् । तस्मिन्गोत्रे भर्गात् फञ् । शिवादिभ्योऽण् । निवृत्तमिति । वृत्तिकैयटयोस्तथोक्तत्वादिति भावः । 'यूनि लुक्' इति सूत्रस्य भाष्यकैयटयोस्तु गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते । तत्तु मतान्तरमित्येके । तदेव युक्तमिति शब्देन्दुशेखरे प्रपञ्चितम् ।

---

प्राप्तिरनिष्टेति तद्वारणाय पृथक् सूत्रं कृतम् । अपित्वादिति । न चैवं 'ऋष्यन्धक—' इत्यणि सिद्धे शिवादिगणे वतण्डपाठो व्यर्थ इति शङ्क्यम् । गर्गादिपाठेन यञा बाधात्तन्निवृत्तये तत्पाठस्यावश्यकत्वात् । ष्यङ्नेति । 'अणिञोरनार्षयोः—' इति सूत्रेणेति भावः । अश्वादिभ्यः । गोत्र इति । इह गणे बैल्य, आनडुह्य, आत्रेय, इति गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते, तेभ्यस्तु यून्येव । 'एको गोत्रे' 'गोत्राद्यूनि—' इति वचनात् । तत्र बिलिर्नाम राजर्षिस्ततो 'वृद्धेत्कोसला—' इति ञ्यङ् । आनडुह्यशब्दो गर्गादियञन्तः । आत्रेयशब्दो ढगन्त इति ज्ञेयः । पुंसि जात इति । गणसूत्रमिदम् । जातशब्दे पुंसि विद्यमाने फञ् इत्यर्थः । कस्मादित्याकाङ्क्षायामर्थाज्जातशब्दादिति लभ्यते । जाताया इति । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिः । शिवादिभ्योऽण् । ननु विशेषविहितानिञादीन् बाधित्वा अणेवारम्भसामर्थ्याद्भविष्यति किमनेनाण्ग्रहणेन । अत्राहुः—ऋष्टिषेणशब्दोऽत्र गणे पठ्यते, ततः प्राप्तमिञं बाधित्वा परत्वात् 'सेनान्तलक्षण—' इति ण्ये प्राप्ते इह पाठसामर्थ्याद्यथाप्राप्तप्रत्यय इञेव स्यान्न त्वण् । तथा चात्राण्ग्रहणमावश्यकमित्येके । अणधिकारादणेव स्यान्नान्य इत्यण्ग्रहणं स्पष्टप्रतिपत्त्यर्थमित्यन्ये । शिव,

गाङ्गायनिः । शुभ्रादित्वाड्ढक्, गाङ्गेयः । १११६ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः । (४-१-११३) अवृद्धेभ्यो नदीमानुषीनामभ्योऽण् स्यात् । ढकोऽपवादः । यामुनः । नार्मदः । चिन्तिताया अपत्यं चैन्तितः । अवृद्धाभ्यः किम्—वासवदत्तेयः । नद्यादि किम्—वैनतेयः । तन्नामिकाभ्यः किम्—शोभनाया अपत्यं शौभनेयः । १११७ ऋष्यन्धकवृष्णिकुरुभ्यश्च । (४-१-११४) ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः—श्वाफल्कः ।

---

अवृद्धेभ्यो नदी । नदीमानुषीशब्दाभ्यामवृद्धाभ्य इति स्त्रीत्वम् । वस्तुतस्तु वृद्धेभ्यो नदीमानुषीनामभ्य इत्येव सूत्रयितुमुचितमिति व्याचष्टे—अवृद्धेभ्य इत्यादि । ननु 'तस्यापत्यम्' इत्यण् सिद्धे किमर्थमिदमित्यत आह—ढकोऽपवाद इति । चिन्तिता नाम काचिन्मानुषी । वासवदत्तेय इति । वासवदत्ता नाम काचिन्मनुष्यस्त्री, तस्या अपत्यमिति विग्रहः । वृद्धत्वादणभावे ढगिति भावः । वैनतेय इति । विनताया अपत्यमिति विग्रहः । विनता नाम गरुडमाता, सा न मानुषी, नापि नदीति भावः । शौभनेय इति । शोभनाशब्दस्य न नदीमानुषीनामत्वमिति भावः । ऋष्यन्धक । प्रलीना वेदास्तपोबलवशाद् यान् ऋषन्ति प्राप्नुवन्ति ते ऋषयः । तथा च तैत्तिरीये श्रुतम्—'अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्, त ऋषयोऽभवन्, तदृषीणामृषित्वम्' इति । अजाः नित्याः, पृश्नयः शुक्लाः शुद्धा इति यावत् । तान् तपस्यमानान्—तपश्चरतः, स्वयम्भु—अनादि, ब्रह्म—वेदः, अभ्यानर्षत् । 'ऋष गतौ' आभिमुख्येन प्राप्नोत् । तेन वेदस्य अर्पणाद् ऋषिशब्दवाच्या अभवन्निति वेदभाष्यम् ।

'सर्गादिसमये वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥'

इति पुराणेषु प्रसिद्धम् । कात्यायनप्रणीतसर्वानुक्रमणिकाख्यग्रन्थे स्पष्टमेतत्, यदाह—ऋषयो मन्त्रद्रष्टार इति । अन्धकशब्देन वृष्णिशब्देन कुरुशब्देन च अन्धकादिवंश्या विवक्षिताः । ऋषिविशेषवाचिभ्य अन्धकादिवंश्यवाचिभ्यश्चापत्ये

---

पुलस्त्य, वनण्ड, जरत्कारु, विपाट्, तक्षन्, विश्रवण, रवण, कद्रुपेत विश्वासे-त्यादि । गोत्र इति निवृत्तमिति । एतच्च वृत्तौ कैयटे च स्पष्टम् । यद्यपि 'गोत्रस्त्र्यामूत्पन्न गोत्राधिकार' इति 'यूनि लुक्' इति सूत्रस्थभाष्यकैयटाभ्यां लभ्यते तथापि तन्मतान्तरमिति भावः । एवं चेत प्रभृतयः पञ्चमान्ताः प्रत्ययाः भवन्तीति स्थितम् । शुभ्रादित्वान्नित्यढकि प्राप्ते जरत्कारुशब्दोऽत्र विकल्पार्थं पठ्यते । जारत्कारवः । ढकि तु 'ढ लोपोऽवृद्धा' इत्युगागमः । जारत्कारवेयः । कुर्वादित्वाद् 'गर्गे कुर्वादिभ्य—' इति नित्ये ण्ये प्राप्ते विपाट्शब्दोऽत्र विकल्पार्थं पठ्यते । वैपाशः वैपाशायनः । 'सनान्तष्णा—' इति ण्यप्रत्यये 'उदीचाम्—' इति ङीपि च प्राप्ते तक्षन्शब्दोऽत्र विकल्पार्थं पठ्यते, ण्यप्रत्ययेन समावेशोऽनेष्यते, न स्त्रिया । ताक्ष्णः, ताक्ष्ण्यः । विश्रवणरवण-शब्दावत्र पठ्येते, तौ च विश्रवःशब्दस्यादेशौ । विश्रवसोऽपत्यं वैश्रवणः, रावणः । अवृद्धाभ्यो—'अवृद्धेभ्यो नदीमानुषीनामभ्यः' इत्येव सूत्रयितुं युक्तमित्याशयेन

वृष्णिभ्यः—वासुदेवः, आनिरुद्धः । 'शौरिः' इति तु बाह्वादित्वात् । कुरुभ्यः—नाकुलः, साहदेवः । इञ एवायमपवादः, मध्येऽपवादन्यायात् । अत्रिशब्दात्तु परत्वाड्ढक्, आत्रेय । **१११८ मातुरुत्संख्यासंभद्रपूर्वायाः।** ( ४-१-११५ ) संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । साम्मातुरः । भाद्रमातुरः। आदेशार्थं वचनम् । प्रत्ययस्तूत्सर्गेण सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः, तेन धान्यमातुर्न । संख्या इति किम्—सौमात्रः । शुभ्रादित्वाद् द्वैमात्रेयः[1] । **१११९ कन्यायाः कनीन च ।** ( ४-१-११६ ) ढकोऽपवादोऽण्,

अण् स्यादित्यर्थः । इञोऽपवादः । ऋषिभ्यः उदाहरति—वाशिष्ठः । वैश्वामित्र इति । अन्धकेभ्य इति । अन्धकवंश्यवाचिभ्य उदाह्रियत इत्यर्थः । श्वाफल्क इति । श्वफल्कस्यापत्यमिति विग्रहः । वृष्णिभ्य इति । वृष्णिवंश्यवाचिभ्य उदाह्रियत इत्यर्थः । वासुदेव इति । वसुदेवस्यापत्यमिति विग्रहः । आनिरुद्ध इति । अनिरुद्धस्यापत्यमिति विग्रहः । ननु शूरो नाम कश्चिद् वृष्णिवंश्यः । तस्यापत्यं शौरिः कथम् ? अण्प्रसङ्गादित्यत आह—शौरिरिति त्विति । बाह्वादित्वादित्यनन्तरम् इञा समावेशमिति शेषः । कुरुभ्य इति । कुरुवंश्यवाचिभ्य उदाह्रियत इत्यर्थः । नकुलसहदेवौ प्रसिद्धौ । ननु अत्रेरपत्यमित्यर्थे 'इतश्चानिञः' इति ढकि आत्रेय इति कथम् ? ऋष्यणा इञ इव ढकोऽपि बाधौचित्यादित्यत आह—इञ एवेति । न तु ढक इत्यर्थः । मातुरुत्संख्यासंभद्रपूर्वायाः । द्वैमातुर इति । द्वयोर्मात्रोरपत्यमिति विग्रहः । 'तद्धितार्थ—'इति समासः । अण्, ऋकारस्योकारः, रपरत्वम् । एवं षाण्मातुरः । सांमातुर इति । समीचीना माता संमाता, संमातुरः । अण्, उत, रपरत्वम् । भाद्रमातुर इति । भद्रा चासौ माता चेति विग्रहः । अणादि पूर्ववत् । ननु 'तस्यापत्यम्' इत्येव सिद्धे अण्विध्यर्थ एवेत्यत आह—आदेशार्थं वचनमिति । उदादेशस्य अण्संनियोगेन विध्यर्थमित्यर्थः । ननु धान्यं यो मिमीते तस्यापि मातुर्ग्रहणं कुतो न स्यात् । तथा च तत्रापि द्वैमातुरादिकं प्राप्नोतीत्यत आह—स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष इति । मातृगतं स्त्रीत्वं शब्दे आरोप्य संख्यासंभद्रपूर्वाया इति निर्दिश्यते । अतः स्त्रीलिङ्गस्य मातृशब्दस्य जननीवाचकस्य ग्रहणमित्यर्थः । तेन धान्यमातुर्नेति । अत्र मातृशब्दस्य परिच्छेत्तृवाचिनः पुंल्लिङ्गत्वादिति भावः । सौमात्र इति । सुमातुरपत्यमित्यर्थे 'तस्यापत्यम्' इत्यण् । संख्यासंभद्रपूर्वत्वाभावाद् नायमण्, उत्त्वमपि तत्संनियोगशिष्टत्वान्नेति भावः । ननु द्वैमात्रेय इति कथम्, संख्यापूर्वकतया अण उत्त्वस्य च दुर्वारत्वादित्यत

---

व्याचष्टे—अवृद्धेभ्य इत्यादिना । आत्रेय इति । परत्वादयमृष्यणं बाधत इति भावः । द्वैमातुर इति । 'तद्धितार्थ' इत्यादिना समासः । अत्र 'द्वयोर्मात्रोरपत्यम्' इति विग्रहः, न तु द्विमात्रोरपत्यम्' इति । 'दिक्संख्ये संज्ञायाम्' इति नियमेनासंज्ञाया समासासंभवात् । धान्यमातुर्नेति । 'अभिव्यक्तपदार्थाः—'इत्यनेन जननीवाचिन एव ग्रहणे सिद्धेऽपि तस्य स्पष्टप्रतिपत्त्यर्थः स्त्रीलिङ्गनिर्देश इति भावः ।

---

[1] 'वैमात्रेयः' इति बहुत्र पाठः ।

तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः । ११२० **विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।** ( ४-१-११७ ) अपत्येऽण् । वैकर्णो वात्स्यः, वैकर्णिरन्यः । शौङ्गो भारद्वाजः, शौङ्गिरन्यः । छागल आत्रेयः, छागलिरन्यः । केचित्तु 'शुङ्गा' इत्याबन्तं पठन्ति तेषां ढक्प्रत्युदाहरणम्, शौङ्गेयः । ११२१ **पीलाया वा ।** (४-१-११८) तन्नामिकाणं बाधित्वा 'द्व्यचः' ( सू ११२४ ) इति ढकि प्राप्ते पक्षेऽण् विधीयते । पीलाया अपत्यं पैलः, पैलेयः । ११२२ **ढक्च मण्डूकात् ।** ( ४-१-११९ ) चादण् । पक्षे इञ् । माण्डूकेयः, माण्डूकः, माण्डूकिः । ११२३ **स्त्रीभ्यो ढक् ।** ( ४-१-१२० ) स्त्रीप्रत्ययान्तेभ्यो ढक्स्यात् । वैनतेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः ।

---

आह—**शुभ्रादित्वादिति** । 'शुभ्रादिभ्यश्च' इति ढकि रूपमित्यर्थः । **कन्यायाः कनीन च** । कनीनेति लुप्तप्रथमाकम् । **ढक इति** । 'स्त्रीभ्यो ढक्' इति विहितस्येत्यर्थः । **कनीनादेशश्चेति** । प्रकृतेरिति शेषः । भारते व्यासः कर्णश्च कन्यायाः पुत्रौ इति प्रसिद्धम् । ननु कन्याया अप्रादुर्भूतयौवनत्वात् पुंसंयोगाभावात् कथमपत्यसम्बन्ध इत्यत आह—**अनूढाया इति** । अलब्धविवाहाया इत्यर्थः । एतच्च भाष्ये स्पष्टम् । **विकर्ण** । वत्सादिशब्दैस्तद्वंश्या विवक्षिताः । विकर्ण, शुङ्ग, छगल एभ्योऽण् स्यात्, वत्सवंश्ये भरद्वाजवंश्ये अत्रिवंश्ये चापत्ये इत्यर्थः । एतेन वत्सादीनां मूलपुरुषत्वाद् विकर्णादीन्प्रत्यपत्यत्वासम्भव इति निरस्तम् । विकर्णादिभ्यो वात्स्यादिष्वेव ऋष्यण् इति नियमार्थं सूत्रम् । **पीलाया वा** । अपत्येऽणिति शेषः । पीला नाम काचिन्मानुषी । **तन्नामिकाणमिति** । वाग्रहणाभावे तु अनेनाणा नित्यमेव ढको बाधः स्यात् । न च महाविभाषया अणः पाक्षिकत्वात्तदभावे ढग् भवत्येवेति वाच्यम्, महाविभाषया अपवादे निषिद्धे उत्सर्गो न प्रवर्तत इति ज्ञापनात् । अन्यथा शैवः शैविरित्यादि स्यात् । **ढक् च मण्डूकात्** । मण्डूको नाम ऋषिः । **पक्ष इञिति** । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः । **स्त्रीभ्यो ढक्** । स्त्रीशब्देन टाबादयः स्त्रीप्रत्ययाश्चानुरथिका गृह्यन्ते, न त्वन्येऽपि स्त्रीवाचका, व्याख्यानादित्याह—**स्त्रीप्रत्ययान्तेभ्य इति** । विनता नाम गरुडमाता, तस्या अपत्यमिति विग्रहः । प्रत्ययग्रहणं किम् ?

---

'अभिव्यक्त—' इत्यस्यानित्यताया ज्ञापनार्थं इति त्वन्ये । **कन्यायाः** । ननु कन्या ह्यक्षतयोनिः, तस्याश्चापत्यसम्भव एव नास्तीत्याशङ्क्याह—**अनूढाया इति** । अविवाहिताया इत्यर्थः । **विकर्ण** । वात्स्यादीनामपत्यप्रत्ययान्तानां द्वन्द्वे 'यञञोश्च' 'अत्रिभृगुकुत्स—' इति सूत्राभ्यामपत्यप्रत्ययस्य लुक् । न चात्र वत्सादीनामेव द्वन्द्वोऽस्त्विति शङ्क्यम् । मूलभूतानां तेषां विकर्णादीन् प्रत्यपत्यत्वाभावादत आह व्याचष्टे—**वात्स्य इत्यादि** । 'युगपदधिकरणवचनताया बहुत्वमस्ति' इति 'शरद्वच्छुनक—' सूत्र एवोक्तम् । **पक्ष इञिति** । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः । **स्त्रीभ्यो ढक्** । बहुवचननिर्देशान्न स्वरूपस्य ग्रहणम् । नाप्यर्थस्य । ढगर्थतया शुभ्रादिषु विमातृशब्दपाठात् । किं तु स्त्र्यधिकारोक्तटाबादेर्ग्रहणम् । न तु विप्रकृष्टशक्तिकादेरित्याशयेनाह—**स्त्रीप्रत्ययान्तेभ्य इति** । तेन 'दरदोऽपत्यं दारदः' इत्यत्र ढक् न भवति ।

११२४ द्व्यचः ( ४-१-१२१) द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्। तन्नामिकाणोऽपवादः। दात्तेयः। पार्थ इत्यत्र तु 'तस्येदम्' (सू १५००) इत्यण्। ११२५ इतश्चानिञः। (४-१-१२२) इकारान्ताद् द्व्यचोऽपत्ये ढक्स्यात, न त्विञन्ताद्। दौलेयः। नैधेयः। आत्रेयः ११२६ शुभ्रादिभ्यश्च। (४-१-१२३) ढक्स्यात्। शुभ्रस्यापत्यं शौभ्रेयः। ११२७ विकर्णकुषीतकात्काश्यपे। (४-१-१२४) अपत्ये ढक्। वैकर्णेयः। कौषीतकेयः। अन्यो वैकर्णिः। कौषीतकिः। ११२८ भ्रुवो वुक्च। (४-१-१२५) चाड्ढक्। भ्रौवेयः। ११२९ प्रवाहणस्य ढे। (७-३-२८) प्रवाहणशब्दस्योत्तरपदस्या-

---

दरत् कश्चित्क्षत्रियः तस्यापत्यं स्त्री दरत्। 'द्व्यञ्मगध-' इत्यण्। 'अतश्च' इति तस्य लुक्। तस्या अपत्यं दारदः। अत्र दरच्छब्दस्य स्त्रीलिङ्गत्वेऽपि स्त्रीप्रत्ययान्तत्वाभावान्न ढक्। ननु सुमित्राया अपत्यं सौमित्रिः, सपत्न्या अपत्यं सापत्न इति कथम्, ढक्प्रसङ्गादित्यत आह— बाह्वादित्वादित्यादि। सापत्नशब्दे पुंवत्त्वं नेति प्रागेवोक्तम्। द्व्यचः। ननु 'स्त्रीभ्यो ढक्' इत्येव सिद्धे किमर्थमिदमित्यत आह—तन्नामिकेति। दात्तेय इति। दत्ता नाम काचिन्मानुषी, तस्या अपत्यमिति विग्रहः। ननु पृथाया अपत्यं पार्थ इति कथम्, तन्नामिकाणं बाधित्वा 'द्व्यचः' इति ढक्प्रसङ्गादित्यत आह—पार्थ इत्यत्रेति। शिवादित्वादपत्य एवाणित्यन्ये। इतश्चानिञः। अस्त्रीप्रत्ययान्तार्थमिदम्। दुलिः निधिश्च कश्चित्। आत्रेय इति। अत्रिः प्रसिद्धः। परत्वादयमृष्यणमपि बाधत इति भावः। शुभ्रादिभ्यश्च। ढक् स्यादिति। शेषपूरणम्। इञाद्यपवादः। शुभ्रस्यापत्यमिति। अस्त्रीत्वादप्राप्तौ ढगिति भावः। विकर्णकुषीतकात्काश्यपे। अपत्ये ढगिति। शेषपूरणम्। काश्यप एवेति नियमार्थं शुभ्रादिभ्यः पृथक् पाठः। भ्रुवो वुक् च। चाड्ढगिति। भ्रूशब्दादपत्ये ढक् स्यात् प्रकृतेर्वुगागमश्च। वुकि ककार इत्। उकार उच्चारणार्थः। कित्वादन्तावयवः। भ्रौवेय इति। भ्रूर्नाम काचित्, तस्या अपत्यमिति विग्रहः। ढकि एयादेशे प्रकृतेर्वुकि आदिवृद्धिः। वुगभावे तु ऊकारस्य वृद्धौ

---

स्त्र्यर्थग्रहणे तु स्यादेवात्र ढक्। दरच्छब्दो हि जनपदक्षत्रियवाचीति ततोऽपत्यार्थे 'द्व्यञ्मगध-'इत्यणि तस्य स्त्रियाम् 'अतश्च' इति लुकि दरच्छब्दस्य स्त्र्यर्थवाचित्वात्। 'ढक् च-' इति वर्तमाने पुनरिह ढग्ग्रहणमण्सम्बद्धस्य ढको निवृत्त्यर्थम्। यद्यपि 'चानुकृष्टं नोत्तरत्र' इति परिभाषया अणिह न प्रवर्तते तथापि तस्या अनित्यत्वज्ञापनाय ढग्ग्रहणमित्याहुः। तस्येदमिति। शिवादित्वादपत्य एवाणित्यन्ये। इतश्च। इतः किम्, दाक्षिः। अनिञः किम्, दाक्षायणिः। द्व्यचः किम्, उदवेरपत्यमौदविः। काशिकायां तु 'मरीचेर्मारीचः' इत्युदाहृतम्। तदसत्। बाह्वादित्वेनेञ्प्रवृत्तेः। न चास्य बाह्वादित्वमविवक्षितम्, 'मरीचिशब्दो बाह्वादिषु पठ्यते' इति मिदचोऽन्त्यात्परः इति सूत्रे भाष्ये स्थितत्वात्। आत्रेय इति। परत्वादयमृष्यणं बाधत इति भावः। शुभ्रादिभ्यश्च। चकारस्त्वाकृतिगणत्वद्योतनार्थ इत्याहुः। मृकण्डशब्दोऽत्र पठ्यते। मार्कण्डेयः। शुभ्र, मृकण्ड, अश्व, विमातृ, विधवा,

चामादेरचो वृद्धिः, पूर्वपदस्य तु वा ढे परे। प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयः। ११३० तत्प्रत्ययस्य च (७-३-२९) ढप्रत्ययान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा। प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः। बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः। ११३१ [1]कल्याण्यादीनामिनङ्। (४-१-१२६) एषा-

आवादशे आगम इति स्थाने। प्रवाहणस्य ढे। उत्तरपदस्येत्यधिकृतम्। 'तद्धितेष्वचामादेः' इत्यतः अचामादेरित्यनुवर्तते मृजेर्वृद्धिः इत्यतो वृद्धिरिति 'अर्धात्परिमाणस्य पूर्वस्य तु वा' इत्यतः पूर्वस्य वेति च। तदाह—प्रवाहणशब्दस्येति। प्रावाहणेय, प्रवाहणेय इति। शुभ्रादित्वाद् ढकि पूर्वपदस्य पाक्षिकी आदिवृद्धिः। उत्तरपदस्य नित्यम्। उत्तरपद आकारस्य वृद्धेः फलं तु प्रवाहणेयीभार्य इत्यत्र 'वृद्धिनिमित्तस्य च-' इति पुंवत्त्वप्रतिषेध एव। तत्प्रत्ययस्य च। पूर्वसूत्रे यदनुवृत्तं तत्सर्वमिहाप्यनुवर्तते। तच्छब्देन ढप्रत्ययः परामृश्यते। तदाह—ढप्रत्ययान्तस्येति। प्रावाहणेयिः, प्रवाहणेयिरिति। शुभ्रादिगणादिञ्। ननु पूर्वसूत्रेणैव सिद्धत्वादिदं व्यर्थमित्यत आह—बाह्येति। ढक्प्रत्ययान्ताद् बहिर्भूतो य इञ्, तन्निमित्ता 'तद्धितेष्वचामादेः' इति नित्या आदिवृद्धिः। ढाश्रयेणेति। ढप्रत्यये परे विहितेनेति यावत्। तथाविधेन वृद्धिविकल्पेन पूर्वसूत्रविहितेन बाधितुं न शक्यते, भिन्ननिमित्तकत्वादित्यर्थः। पूर्वसूत्रं हि केवलढप्रत्ययान्ते ढप्रत्ययं परनिमित्तत्वेनाश्रित्य प्रवृत्तम्, ढङ्निमित्तामादिवृद्धिं बाधत इति युक्तम्, न त्विञ्प्रत्ययनिमित्तामपि नित्यामादिवृद्धिम्। अनन्तरस्या अपि बाधनार्थमिदं सूत्रमित्यर्थः। इदं वृद्धिविधिद्वयमपि 'शुभ्रादिभ्यश्च' इत्यत्रैव वक्तुं युक्तम्। कल्याण्यादीनामिनङ्।

गाथा, प्रवाहणेत्यादि। आकृतिगणोऽयम्। तेन पाण्डवेय इत्यादि सिद्धम्। इहादन्तेषु इञ् प्राप्त, विधवाशब्दाच्छुभ्रादित्वाण्णो ढक्, चतुष्पाज्जातिवाचिषु ढञ्, गाथाशब्दाद् द्व्यचलक्षणोऽपि भवति, क्वचिदौत्सर्गिकोऽण् प्राप्त इति बाध्यते। प्रवाहणस्य ढे। उत्तरपदस्येत्यधिक्रियते। 'अर्धात्परिमाण-'इत्यतः 'पूर्वस्य तु वा' इति अनुवर्तते तदाह—उत्तरपदस्याचामादेरित्यादि। नित्यमुत्तरपदवृद्धेः फलं तु 'प्रवाहणेयीभार्यः' इत्यत्र 'वृद्धिनिमित्तस्य-' इति पुंवद्भावप्रतिषेधः। तत्प्रत्ययस्य च। 'प्रवाहणस्य' इत्यनुवर्तते, तच्छब्देन ढप्रत्ययः परामृश्यते तदाह—ढान्तस्येत्यादि। बाह्यतद्धितनिमित्तेति। ढक्प्रत्ययात् बहिर्भूतो य इञ् तन्निमित्तेत्यर्थः। कल्याण्यादीनाम्। इह परस्त्रीशब्दः पठ्यते। 'परस्य स्त्री परस्त्री' इति षष्ठीसमासः। पारस्त्रैणेयः। परभार्यायामुत्पन्न इत्यर्थः। अनुशतिकादित्वादुभयपदवृद्धिः। विदादिगणे तु 'परस्त्री परशु च' इति पठ्यते। प्रामाणिकानि शेषः। तत्र परा चासौ स्त्री चेति कर्मधारयः। परस्त्रिया अपत्यं पारशवः। ब्राह्मणाच्छूद्रायां

1 'कल्याण्यादीनामिनङ् च' इति क, ख पाठः। क्वचिदष्टाध्यायीपुस्तकेष्वपि चकारो दृश्यते, अथापि बहुषु कौमुद्यष्टाध्यायीपुस्तकेष्वदर्शनाद् व्याख्यातृभिरव्याख्यातत्वात्, पूर्वसूत्रे चकारदर्शनाच्चह्रपेक्षित।

मिनङादेशः स्यात्, ढक्च। काल्याणिनेयः, बान्धकिनेयः। ११३२ कुलटाया वा। (४-१-१२७) इनङ्मात्रं विकल्प्यते। ढक्तु नित्यः पूर्वेणैव। कौलटिनेयः, कौलटेयः। सती भिक्षुक्यत्र कुलटा। या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वा' (सू ११३७) इति पक्षे ढ्रक्। कौलटेरः। ११३३ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च। (७-३-१९) हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च। सुहृदोऽपत्यं सौहार्दः। सुभगाया अपत्यं सौभागिनेयः। सक्तुप्रधाना सिन्धवः सक्तुसिन्धवः, तेषु भवः साक्तुसैन्धवः। ११३४ चटकाया ऐरक्। (४-१-१२८) 'चटकादिति वाच्यम्'

---

इनङि ङकार इत्। काल्याणिनेय इति। कल्याण्या अपत्यमिति विग्रहः। बान्धकिनेय इति। बन्धक्या अपत्यमिति विग्रहः। अत्र गणे स्त्रीप्रत्ययान्ता एव पठ्यन्ते, तेभ्यो ढक् सिद्ध एव। इनङेव तु विधीयते। कुलटाया वा इनङ्मात्रमिति। व्याख्यानादिति भावः। पूर्वेणैवेति। 'स्त्रीभ्यो ढक्' इत्यनेनेत्यर्थः। कुलानि गृहाणि अटतीति कुलटा। शकन्ध्वादित्वात्पररूपम्। अत्रेति। 'कुलटाया वा' इति सूत्र इत्यर्थः। पक्षे ढ्रगिति। ढ्रगपि कदाचिद्भवतीत्यर्थः। कौलटेर इति। कुलटाया ढ्रकि ढकारस्य एयादेशे 'लोपो व्योः—' इति यकारलोप इति भावः। हृद्भग। हृदाद्यन्त इति। हृत्, भग, सिन्धु एतदन्तेषु समासेष्वित्यर्थः। चकारादुत्तरपदस्येत्यनुकृष्यते, तदाह—पूर्वोत्तरपदयोरिति। सौहार्द इति। अणि उभयपदादिवृद्धिः। ऋकारस्य तु आकारो रपरः। सौभागिनेय इति। कल्याण्यादित्वाद् ढकि इनङि उभयपदादिवृद्धिरिति भावः। एतत्प्रसङ्गादेव इदं सूत्रमत्रोपन्यस्तम्। 'महते सौभगाय' इत्यत्र तु उद्गात्रादित्वाद्भावे अञ्। उत्तरपदादिवृद्ध्यभावश्छान्दसः। सिन्धव इति। अश्वा इत्यर्थः। चटकाया ऐरक्। चटकाशब्दादपत्ये ऐरक्प्रत्ययः स्यादित्यर्थः। ननु स्त्रीलिङ्गनिर्देशात् पुंल्लिङ्गान्न स्यादित्यत आह—चटकादिति। सूत्रे चटकाया इत्यपनीय चटकादिति वाच्य-

---

तेनैवोढायामुत्पन्नः। सा च जात्यन्तरयोगात्परस्त्री। न च परशब्दादेशस्य 'स्थानिवद्भावात्पारशवेऽपि 'अनुशतिकादीनां च' इत्युभयपदवृद्धिः स्यादिति वाच्यम्, सत्यादेशे पूर्वोत्तरपदसंप्रमोहात्तदप्रवृत्तेः। इह गणे स्त्रीप्रत्ययान्तानां ढकः सिद्धत्वादिनङर्थं ग्रहणम्। अन्येषां तूभयार्थम्। कल्याणी, सुभगा, दुर्भगा, बन्धकी, परस्त्रीत्यादि। कुलटाया वा। शकन्ध्वादित्वात्पररूपमत एव निपातनाद्वा। सती भिक्षुक्यत्रेति। अत्र इनङ्विधौ। तथा चोक्तममरेण—'अथ बान्धकिनेयः स्याद्बन्धुलश्चासतीसुतः। कौलटेरः कौलटेयो भिक्षुकी तु सती यदि। तदा कौलटिनेयः स्यात्कौलटेयोऽपि चात्मजः' इति। केचित्तु क्षुद्राया अपि इनङा तृतीयं रूपं कौलटिनेय इतीच्छन्ति। पक्षे ढगिति। ढगपि पक्षे भवत्येवेति भावः। हृद्भग। 'पूर्वपदस्य च' इति चकारेण 'उत्तरपदस्य' इत्यनुकृष्यते तदाह—पूर्वोत्तरपदयोरिति। 'महते सौभगाय' इत्यत्र तूद्गात्रादित्वादञ् छान्दसत्वान्नोत्तरपदवृद्धिरित्याशयः। चटकाया ऐरक्। 'चटकायाः' इति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादित्याशङ्क्याह—चटकस्येति

पितृस्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः, मातृष्वसेयः । ११४१ चतुष्पाद्भ्यो ढञ् । ( ४-१-१३५ ) ११४२ ढे लोपोऽकद्र्वाः । ( ६-४-१४७ ) कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्याद् ढे परे । कामण्डलेयः । कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे । ११४३ गृष्ट्यादिभ्यश्च । (४-१-१३६) एभ्यो ढञ् स्यात् । अण्ढकोरपवादः । गार्ष्टेयः । मित्रयोरपत्यम्, ऋष्यणि प्राप्ते ढञ् । ११४४ केकयमित्रयुप्रलयानां यादेरियः । (७-३-२) एषां यकारादेरियादेशः स्याद् ञिति णिति किति च तद्धिते परे । इति इयादेशे प्राप्ते । ११४५ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । ( ६—४—१७४ ) एतानि

---

ढकि लोपश्चानुकृष्यते । तदाह—पितृष्वसुर्यदुक्तमिति । चतुष्पाद्भ्यो ढञ् । चतुष्पादः पशवः, तद्विशेषवाचिभ्यः अपत्येढञित्यर्थः । ढेलोपोऽकद्र्वा. । भस्येत्यधिकृतम् 'ओर्गुणः' इत्यत ओरिति षष्ठ्यन्तेनानुवृत्तेन विशेष्यते । तदन्तविधिः । कद्रूभिन्नस्येति । 'अलोऽन्त्यस्य' इत्यन्त्यलोपः । ओर्गुणापवादः । कामण्डलेय इति । कमण्डलोरपत्यमिति विग्रहः । ढकि एयादेशे आदिवृद्धौ उकारलोपः नन्नु कमण्डलुशब्दवाच्यस्य जलपात्रस्याचेतनस्य कथमपत्ययोगः, तदाह—कमण्डलुशब्दश्चतुष्पाज्जातिविशेष इति । अत एव 'कमण्डलुपदे आदधीत' इति बह्वृचब्राह्मणं संगच्छत इति भावः । गृष्ट्यादिभ्यश्च । अण्ढकोरिति । गृष्टि, हलि, वलि, कुठि, अगस्ति, मित्रयु—एते गृष्ट्यादयः । अत्र अन्त्योः ऋषित्वादण् प्राप्तः अन्येभ्यस्तु 'इतश्चानिञः' इति ढक् प्राप्त इति विवेकः । सकृत्प्रसूता मानुष्यादिरपि गृष्टिः, नतु गौरेव । ततश्च 'चतुष्पाद्भ्यः—' इत्यनेन न प्राप्तिः । केकयमित्रयु । 'तद्धितेष्वचामादेः' इत्यतस्तद्धितग्रहणमनुवर्तते । 'अचोञ्णिति' 'क्ङिति च' इत्यतोञ्णितीति, कितीति च, तदाह—एषामिति । आदेशे यकारादकार उच्चारणार्थः । केकयस्यापत्यं स्त्री कैकेयी । 'जनपदशब्दात्—' इत्यञ् । मैत्रेयिकया श्लाघते, मित्रयोर्भाव इत्यर्थे 'गोत्रचरणात्—' इति वुञ् । प्रलयादागतं प्रालेयम्, अण् अत्र सर्वत्र यादेरियादेश इत्युदाहरणानि । प्राप्त इति । मित्रयोरपत्ये ढञि एयादेशे मित्रयु एय इति स्थिते ओर्गुणं बाधित्वा यु इत्यस्य इयादेशे सति आद्गुणे मैत्रेयेय इति प्राप्ते सतीत्यर्थः । दाण्डिनायन । एतानि निपा-

---

रिति । क्षुद्राभ्यः । अर्थगतं स्त्रीत्वं शब्दे आरोप्य स्त्रीलिङ्गनिर्देशः । गृष्ट्यादिभ्यश्च । गृष्टि, हृष्टि, हलि, वलि, कुद्रि, अगस्ति, मित्रयु । अण्ढकोरपवाद इति । इहान्त्ययोर्द्वयोर्ऋषित्वादङ् प्राप्त., अन्येभ्यस्तु 'इतश्चानिञः' इति विवेकः । गार्ष्टेय इति । सकृत्प्रसूता सर्वापि गृष्टिः, न तु गौरेव । अतोऽत्र न 'चतुष्पाद्भ्यः—' इत्यनेन ढञ्सिद्धिः । केकय । केकयस्यापत्यं स्त्री कैकेयी । 'जनपदशब्दात्क्षत्रियादञ्' । मैत्रेयिकया श्लाघ्यते । मित्रयुणा भावेनेत्यर्थः । 'गोत्रचरणाच्छ्लाघात्याकार—' इति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते, लोके च 'ऋषिशब्दो गोत्रमिति प्रसिद्धम्' इति काशिका । एतच्च यदा मित्रयुशब्दोऽभेदोपचारात्तदपत्यसंताने

स्यन्त इति । दण्डिनो हस्तिनश्चापत्यं दाण्डिनायन, हास्तिनायनः। नडादित्वात्फक् । निपातनाट्टिलोपो न । अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा, तमधीते आथर्वणिकः । वसन्तादित्वात् ठक् । निपातनान्न टिलोप । जिह्माशिनोऽपत्यं जैह्माशिनेय । शुभ्रादित्वाड्ढक्, निपातनान्न टिलोप । वाशिनोऽपत्य वाशिनायनि । 'उदीचा वृद्धात्—' इति फिञ् । निपातनान्न टिलोप । भ्रूणहन् धीवन् एतयोर्भावे ष्यञ्, नकारस्य तकारश्च निपात्यते । नच 'हनस्तोऽचिण्णलो' इत्यनेनैव तकारः सिद्ध इति शङ्क्यम्, 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति परिभाषाया 'हनस्त –' इति तत्वस्य धातुविहितप्रत्यये परे एव प्रवृत्तेः । इदमेव तकारनिपातनमस्या परिभाषाया ज्ञापकमिति 'मृजेर्वृद्धि' इत्यत्र भाष्ये स्पष्टम् । तेन वार्त्रघ्नमित्यत्र तत्वं न । सरय्वा भवं सारवम् उदकम् । अणि यु इत्यस्य व इत्यादेशो निपात्यते । इक्ष्वाकोरपत्यमैक्ष्वाक । जनपदशब्दात्क्षत्रियादञ् । उकारलोपो निपात्यते । बहुत्वे तु तद्राजत्वाल्लुक् । इक्ष्वाकच. । इक्ष्वाकुषु जनपदेषु भवोऽप्यैक्ष्वाक । कोपधादण् । उकारलोपश्च । सूत्रे ऐक्ष्वाकेत्यत्र अञणन्तयोर्ग्रहणम् । बहुत्वे तद्राजत्वादञ्ञ लुक् अणस्तु नेति विशेष । हिरण्यस्य विकारो हिरण्मय. । मयटि मकाराद्यकाराकारयोर्लोपः । इति युलोप इति । मित्रयु एय इति स्थिते यु इत्यस्य लोपो निपातनादिति भावः । मैत्रेयीति 'टिड्ढाणञ्–' इति ङीप् । यस्कादिभ्यो गोत्रे । नेदं सूत्रमपत्याधिकारस्थम्, किंतु द्वैतीयीकम् । अतो गोत्रशब्देन प्रवराध्यायप्रसिद्धमेव गोत्रमिह विवक्षितम्, 'अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते' इति 'पुनिल्लुक्' 'स्त्रीपुंसाभ्याम्—'इत्यादिसूत्रभाष्ये सिद्धान्तितत्वात् । 'ण्यक्षत्रियार्ष—' इत्यतो लुगित्यनुवर्तते । 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति सूत्रं तद्राजवर्गमनुवर्तते ।

---

वर्तते तदा बोध्यम्, अन्यथा 'मित्रयूनाम्' इति बहुवचनान्तेन विग्रहो न स्यात् । प्रलयादागतं प्रालेयम् । इयादेशो वृद्धि न बाधते 'अचामादेरचोवृद्धि' 'यादेरियादेशः' इति भिन्नविषयत्वात्, अङ्ग' तूभयोर्विशेषणं न तु कार्यीति हरदत्तः । आदिवृद्धेरयोदमेव सूत्रं विधायकमस्तु । किमनेन विषयभेदविचारेणेत्यन्ये । दाण्डिनायन । निपात्यन्त इति । दण्डिन्, हस्तिन्, आभ्या नडादित्वात्फक्, निपातनाट्टिलोपाभाव. । वसन्तादिषु 'अथर्वन्' इति पठ्यते । अथर्वणा प्रोक्ता ग्रन्थ उपचारादथर्वा, तमधीते आथर्वणिकः । शुभ्रादिषु 'जिह्माशिन्' इति पठ्यते तस्यापत्यं जैह्माशिनेयः । वाशिनोऽपत्यं वाशिनायनिः । 'उदीचा वृद्धात्–' इति फिञ् । भ्रूणहन्, धीवन्, अनयोः ष्यञि तकारोऽन्तादेशो निपात्यते । भ्रूणघ्नो भावो भ्रौणहत्यम् । धैवत्यम् । 'हनस्तोऽचिण्णलो.' इत्यनेनैव हन्तेस्तत्वे सिद्धे तकारनिपातनं ज्ञापयति 'धातो स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति । तेन वार्त्रघ्नमित्यत्र तत्वं न । नन्वेवं 'भ्रूणहभ्याम्' इत्यादौ 'अनुदात्तस्य च–' इत्यम् दुर्वारं स्यात् । अस्मिन्पक्षे धातो स्वरूपग्रहणाभावात् । अत्राहु—'मृजेर्वृद्धि.' इति सूत्रस्थभाष्यपर्यालोचनया 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयम् । तेन न कोऽपि दोष इति । सरयू इत्यस्याणि परे व्यादेशो

किम्—दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः। १२६९ तदधीते तद्वेद। (४—२—५९) व्याकरणमधीते वेद वा वैयाकरणः। १२७० क्रतुक्थादिसूत्रान्ताट्ठक्। (४—२—६०) क्रतुविशेषवाचिनामेवेह ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि। आग्निष्टोमिकः।

---

तस्मिन्नित्यर्थः। उत्तरपद इति। 'अलुगुत्तरपदे' इति तदधिकारादिति भावः। श्येनपात इति। पतनं पातः। भावे घञ्। श्यैनंपातेति। श्येनपातशब्दाद् घञन्ताद् ञः। यद्यपि पातशब्द एव घञन्तः तथापि कृद्ग्रहणपरिभाषया श्येनपातशब्दस्यापि ग्रहणं बोध्यम्। श्येनस्य पात इति कृद्योगषष्ठ्या समासः। तथा च श्येनपातशब्दस्यादिवृद्धिः। तैलंपाता स्वधेति। स्वधाशब्दः स्त्रीलिङ्गः पित्र्यक्रियायां वर्तते, 'नमः स्वधायै' इत्यादिदर्शनात्। स्वधेत्यनेन क्रीडायामिति नानुवर्तत इति सूचितम्, तदस्यामिति प्रकृते पुनरस्यामिति ग्रहणात्। तदधीते। तदधीते इत्यर्थे तद्वेत्तीत्यर्थे च द्वितीयान्तादणादयः स्युरित्यर्थः। गुरुमुखादक्षरानुपूर्वीग्रहणमध्ययनम्। शब्दार्थज्ञानं वेदनम्। एतेन अध्ययनविधिरर्थज्ञानपर्यन्त इति कतिपयमीमांसकोक्तिः परास्ता, पृथग्ग्रहणवैयर्थ्यात्। यथाचैतत्तथा अध्वरमीमांसा कुतूहलवृत्तौ प्रपञ्चितमस्माभिः। वैयाकरण इति। अणि 'न य्वाभ्याम्—' इत्यैजागमः। क्रतूक्थादि 'तदधीते तद्वेद' इत्यर्थयोः क्रतु, उक्थादि, सूत्रान्त एभ्यः ठक् स्यादित्यर्थः। क्रतुविशेषवाचिनामेवेति। न तु क्रतुशब्दस्यैवेत्यर्थः। अन्यथा उक्थादिगण एव क्रतुशब्दमपि पठेदिति भावः। ननु क्रतुविशेषाणां कथमध्ययनम्। अक्षरग्रहणात्मकत्वाभावादित्यत आह—तेभ्य इति। अग्निष्टोमादिशब्दाः क्रतुविशेषेषु मुख्याः तत्प्रतिपादकग्रन्थेषु तु गौणाः। तत्र क्रतुविशेषात्मकमुख्यार्थकेभ्यः अग्निष्टोमादिशब्देभ्यो वेदितरि प्रत्ययाः। अग्निष्टोमादिक्रतुप्रतिपादकग्रन्थेषु लक्षणया विद्यमानेभ्यस्तु तेभ्यः अध्येतरीत्यर्थः। आग्निष्टोमिक इति। अग्निष्टोमं क्रतुं वेत्ति तत्प्रतिपादकग्रन्थमधीत इति वार्थः। उक्थशब्दः सामसु मुख्यः। सामलक्षणग्रन्थे प्रातिशाख्ये तु गौणः। तत्र गौणार्थका-

---

कात्सप्तम्यन्तार्थेण् स्यात्। स चेत्सप्तम्यन्यार्थः क्रीडा भवति। प्रहरणं किम्, माला भूषणमस्याम्। क्रीडायां किम्, खड्गः प्रहरणमस्यां सेनायाम्। घञः। कृद्ग्रहणादिति। तेन 'श्यैनंपाता' इत्यत्र 'ञ्णिति' इत्यङ्गस्य विधीयमाना वृद्धिः सिद्धा। श्येनपातस्यापि घञन्तत्वादिति भावः। घञः किम्, श्येनपतनमस्यां वर्तते। क्रिया किम्, प्रकारोऽस्यां वर्तते। 'तदस्याम्' इति प्रकृते पुनः 'सास्याम्' इत्युक्तिः 'क्रीडायाम्' इत्यस्य निवृत्तिर्यथा स्यादिति। अतएवाह—दण्डपातोऽस्यां तिथावति। तदधीते। द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात्। द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थम्। तेनोत्तरत्र क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्ययं प्राप्नुवन्ति। अन्यथा तेषामध्ययनासम्भवेन वेदितर्येव प्रत्ययः स्यादिति भावः। क्रतूक्थादि। क्रतुविशेषेति। स्वरूपस्य तु न ग्रहणम्। तथात्वे सत्युक्थादिष्वेव क्रतुशब्दः पठ्येत, नापि क्रतुपर्या-

कृता आख्यायिका वासवदत्ता । 'अधिकृत्य कृते ग्रन्थे' ( सू १४६७ ) इत्यर्थे 'वृद्धाच्छ.' ( सू १३३७ )। तस्य 'लुवाख्यायिकाभ्यो बहुलम्' इति लुप् । ततोऽनन ठक् । वासवदत्तिकः । ऐतिहासिकः पौराणिकः 'सर्वादेः सादेश्च लुग्वक्तव्यः' ( वा २७४८ ) सर्ववेदानधीते सर्ववेद. । सर्वतन्त्रः । सवार्तिकः । 'द्विगोर्लुक्'—( सू १०८० ) इति लुक् । द्वितन्त्रः । 'इकन्पदोत्तरपदाच्छतषष्टे. 'पिकन्पथ.' ( वा २७४९–२७५० ) पूर्वपदिकः । उत्तरपदिकः । शतपथिकः, शतपथिकी । षष्टिपथिकः, षष्टिपथिकी । १२७१ क्रमादिभ्यो वुन् । ( ४–२–६१ ) क्रमकः । क्रम पद शिक्षा मीमासा क्रमादिः । १२७२ अनुब्राह्मणादिनिः ।

---

'सर्गश्च प्रतिसर्गश्च वंशो मन्वतराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ।।'

तत्र आख्यानादुदाहरति । **यवक्रीतमिति** । आख्यायिकाया उदाहरति—**वासवदत्तामिति** । **लुग्वक्तव्ये इति** । उक्तप्रत्ययस्येति शेषः । **सर्ववेद इति** । अणो लुकि आदिवृद्ध्यभावः । **सर्वतन्त्र इति** । सर्वतन्त्राण्यधीते वेद वेत्यर्थ. । **सवार्तिक इति** । वार्तिकेन सह सवार्तिकम् । तेन बहुव्रीहिः । 'वोपसर्जनस्य' इति सभावः । सवार्तिकं सूत्रमधीत इत्यर्थः । **द्विगोरिति** । द्वे तन्त्रे अधीते वेत्ति वेत्यर्थे तद्धितार्थे द्विगुनिमित्तत्वादणो लुकि आदिवृद्ध्यभावे द्वितन्त्र इति रूपमित्यर्थः । **इकन् पदोत्तरपदादिति** । पदशब्द उत्तरपदं यस्य स पदोत्तरपदः, तस्मादुक्तेऽर्थे इकन्प्रत्ययो वक्तव्यः । **शतषष्टेः पिकन्पथ इति** । शतशब्दात् षष्टिशब्दाच्च परो यः पथिन्शब्दः तस्माद् उक्तेऽर्थे पिकन्प्रत्ययो वक्तव्य इत्यर्थ. । **पूर्वपदिक इति** । पूर्वपदमधीते वेत्ति वेत्यर्थः । एवमुत्तरपदिकः । **शतपथिक इति** । शतपथं नाम वाजसनेयिब्राह्मणम् । तदधीते वेत्ति वेत्यर्थः । **शतपथिकीति** । [2] टित्त्वाद् ङीबिति भावः । एवं षष्टिपथिकः षष्टिपथिकीति । **क्रमादिभ्यो वुन्** । तदधीते तद्वेद इत्यर्थे इति शेष. । **क्रमक इति** । क्रममधीते वेत्ति वेत्यर्थः । क्रमादिगणं पठति—**क्रमेत्यादि** ।

---

अनभिधानादिति भावः । **त्रिविद्येति** । 'तिस्रो विद्या अधीते' इति विग्रहे तु तद्धितार्थे द्विगौ 'त्रिविद्य.' इत्येव स्याद् 'द्विगोर्लुगनपत्ये' इति लुक्प्रवृत्तेरिति भावः । **आख्यायिकेति** । गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः । **सर्वादेरिति** । 'सादेः' इत्येव सिद्धे सर्वादिग्रहणमर्थवत्परिभाषाज्ञापनार्थम् । **सवार्त्तिक इति** । वार्तिकान्तमधीत इत्यर्थः । अन्तवचने अव्ययीभावः । 'अव्ययीभावे चाकाले' इति सहस्य सभावः । इकन्निति । पदशब्द उत्तरपदं यस्य तस्मादिकन् । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात्तु पिकन् वाच्य इत्यर्थः । **शतपथिक इति** । वृत्तिकृता तु वार्तिके 'बहुलम्' इति पूरयित्वा 'शातपथः' इत्यणन्तमप्युदाहृतम् । तत्तु भाष्ये न दृष्टम् । पित्त्वफलं दर्शयति—**शतपथिकीति** । **अणूबाधनार्थमिति** । भाष्ये ।

---

१ 'टिकन् पथः' इति क. ख । अयमेव पाठो वालमनोरमासंमतः प्रतीयते, परं कौमुदीपुस्तकानामसंवादबाहुल्यादिह पिकन् निवेशितः । २ 'पिकन्' इति पाठानुरोधेन 'पित्वात्' इति युक्तं स्यात् ।

( ४-२-६२ ) 'तदधीते तद्वेद' ( सू १२६९ ) इत्यर्थे । ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणम् तदधीतेऽनुब्राह्मणी । मत्वर्थीयेनैव सिद्धेऽण्बाधनार्थमिदम् । १२७३ वसन्तादिभ्यष्ठक् । (४-२-६३) वासन्तिकः । अथर्वाणमधीते आथर्वणिकः । 'दाण्डिनायन–' (सू ११४५) इति सूत्रे निपातनाट्टिलोपो न । १२७४ प्रोक्ताल्लुक् । (४-२-६४) प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृ प्रत्ययस्य लुक्स्यात् । पणनं पणः । 'घञर्थे कविधानम्' इति कः, सोऽस्यास्तीति पणी । तस्य गोत्रापत्यं पाणिनः । १२७५ गाथिविदथिकेशिगणिपणिनश्च । ( ६-४-१६५ ) एतेऽणि प्रकृत्या स्युः । इति टिलोपो न । ततो यून्यपत्ये इञ् । पाणिनिः । १२७६ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ( २-४-५८ )

---

क्रमादिरिति । अयं क्रमादिगण इत्यर्थः । पदकः शिक्षकः मीमांसकः इत्युदाहरणानि । अनुब्राह्मणादिनिः । शेषपूरणेन सूत्रं व्याचष्टे—तदधीते तद्वेदेत्यर्थे इति । इनिप्रत्यये नकारादिकार उच्चारणार्थः । तथा च नकारस्योपदेशेऽन्त्यत्वाभावान्न संज्ञा । ननु 'अत इनिठनौ' इति मत्वर्थे इनिनैव सिद्धत्वादिदं व्यर्थमित्यत आह—अण्बाधनार्थमिति । भाष्ये तु प्रत्याख्यानमेवेदम् । वसन्तादिभ्यष्ठक् । 'तदधीते तद्वेद' इत्येव । वासन्तिक इति । वसन्तवर्णनपरग्रन्थो वसन्तः । तदधीते वेत्ति वेत्यर्थः । अथर्वाणमिति । अथर्वणा प्रोक्तो वेदो लक्षणया अथर्वा, तमित्यर्थः । वस्तुतस्तु प्रोक्तप्रत्ययस्य 'ऋषिभ्यो लुग्वक्तव्य' इति वचनाल्लुक् । आथर्वणिक इत्यत्र 'नस्तद्धिते' इति टिलोपमाशङ्क्याह—दाण्डिनायनेति । बाल्मनयोगपूर्वकत्वात्तु नाल्लोपः । अथ पाणिनिशब्दं व्युत्पादयितुमुपक्रमते—प्रोक्ताल्लुक् । प्रोक्तशब्देन प्रोक्तार्थप्रत्ययो विवक्षितः । अध्येतृवेदितृप्रत्ययश्चानि प्रकृतत्वाल्लभ्यते, तदाह—प्रोक्तार्थेति । पणनं पण इति । स्तुतिरित्यर्थः । ननु 'हलश्च' इति घञि उपधावृद्धिः स्यादित्यत आह—घञर्थे इति । पणीति । 'अत इनिठनौ' इति मत्वर्थे इनिः । तस्येति । पणिनो गोत्रापत्ये तस्यापत्यमित्यणि पाणिन इति रूपमित्यर्थः । अत्र अणः अनपत्यत्वात्तस्मिन् परे 'इनण्यनपत्ये' इति प्रकृतिभावाभावाट्टिलोपे प्राप्ते । गाथिविदथि । 'इनण्यनपत्ये' इत्यतः 'अणि' इत्यनुवर्तते । 'प्रकृत्यैकाच्' इत्यतः 'प्रकृत्या' इति च । तदाह—एतेऽणि प्रकृत्या स्युरिति । गाथिन् विदथिन्, केशिन् गणिन् पणिन् एते इत्यर्थः । अपत्येऽप्यणि प्रकृतिभावार्थमिदम् । ततो यून्यपत्य इति । मूलप्रकृतिः पणी ।

---

तु प्रत्याख्यातमेवेदं सूत्रं तद्वीया स्वणिष्यत इति अनभिधानान्निनि वा बाध्यम् । वसन्ता । उक्थादिष्वेव वसन्तादीन् पठित्वा, वसन्तादिषु वा उक्थादीन् पठित्वा, अयतरच्छक्यमवक्तुम् । अथर्वाणमिति । अथर्वणा प्रोक्तं उच्चारादथर्वा । यद्वा तेन प्रोक्तम् इत्यधिकारे 'ऋषिभ्यो लुग्वक्तव्य' वसिष्ठो विश्वामित्रोऽनुवाकः इत्युदाहृत्य 'अथर्वणो वा' 'अथर्वा' 'आथर्वण' इति भाष्योक्तं साधु । गाथिविदथि । 'इनण्यनपत्ये' इति सिद्धे अपत्येऽप्यणि प्रकृतिभावार्थमयमारम्भः ।

ण्यप्रत्ययान्तात्क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्ताद् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक्स्यात्। कौरव्यः पिता, कौरव्यः पुत्रः। श्वाफल्कः पिता, श्वाफल्कः पुत्रः। वासिष्ठः पिता, वासिष्ठः पुत्रः। तैकायनिः पिता, तैकायनिः पुत्रः। 'एभ्यः' किम्—शिवाद्यण्। कौहडः पिता। तत इञ्। कौहडिः पुत्रः। 'यूनि' किम्—वामरथ्यस्य च्छात्रा वामरथाः, इत्यणो लुक्तु न भवति, आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात्। पाणिनिना प्रोक्तं पाणिनीयम्।

तदपेक्षया चतुर्थेऽपत्ये यूनि विवक्षिते पाणिनशब्दाद् गोत्राणन्ताद् अत इञि पाणिनिरिति रूपमित्यर्थः। पाणिनशब्दस्य अनन्तरापत्यप्रत्ययान्तत्वे तु ततोऽनन्तरापत्ये मूलप्रकृतिपण्यपेक्षया तृतीये गोत्रापत्ये इञ् न संभवति, 'एको गोत्रे' इति नियमात्। नापि मूलप्रकृत्यपेक्षया चतुर्थापत्ये यूनि पाणिनशब्दादनन्तरापत्यप्रत्ययान्तादिञ् संभवति, 'गोत्राद्यून्यस्त्रियाम्' इति यून्यपत्ये गोत्रप्रत्ययान्तादेवापत्यप्रत्ययनियमात्। अतो गोत्राणप्रत्ययान्तात् पाणिनशब्दाद्यूनि इञ्प्रत्यय इत्युक्तमिति बोध्यम्। अत्र इञो लुकमाशङ्कितुमाह—**ण्यक्षत्रियार्ष**। ण्यादयः सर्वे गोत्रप्रत्यया एव गृह्यन्ते, 'गोत्राद्यूनि' इत्युक्तेः तदाह—**गोत्रप्रत्ययान्तादित्यादि**। ण्यप्रत्ययस्योदाहरति—**कौरव्य इति**। कुरोः गोत्रापत्यं कौरव्यः। कुर्वादिभ्यो ण्यः। कौरव्यस्यापत्यं युवेत्यर्थे अत इञ्। तस्यानेन लुक्। क्षत्रियप्रत्ययस्योदाहरति—**श्वाफल्क इति**। श्वफल्कस्य गोत्रापत्यं श्वाफल्कः। 'ऋष्यन्धक—' इत्यण्। श्वाफल्कस्यापत्यं युवेत्यर्थे अत इञ्। तस्यानेन लुक्। आर्षप्रत्ययस्योदाहरति—**वासिष्ठ इति**। वसिष्ठस्य गोत्रापत्यं वासिष्ठः। ऋष्यण्। वासिष्ठस्यापत्यं युवेत्यर्थे इञ्। तस्यानेन लुक्। ञित उदाहरति—**तैकायनिरिति**। तिकस्य गोत्रापत्यं तैकायनिः। तिकादिभ्यः फिञ्। तैकायनेरपत्यं युवेत्यर्थे तस्यापत्यमित्यण्। तस्यानेन लुक्। **वामरथ्यस्येति**। वामरथस्य गोत्रापत्यं वामरथ्यः। कुर्वादिभ्यो ण्यः। वामरथ्यस्य छात्रा इत्यर्थे 'कण्वादिभ्यो गोत्रे' इति छापवादः अण्, तस्यानेन लुङ् न भवति तस्य युवार्थकत्वाभावादिति भावः। **इत्यणो लुक्तु न भवतीति**। 'ण्यक्षत्रिय—' इति सूत्रेण पाणिनिरित्यत्र इञो लुङ न भवतीत्यर्थः। कुत इत्यत आह—**आर्षग्रहणेनेति**। पाणिनिशब्दे पणिन्शब्दादणप्रत्ययस्य औत्सर्गिकस्य वस्तुगत्या ऋषिवाचित्वेऽपि ऋषौ प्रतिपदोक्तत्वाभावान्न ततः परस्य इञो लुगिति भावः। न च पणिन्शब्दाद्गोत्रापत्ये 'ऋष्यन्धक—' इत्यणेव कुतो न स्यादिति वाच्यम्, यत्र औत्सर्गिकस्य अण

---

गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः। **ण्यक्षत्रियार्ष**। **कौरव्य इति**। 'कुर्वादिभ्यो ण्यः' तत इञो लुक्। कौरव्यः पुत्रः। ननु तिकादिषु कौरव्यशब्दः पठ्यते, तथा च कौरव्यायणिरिति फिञा भाव्यम्, न त्विञेति चेत्। सत्यम्, 'कुरुनादिभ्यो ण्यः' इति क्षत्रियगोत्रे विहितो यो ण्यस्तदन्तं तत्र पठ्यते। प्रकृते तु ब्राह्मणगोत्रप्रत्ययान्तमित्यवधेयम्। **श्वाफल्क इति**। 'ऋष्यन्धक—' इत्यण्। तत इञो लुक्, श्वाफल्कः पुत्रः। **वासिष्ठ इति**। ऋष्यण तत इञो

'वृद्धाच्छ' ( सू १३३७ )। 'इञश्च' ( सू १३३३ ) इत्यण् तु न। गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात्। ततोऽध्येतृवदित्रणो लुक्। स्वरे स्त्रियां च विशेषः। पाणिनीयः। पाणिनीया। १२७७ सूत्राच्च कोपधात्। ( ४—२—६५ ) सूत्रवाचिनः ककारोपधादध्येतृवदितृप्रत्ययस्य लुक् स्यात्। अप्रोक्तार्थ आरम्भः।

---

इञादिना बाधे प्रसक्ते, तत्रैव तद्बाधनार्थम् ऋष्यण प्रवृत्ते। वस्तुतस्तु 'वान्यस्मिन्सपिण्डे–' इति सूत्रभाष्ये अत्रिशब्दाद् 'इतश्चानिञः' इति ढकि आत्रेयशब्दादिञो 'ण्यक्षत्रियार्ष–' इति लुगित्युक्तत्वादिदमुपेक्ष्यम्। 'ण्यक्षत्रिय–' इत्यत्र तु ऋषिवाचकस्य रूढस्यैव ग्रहणम्। पणिन्शब्दः, तदपत्ये पाणिनिशब्दश्च न ऋषिवाचकौ। अत औत्सर्गिकाणन्त एव पाणिनशब्द इति शब्देन्दुशेखरे प्रपञ्चितम्—पाणिनिनेति। पाणिनिना प्रोक्तमित्यर्थे 'तेन प्रोक्तम्' इत्यणं बाधित्वा 'वृद्धाच्छः' इति छप्रत्यये ईयादेशे पाणिनीयशब्द इत्यर्थः। ननु पाणिनिशब्दात्तद्धिते विवक्षिते 'यूनि लुक्' इति इञो लुकि सत्यपि प्रत्ययलक्षणेन इञन्तत्वमाश्रित्य छापवादः अण् स्यादित्यत आह—इञश्चेत्यण् तु नेति। पाणिनिशब्दे इञ् युवापत्यार्थक एव, न तु गोत्रार्थकः, युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः। यद्यपि अपत्याधिकारादन्यत्र न पारिभाषिकं गोत्रमित्युक्तम्। तथाप्यत्र पारिभाषिकमेव गोत्रं गृह्यत इति उपरिष्टात् 'इञश्च' इति सूत्रे वक्ष्यते। तत इति। पाणिनीयशब्दादित्यर्थः। पाणिनीयमधीते वेत्ति वेत्यर्थे पाणिनीयशब्दादणः 'प्रोक्ताल्लुक्' इति तस्य लुगिति भावः। ननु असत्यपि अध्येतृवेदितृप्रत्ययस्याणो लुकि पाणिनीयशब्दः सिध्यत्येवेत्यत आह—स्वरे स्त्रियां च विशेष इति। अध्येतृवेदितृप्रत्ययस्याणालुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप् स्यात्। लुकि तु सति छादेशस्य ईयादेशस्य ईकारः प्रत्ययस्वरेणोदात्तः टाप् च सिध्यति। तदाह—पाणिनीयः पाणिनीयेति। सूत्राच्च कोपधात्। ककारोपधादित्यनन्तरं परस्येति शेषः। ननु 'प्रोक्ताल्लुक्' इत्येव सिद्धे किमर्थमिदमित्यत आह—अप्रोक्तार्थ आरम्भ इति।

---

लुक्। वासिष्ठः पुत्रः। तैकायनिरिति। 'तिकादिभ्यः फिञ्' ततोऽणो लुक्। तैकायनिः पुत्रः। वामरथा इति। कुर्वादित्वाद् ण्यः। ततो वृद्धाच्छं बाधित्वा 'कण्वादिभ्यो गोत्रे' इति शैषिकोऽण्। इलीति। 'ण्यक्षत्रियार्ष–' इत्युदाहृतसूत्रेणेत्यर्थः। ऋष्यण एवेति। पाणिनशब्दे तु औत्सर्गिक एवाणिति भावः। नन्विदं 'वान्यस्मिन् सपिण्डे–' इति सूत्रस्थभाष्येण यदाभ्यां विरुध्यते। अत्रेर्युवापत्यानि पुमांसोऽत्रयः, 'इतश्चानिञः' इति ढक्, तदन्ताद्यूनि 'अत इञ्' तस्य 'ण्यक्षत्रिय–' इति लुक् 'अत्रिभृगुकुत्स–' इति ढकोऽपि लुक् इत्युक्तत्वात्। 'ऋष्यन्ध–' इत्यण एव ग्रहणे तु ढकोऽग्रहणात्ततः परस्येञो लुङ् न स्यादित्याहुः। वस्तुतस्तु 'दाक्षीपुत्रस्य पाणिनेः' इति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम्। इञश्चेतीति। 'यूनि लुक्' इति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भावः। गोत्रे य इति। 'गोत्रमिह शास्त्रीयम्, न तु लौकिकमिति, तत्र वक्ष्यते' इति भावः। स्वर इति। लुगभावे

अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम् । तदधीयते विदन्ति वा अष्टकाः । 'संख्याप्रकृतिकादिति वाच्यम्' । नेह—माहावार्तिकः । कालापकः ।

१२७८ छन्दोब्राह्मणानि च तद्विषयाणि । ( ४-२-६६ ) छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः ।

---

अप्रोक्तार्थादपि प्रत्ययात्परस्य लुगर्थमित्यर्थः । अष्टकमिति । तदस्य परिमाणमित्यधिकारे 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इति 'संख्याया अतिशदन्तायाः कन्' इति च सूत्ररूपेऽर्थे कन् । अष्टका इति । अष्टकशब्दादध्येतृवेदितृप्रत्ययस्य अनेन लुक्, कोपधात्सूत्रवाचिनः परत्वादिति भावः । संख्याप्रकृतिकादिति । 'सूत्राच्च कोपधात्' इति लुक् संख्याप्रकृतिकप्रत्ययान्तादेव परस्य भवतीत्यर्थः । माहावार्तिक इति । माहावार्तिकं नाम सूत्रम्, तदधीते वेत्ति वा माहावार्तिकः । अत्र अणो न लुक् । छन्दोब्राह्मणानि । छन्दांसि मन्त्राः, ब्राह्मणानि विधिवाक्यानि । तेषां द्वन्द्वः, वेद इति यावत्, मन्त्रब्राह्मणयोर्वेदनामधेयमिति स्मरणात् । 'प्रोक्ताल्लुक्' इत्यतः प्रोक्तादित्यनुवर्तते । प्रथमाबहुवचनेन विपरिणम्यते । प्रोक्तप्रत्ययान्तानीति लभ्यते । तदाह—छन्दांसीत्यादिना । तद्विषयाणीत्यत्र तच्छब्देन अध्येतृवेदितृप्रत्यया विवक्षिताः । ते विषयः अविनाभावो येषां तानि तद्विषयाणि, 'षिञ् बन्धने' विशिष्य सयो बन्धः विषयः, अविनाभाव इति यावत् । अध्येतृवेदितृप्रत्ययसंयुक्तान्येव स्युरित्यर्थः । फलितमाह—अध्येतृवेदितृप्रत्ययंविना न प्रयोज्यानीत्यर्थ इति । पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम् । पाणिनीयास्तदध्येतारो वेदितारो वेतिवद् अध्येतृप्रत्ययं विनापि प्रयोगे प्राप्ते नियमार्थमिदम् । कठेनेति । कठेन प्रोक्तमधीयते इत्यर्थे कठा इत्युदाहरणमिति भावः । तदुपपादयति—वैशम्पायनेति । कठेन प्रोक्तमित्यर्थे तेन प्रोक्तमित्यणपवादः 'वैशम्पायनान्तेवासिभ्यश्च' इति णिनिरित्यर्थः ।

---

प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यात् । लुकि सति त्वीकार उदात्तः, टाप् च सिध्यतीति भावः । अष्टकमिति । 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति 'संख्याया अतिशदन्तायाः कन्' । संख्याप्रकृतिकादिति । संख्याप्रकृतिकप्रत्ययान्तादित्यर्थः । कालापक इति । कलापिन्शब्दात्प्रोक्तार्थेऽण्, 'सब्रह्मचारी—' इत्युपसंख्यानाट्टिलोपः । ततोऽध्येतर्यण्- तस्य 'प्रोक्ताल्लुक्' इति लुक् । कालापानामाम्नाय इत्यर्थे 'गोत्रचरणाद् वुञ्' ततोऽध्येतृवेदित्रणो लुक्, स्वरे स्त्रियां च विशेषः । छन्दोब्राह्मणानि । इह मण्डूकप्लुत्यानुवृत्तं 'प्रोक्तात्' इति पञ्चम्यन्तं जसन्तत्वेन विपरिणम्यते 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्यात् । प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेनाह—प्रोक्तप्रत्ययान्तानीति । तद्विषयाणीति । तच्छब्देन अध्येतृवेदितृप्रत्ययः परामृश्यते, विषयशब्दस्त्विहानन्यभाववाची न तु देशवाचीत्यभिप्रेत्याह—प्रत्ययं विना न प्रयोज्यानीत्यर्थ इति । पाणिनीयं पाणिनीया इतिवदनियमेन प्रयोगे प्राप्ते नियमार्थमेतदिति भावः । छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं चिरन्तनप्रोक्तब्राह्मणानामेव तद्विषयत्वार्थम् । तेनेह न—याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि

तस्य 'कठचरकात्–' ( सू १४८७ ) इति लुक्। ततोऽण् । तस्य 'प्रोक्ताल्लुक्' ( सू १२७४ )।

---

## अथ चातुरर्थिकाः ।

१२७९ तदस्मिन्नस्तीति देशे तन्नाम्नि । ( ४–२–६७ ) उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरः । १२८० तेन निर्वृत्तम् । ( ४–२–६८ ) कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । १२८१ तस्य निवासः । ( ४–२–६९ ) शिबीनां निवासो देशः शैबः । १२८२ अदूरभवश्च । ( ४–२–७० ) विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्तास्त्रयोऽर्थाः संनिधाप्यन्ते, तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति । १२८३ ओरञ् । ( ४–२–७१ )

---

तस्येति । णिनः 'कठचरकाल्लुक्' इत्यनेन लुगित्यर्थः । एवं च कठेन प्रोक्ता वेदभागः कठ इति स्थितम् । ततोऽणिति । तस्माद् लुप्तप्रोक्तप्रत्ययकात् कठशब्दात् तदधीते इति अणित्यर्थः । तस्य प्रोक्ताल्लुगिति । तस्याध्येत्रण 'प्रोक्ताल्लुक्' इति लुगित्यर्थः । तथा च कठेन प्रोक्तमधीयते कठा इत्येव कठशब्दस्य लुप्तप्रोक्तप्रत्ययान्तस्य अध्येतृणा सह प्रयोगार्हता, न तु तेन विना केवलप्रोक्तप्रत्ययान्ततयेति भावः ॥

अथ चातुरर्थिकान् प्रत्ययान् वक्तुमुपक्रमते । तदस्मिन्नस्तीति । तदस्मिन्नस्तीत्यर्थे प्रथमान्ताद्वारिताप्रथमान्तादणादयः स्युः । प्रत्ययान्तेन प्रकृतिनामके देशे गम्य इत्यर्थः प्रसिद्धदेशग्रहणाय इतिशब्दः । मतुपोऽपवादः । तेन निर्वृत्तम् । देशे तन्नाम्नीत्यनुवर्तते । तेन निर्वृत्तमित्यर्थे तृतीयान्तादणादयः स्युः तन्नाम्नि देशे इत्यर्थः । तस्य निवासः । तन्नाम्नि देशे इत्येव । तस्य निवास इत्यर्थे षष्ठ्यन्तादणादयः स्युः तन्नाम्नि देशे इत्यर्थः । स्वत्ववान् विषयः । निवासस्तु वसतिमात्रं स्वत्वास्वत्वसाधारणमित्याहुः । अदूरभवश्च । 'तस्य' इति 'तन्नाम्नि देशे' इति चानुवर्तते । तस्य अदूरभव इत्यर्थे षष्ठ्यन्तादणादयः स्युः तन्नाम्नि देशे इत्यर्थः । ननु चकारः किमर्थं इत्यत आह—चकारेणेति । अदूरभव इति विध्यन्तरं प्रागुक्तास्त्रयोऽर्था पुनरुपस्थाप्यन्त इत्यर्थः । किमर्थमित्यत आह—तेनेति । अन्यथा संनिहितत्वात् अदूरभव इत्येव उत्तरविधिष्वनुवर्तेतेति भावः । चातुरर्थिकत्वमिति । चतुरर्थ्यां भव इत्यर्थः

---

याज्ञवल्क्यानि । यजन्तात् 'कण्वादिभ्यो गोत्रे' इत्यण् 'आपत्यस्य च–' इति यलोपः याज्ञवल्क्यादयो हि पाणिन्यपेक्षया नूतना इति वृत्तिकृता व्यवहारः । चकारोऽनुक्तसमुच्चयार्थः । तेन काश्यपिनः कौशिकिन इत्यत्र कल्पेऽपि तद्विषयत्वं सिद्धम् 'काश्यपकौशिकाभ्यामृषिभ्याम्–' इति प्रोक्ते णिनि अध्येतृणा लुक् । छन्दोब्राह्मणानीति किम्, पाणिनीयं व्याकरणम् ॥ इति रक्ताद्यर्थकाः ॥

## अथ चातुरर्थिकाः ।

तदस्मिन् । अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात्प्रत्ययान्तनामा देशश्चेत् । तत्प्रत्ययान्तं नाम यस्येति बहुव्रीहिः । मतुपो

अणोऽपवादः। कक्षतु, काक्षतवम्। नद्यास्तु परत्वान्मतुप्। इक्षुमती। **१२८४ मतोश्च बह्वजङ्गात्।** ( ४—२—७२ ) बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ्, नाण। सैध्रकावतम्। 'बह्वच्' इति किम्—आहिमतम्। अङ्गग्रहणं बह्वच् इति तद्विशेषणं यथा स्याद् मत्वन्तविशेषणं मा भूत्। **१२८५ बह्वचः कूपेषु।** ( ४—२—७३ ) अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः। **१२८६ उदक्च विपाशः।** (४—२—७४) विपाश उत्तरे कूले ये कूपास्तेष्वञ्। अबह्वजर्थ आरम्भः। [1]दत्तेन निर्वृत्तो दात्तः कूपः। उदक् किम्—दक्षिणतः कूपेष्वणेव। **१२८७ सङ्कलादिभ्यश्च।** (४—२—७५) कूपेषु इति निवृत्तम्। सङ्कलेन निर्वृत्तं साङ्कलम्। पौष्कलम्। **१२८८ स्त्रीषु सौवीरसाल्वप्राक्षु।** ( ४—२—७६ ) स्त्रीलिङ्गेष्वेषु देशेषु वाच्येष्वञ्। सौवीरे, दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी। साल्वे, वैधूमाग्नी। प्राचि, माकन्दी। **१२८९**

---

द्विगोरध्यात्मादित्वाट्ठञ्। तद्धितार्थद्विगौ तु 'द्विगोर्लुगनपत्ये' इति लुक् स्यात्। केचित्तु चतुर्णां सूत्राणामर्थाश्चतुरर्थाः, तत्र भवाश्चातुरर्थिका इत्याहुः। **ओरञ्।** 'तदस्मिन्नस्ति' इत्यादिषु चतुर्ष्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्तादञ्, स्यात्, अणोऽपवादः अञधिकारः 'सुवास्त्वादिभ्योऽण्' इति यावत्। **काक्षतवमिति।** कक्षतुरस्मिन्नस्तीत्यादि विग्रहः। **मतोश्च। सैध्रकावतमिति।** सिध्रकावानस्मिन्नस्तीत्यादयश्चत्वारोऽर्थाः यथायोगं बोध्याः। **आहिमतमिति।** अहिमानस्मिन्नस्तीत्यादयोऽर्थाः। अहिशब्दस्य द्वयच्कत्वादञ् नेति भावः। **बह्वचः कूपेषु।** बह्वचः प्रातिपदिकाद् अञ् चतुर्ष्वर्थेषु अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तः कूपः दैर्घवरत्रः। **उदक्च विपाशः। विपाश उत्तरे कूले इति।** विपाश्शब्दः शकारान्तो नदीविशेषवाची। **सङ्कलादिभ्यश्च। निर्वृत्तमिति।** व्याख्यानादिति भावः। अणोऽपवादः। **पौष्कलमिति।** पुष्कलेन निर्वृत्तमिति विग्रहः। **स्त्रीषु सौवीर इति।** उदाहरणं वक्ष्यत इति शेषः। **दात्तामित्री नगरीति।** 'टिड्ढ—' इति ङीप्। **साल्व इति।** उदाह्रियत इति शेषः। **वैधूमाग्नीति।** विधूमाग्निना निर्वृत्तेत्यर्थः। अञि ङीप्। **प्राचीति।** प्राचि देशे उदाह्रियत इत्यर्थः। **माकन्दीति।** माकन्देन निर्वृत्तेत्यर्थः।

---

यमपवादः। इतिशब्दस्तु सकललोकप्रसिद्धे देशे यथा स्यात्, न त्वाधुनिकसंकेतेऽपीत्येतदर्थः। उत्तरसूत्रत्रयेऽपि 'देशे तन्नाम्नि' इत्यनुवर्तते। **तेन निर्वृत्तम्।** अन्तर्भावितण्यर्थवृत्तेः कर्मणि क्तः। **अदूर।** अदूरमन्तिकम्, तत्र भवतीत्यदूरभवः, निपातनात्सप्तमीसमासः। **चातुरर्थिकत्वमिति।** चतुर्णामर्थानां समाहारश्चतुरर्थी। तत्र भवाश्चातुरर्थिकाः। अध्यात्मादित्वाट्ठञ्। चतुर्ष्वर्थेषु भवा इति तद्धितार्थे द्विगौ तु 'द्विगोर्लुगनपत्ये' इति ठञो लुक् स्यात्। **मतोश्च।** ननु 'मतोर्बह्वचः' इत्येवास्तु। बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन व्याख्यानादिष्टं सिद्धयति किमङ्गग्रहणेनेत्याशङ्कां निवारयति—**अङ्गग्रहणमिति। मत्वन्ताविशेषणमिति।**

---

१ 'दत्तेन निर्वृत्तो दात्तः कूपः' इति क्वचित्पाठः।

सुवास्त्वादिभ्योऽण् ( ४—२—७७ ) अञोऽपवादः । सुवास्तोरदूरभवं सौवास्तवम् । वर्णु, वार्णवम्, अण्ग्रहणं नद्यां मतुपो बाधनार्थम् । सौवास्तवी । १२९० रोणी । ( ४—२—७८ ) रोणीशब्दात्तदन्ताच्चाण् । वुञादेरपवादः । रौणः । आजकरौणः । १२९१ कोपधाच्च । ( ४—२—७९ ) अण् । अञोऽपवादः । कार्णच्छिद्रकः कूपः । कार्कवाकवम् । त्रैशङ्कवम् । १२९२ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः । (४-२-८०) सप्तदशभ्यो गणेभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम् । अरीहणादिभ्यो वुञ्, अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण्, कार्शाश्वीयम् ।

---

सुवास्त्वादिभ्योऽण् । अञ इति । ओरञित्यस्यापवाद इत्यर्थः । सौवास्तवमिति । अणि ओर्गुणः । वार्णवमिति । वर्णोरदूरभवमित्यर्थः । ननु 'आरब्' इत्येव सिद्धे पुनर्विधिसामर्थ्यादेव तदननुवृत्तौ अणि सिद्धे पुनरण्ग्रहणं व्यर्थमित्यत आह—अण्ग्रहणमिति । रोणी । लुप्तप्रथमीकमिदम् । तदन्तादिति । 'येन विधिः' इति सूत्रस्थभाष्यादिह प्रत्ययविधावपि तदन्तविधिरिति भावः । रौण इति । रोण्या निर्वृत्तः कूप इत्यर्थः । आजकरौण इति । अजकरोण्या निर्वृत्त इत्यर्थः । अणि 'यस्य' इति इकारलोपः । कोपधाच्च । कार्णच्छिद्रक इति । कर्णच्छिद्रेण निर्वृत्तः कूप इत्यर्थः । कार्कवाकवमिति । कृकवाकुना निर्वृत्तः कूप इत्यर्थः । आगुणः, आदिवृद्धौ रपरत्वम् । त्रैशङ्कवमिति । त्रिशङ्कुना निर्वृत्तः कूप इत्यर्थः । वुञ्छण् । वुञ्, छण्, क, ठच्, इल, स, इनि, र, ढञ्, ण्य, य, फक्, फिञ्, इञ्, ञ्य, कक्, ठक्, एतेषां सप्तदशानां द्वन्द्वात्प्रथमाबहुवचनम् । अरीहण, कृशाश्व, ऋश्य, कुमुद, काश, तृण, प्रेक्ष, अश्मन्, सखि, सङ्काश, बल, पक्ष, कर्ण, सुतङ्गम, प्रगदिन्, वराह, कुमुद एतेषां सप्तदशानां द्वन्द्वः । एते आदयो येषामिति बहुव्रीहेः पञ्चमीबहुवचनम् । यथासंख्यावगमाय कुमुदशब्दयोरेकशेषो न कृतः । प्रगदिन्शब्दे नलोपाभावस्तु इकारान्तत्वभ्रमनिरासाय । द्वन्द्वान्ते श्रूयमाणस्य आदिशब्दस्य अरीहणादिषु प्रत्येकमन्वयः । तथा च अरीहणादिभ्यो वुञ्, कृशाश्वादिभ्यश्छण् इत्येवं सप्तदश वाक्यानि सम्पन्नानि, तदाह—सप्तदशभ्य इति । अरीहणादिसप्तदशगणेभ्यो वुञादयः प्रत्ययाः क्रमात्स्युः

---

सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादङ्गग्रहणाभावे सत्यं तद्विशेषणं स्यादेव । ततश्चाह्मितमित्यादावतिप्रसङ्गः स्यादिति भावः । रोणी । रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थः । तथा च फलितमाह—रोणीशब्दादिति । पञ्चम्याः सौत्रो लुगित्यन्ये । तदन्तादिति । 'येन विधिः—' इति सूत्रे भाष्यस्थनिषेधवचनाद्, विशेषणविशेष्ययोः कामचारमाश्रित्य 'समासप्रत्ययविधौ प्रतिषेधः' इत्यस्य प्रत्याख्यानाद्वा तदन्तविधिरिति भावः । वुञ्छण् । 'ठक्' इत्यन्तमेकं समस्तपदम् । अरीहणादि त्वपरम् । तत्र प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय, द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वो बोध्यः । तेन कुमुदशब्दस्य द्विपाठेऽपि

ऋश्यादिभ्यः कः, ऋश्यकम् । कुमुदादिभ्यष्ठच्, कुमुदिकम् । काशादिभ्य इलः । काशिलः । तृणादिभ्यः सः, तृणसम् । प्रेक्षादिभ्य इनिः, प्रेक्षी । अश्मादिभ्यो रः, अश्मरः । सख्यादिभ्यो ढञ्, साखेयम् । सङ्काशादिभ्यो ण्यः, साङ्काश्यम् । बलादिभ्यो यः, बल्यम् । पक्षादिभ्यः फक्, पाक्षायणः । 'पथः पन्थ च' (ग सू ७९) पान्थायनः । कर्णादिभ्यः फिञ्, कार्णायनिः । सुतङ्गमादिभ्य इञ्, सौतङ्गमिः । प्रगद्यादिभ्यो ञ्यः, प्रागद्यः । वराहादिभ्यः कक्, वाराहकः। कुमुदादिभ्यष्ठक्, कौमुदिकः । **१२६३ जनपदे लुप्** । ( १—२—८१ ) जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात् । **१२६४ लुपि युक्तवद्व्यक्तिवचने** । ( १-२-५१ ) लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालाना निवासो जनपदः पञ्चालाः ।

---

रित्यर्थः । **चतुरर्थ्यामिति** । 'तदस्मिन्नस्तीति देशे तन्नाम्नि' 'तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति चतुर्ष्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्ताद् यथायोगं प्रत्यया इति फलितम् । एतेषु गणेषु चेतनवाचका अचेतनवाचकाश्च सन्ति । तत्र यथायोगं चतुरर्थ्या अन्वयः । **प्रेक्षीति** । प्रेक्षत इति प्रेक्षः, तेन निर्वृत्तमित्यर्थः । प्रेक्षया निर्वृत्तमिति वा । **पथः पन्थ च इति** । प्रेक्षादिगणसूत्रमिदम् । **पान्थायन इति** । पथः अदूरभव इत्यर्थः । **जनपदे लुप्** । **चातुरर्थिकस्येति** । प्रकरणलभ्यमिदम् । **लुपि युक्तवत्** । प्रकृतिभूतः शब्दो युक्तः, व्यक्तिः लिङ्गम्, वचनं संख्येति पूर्वाचार्यसंकेतः । तदाह— **लुपि सति प्रकृतिवल्लिङ्गवचने स्त इति** । लुबिति प्रत्ययादर्शनमुच्यते । लुपः प्रवृत्तेः प्राक् प्रत्ययप्रकृतेर्यल्लिङ्गं वचनं ते एव लुपि सति भवतः, न तु प्रत्ययार्थविशेष्यमनुसृत्ये-त्यर्थः । **पञ्चालानामिति** । पञ्चालसंज्ञकानां राज्ञामित्यर्थः । **पञ्चाला इति** । तस्य निवास इति विहितस्याणः 'जनपदे लुप्' इति लुपि प्रकृतिवद् बहुवचनमिति भावः । **कुरव इत्यादि** । कुरूणाम् अङ्गानां वङ्गानां कलिङ्गानां च निवासो जनपद इति विग्रहः । लिङ्गातिदेशे तु कटुबदर्या अदूरभवो जनपदः कटुबदरीत्युदाहार्यम् । तदेतत्पूर्वाचार्यसूत्रं पाणिनिः प्रत्याचष्टे । **तदशिष्यम्** । यथा दारा इत्यादौ शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य

---

नैकशेषः । आदिशब्दः प्रत्येकं सम्बध्यत इत्याह—**अरीहणादिभ्य इति** । पक्षाद्यन्तर्गण-सूत्रमाह—**पथ इति** । **जनपदे लुप्** । तन्नाम्नीत्येव, नेह—उदुम्बराः सन्त्यस्मिन्नौ-दुम्बरो जनपदः, न ह्यत्र लुबन्तं नामधेयम् । जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफ-लकमतिदेशमाह—**लुपि युक्तवदिति** । व्यक्तिवचने किम्, शिरीषाणामदूरभवो ग्रामः शिरीषाः, 'वरणादिभ्यश्च' इति लुप् । तस्य वनं शिरीषवनम् । इह वनस्पतित्वमतिदिश्यते । ततश्च 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं स्यात् । नन्वत्र शिरीषाणामिति षष्ठी बहुवचनं कुतो नातिदिश्यत इति चेत् । अत्राहुः वचनमिह संख्या, न त्वेकवचनद्विवचनादि । न चैवमपि संख्यावोधकत्वेन श्रुतैव षष्ठी परिगृह्यतामिति वाच्यम्, षष्ठ्यर्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थे प्रथमाया एव युक्तत्वादिति । **पञ्चाला इत्यादि** । यद्यप्यत्राभिधेयलिङ्गवत्त्वेऽपीष्टसिद्धिः, तथापि कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादिसिद्धये प्रकृतिलिङ्गातिदेश इति भावः ।

कुरव । अङ्गा । वङ्गा । कलिङ्गा । १२९५ तदशिष्यं संज्ञाप्रमाणत्वात् । (१-२-५३) युक्तवद्वचनं न कर्तव्यम्, संज्ञानां प्रमाणत्वात् । १२९६ लुब्योगाप्रख्यानात् । (१-२-५४) लुबपि न कर्तव्योऽवयवार्थस्येहाप्रतीतेः । १२९७ योगप्रमाणे च तदभावेऽदर्शनं स्यात् । (१-२-५५) यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत । १२९८ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् । (१-२-५६) 'प्रत्ययार्थं प्रधानम्' इत्येवं रूपं वचनमप्यशिष्यम् । कुतः ? अर्थस्य लोकत एव सिद्धेः । १२९९ कालोपसर्जने च तुल्यम् । (१-२-५७) अतीताया रात्रेः पश्चार्धे

---

भानम्, तथा लुपि सति शास्त्रीयप्रकृत्यर्थगतलिङ्गसंख्याविशिष्टस्यैव स्वार्थस्य लोकव्यवहारादेव भानं संभवति, न तु तदंशे शास्त्रव्यापारापेक्षेति भावः । संज्ञानामिति । लोकव्यवहाराणामित्यर्थः । एवं च लुबपि न विधेय इत्याह—लुब्योगाप्रख्यानात् । अशिष्यमित्यनुवृत्तं पुल्लिङ्गेन विपरिणतं लुबित्यनन्तरं संबध्यते । तदाह—लुबपि न कर्तव्य इति । योगः अवयवार्थः, तस्य अप्रख्यानाद् अप्रतीतेरित्यर्थः, तदाह—अवयवेति । नहि पञ्चालाङ्गवङ्गादिसंबन्धित्वेन पञ्चालाः अङ्गा वङ्गा इत्यादिर्बोधः, अतः प्रत्यय एव तत्र नास्तीति भावः । प्रत्ययस्वीकारे बाधकमाह—योगप्रमाणे च । पञ्चालाङ्गवङ्गादिशब्देषु योगस्य अवयवार्थस्य प्रमाणकत्वे सति तदभावे पञ्चालाङ्गादिक्षत्रियसम्बन्धाभावे संप्रति शूद्रादिराजके जनपदे पञ्चालादिशब्दा न प्रयुज्येत, प्रयुज्यते च यतः, अतः पञ्चालादिशब्दा जनपदविशेषेषु केवलरूढा इति युक्तमित्यर्थः । तदाह—यदि हि योगस्येति । अथ प्रसङ्गाद्यदपि पूर्वाचार्यपरिभाषितं निराचष्टे । प्रधानप्रत्ययार्थ । प्रत्ययार्थ इति । प्रकृत्यर्थं प्रति प्रत्ययार्थः प्रधानं विशेष्यम्, प्रकृत्यर्थस्तु तद्विशेषणमित्येवं यत्पूर्वाचार्यवचनं तदपीत्यर्थः । कालोपसर्जने च । कालश्च उपसर्जनं चेति समाहारद्वन्द्वाद् विषयसप्तमी । अशिष्यमित्यनुवृत्तं भावप्रधानमाश्रीयते । कालविषये उपसर्जनविषये च यत्पूर्वाचार्याणां विशेषवचनं तत्राप्यशिष्यत्वं समान-

---

पूर्वाचार्यानुरोधेन कृतं सूत्रं संप्रति प्रत्याचष्टे—तदशिष्यमिति । पञ्चालाः, अङ्गाः, वङ्गाः, कलिङ्गाः इत्यादयो जनपदस्य यथायथं बहुवचनाद्यन्ता एव संज्ञा न त्वत्र यत्नेन लिङ्गसंख्ये प्रतिपादनीये । आपो दाराः इत्यादिषु यथा । न तत्र शास्त्रेण लिङ्गसंख्ये प्रतिपाद्येते इति भावः । उपजीवकं प्रत्याख्यायोपजीव्यं प्रत्याचष्टे—लुब्योगेति । 'जनपदे लुप्' 'वरणादिभ्यश्च' इति द्विसूत्री लुप्शब्देन विवक्षिता । 'अशिष्यम्' इति सम्बध्यत एव, तदाह—लुबपीति । प्रकृतिप्रत्ययार्थयोः सम्बन्धो योगः इत्याद्यभेन फलितमाह—अवयवार्थस्येति । अप्रख्यानादिति व्याचष्टे—अप्रतीतेरिति । पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेऽपीति 'तस्य निवासः' 'अदूरभवश्च' इति तद्धितो नैवोत्पद्यते, किमनेन लुपा विधानेनेत्यर्थः । न दृश्येतेति । क्षत्रियसम्बन्धं विनापि पञ्चालादिशब्दा जनपदेषु प्रयुज्यन्त इति नायं सूत्रेणेत्यर्थः । प्रसङ्गात्पूर्वाचार्यपरिभाषितमन्यदपि प्रत्याचष्टे—प्रधानेत्यादिना ।

नागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः, विशेषणमुपसर्जनम् इत्यादि पूर्वाचार्यैः परिभाषितम्, तत्राप्यशिष्यत्वं समानम्, लोकप्रसिद्धेः। १३०० **विशेषणानां चाजातेः।** (१-२-५२) लुवर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। पञ्चाला रमणीयाः। गोदौ रमणीयौ। अजातेः किम्-पञ्चाला जनपदः। गोदौ ग्रामः। 'हरीतक्यादिषु व्यक्तिः' (वा ७१५)। हरीतक्याः फलानि हरीतक्यः। 'खलतिकादिषु वचनम्' (वा ७१६)। खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि। 'मनुष्यलुपि प्रतिषेधः' (वा ७१७) मनुष्यलक्षणे लुवर्थे विशेषणानां न। लुबन्तस्य तु भवतीत्यर्थः। चञ्चा अभिरूपः। १३०१ **वरणादिभ्यश्च।** (४-२-८२) अजनपदार्थ आरम्भ।

---

मित्यर्थः। तद्विशेषवचनं विशदयन् व्याचष्टे—**अतीताया** इत्यादिना। **विशेषणानां चाजातेः।** कस्य विशेषणानामित्याकाङ्क्षायां लुबित्यनुवृत्तं षष्ठ्या विपरिणतं संबध्यते, लुप्तप्रत्ययार्थस्येति लभ्यते। तदाह—**लुबर्थस्येति।** **तद्वदिति।** प्रकृतिवदित्यर्थः। 'लुपि युक्तवद्व्यक्तिवचने' इत्यस्मादुत्तरं पठितमिदं सूत्रं तत्रैव व्याख्यातुमुचितम्। **पञ्चाला रमणीया इति।** पञ्चालानां निवासो जनपद इत्यर्थः। अत्र प्रत्ययार्थजनपदं प्रति विशेषणस्यापि रमणीयशब्दस्य प्रकृतिवद्बहुवचनम्। **गोदौ रमणीयाविति।** गोदयोर्निवासो जनपद इत्यर्थः। अत्र प्रत्ययार्थजनपदस्य तद्विशेषणस्यापि प्रकृतिवद् द्विवचनम्। **पञ्चाला जनपद इति।** जनपदशब्दस्य जातिवाचित्वान्न प्रकृतिवद्बहुवचनम्। **गोदौ ग्राम इति।** अत्र ग्रामशब्दस्य जातिवाचित्वान्न प्रकृतिवद् द्विवचनम्। **हरीतक्यादिषु व्यक्तिरिति।** वार्तिकमिदम्। लुपि लिङ्गं प्रकृतिवद्भवति, न तु वचनमिति शेषः। **हरीतक्याः फलानि हरीतक्य इति।** 'हरीतक्यादिभ्यश्च' इति विकारप्रत्ययस्य लुप्। अत्र प्रत्ययार्थे फलेषु प्रकृतिवत्स्त्रीलिङ्गमेव भवति, न त्वेकवचनमिति भावः। **खलतिकादिषु वचनम्।** वार्तिकमिदम्। एषु लुपि प्रकृतिवद्वचनमेव भवति, नतु लिङ्गमित्यर्थः। **खलतिकं वनानीति।** 'वरणादिभ्यश्च' इति लुप्। अत्र खलतिकशब्दस्य लुप्तप्रत्ययान्तस्य प्रकृतिवत्पुंल्लिङ्गत्वं न भवति, किन्तु एकवचनमेवेति भावः। **मनुष्यलुपि प्रतिषेध इति।** वार्तिकमिदम्। **मनुष्यलक्षण इति।** मनुष्यात्मके लुप्तप्रत्ययार्थे यानि विशेषणानि तेषां प्रकृतिवल्लिङ्गवचनप्रतिषेध इत्यर्थः। **चञ्चा अभिरूप इति।** चञ्चा तृणमयी प्रतिमा, तत्सदृशो मनुष्यः चञ्चा। 'इवे प्रतिकृतौ' इत्यधिकारे 'संज्ञायाम्' इति कनः

---

**विशेषणानाम्।** यद्यपि सूत्रपाठे 'लुपि युक्तवत्—' इति सूत्रादनन्तरमेतत्सूत्रं पठित्वा 'तदशिष्यम्—' इत्यारब्धत्वात्तत्रैवेदं व्याख्यातुमुचितम्। तथापि जातेः प्रतिषेधमात्रपरमिदम्, न तु युक्तवद्भावपरमित्याशयेन तत्र नोक्तमित्याहुः। **पञ्चाला रमणीया इति।** कथं तर्हि 'पञ्चाला जनपदः सुभिक्षः सम्पन्नपानीयः' इति प्रयोग इति चेत्, जनपदविशेषणत्वादित्यवेहि। पञ्चालविशेषणत्वाभ्युपगमे तु तद्वल्लिङ्गवचने स्त एव। पञ्चाला जनपदाः सुभिक्षाः सम्पन्नपानीया इति। **हरीतक्य इति।**

वरणानामदूरभवं नगरं वरणाः । १३०२ शर्कराया वा । (४-२-८३) अस्माच्चातुरर्थिकस्य वा लुप्स्यात् । १३०३ ठक्छौ च । (४-२-८४) शर्कराया एतौ स्तः । कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्कचौ । वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण् । तस्य लुब्विकल्पः । षड् रूपाणि । शर्करा, शार्करम्, शार्करिकम्, शर्करीयम्, शार्करिकम्, शार्करकम् । १३०४ नद्यां मतुप् । (४-२-८५) चातुरर्थिकः । इक्षुमती । १३०५ मध्वादिभ्यश्च । (४-२-८६) मतुप्स्याच्चातुरर्थिकः । मधुमान् । अनद्यर्थं आरम्भः । १३०६ कुमुदनडवेतसेभ्यो ड्मतुप् । (४-२-८७) कुमुद्वान् । नड्वान् ।

---

'लुम्मनुष्ये' इति लुप् । अत्र लुप्प्रत्ययान्तस्य चञ्चाशब्दस्य मनुष्ये वाच्ये प्रकृतिवल्लिङ्गत्वम्, ननु तद्विशेषणस्य अभिरूपशब्दस्येति भावः । इति युक्तवद्भावप्रकरणम् । अथ प्रकृतमारभते । वरणादिभ्यश्च । 'जनपदे लुप्' इत्युत्तरमिदं सूत्रम् । वरणादिभ्यः परस्य चातुरर्थिकप्रत्ययस्य लुप् स्यादित्यर्थः । पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह—अजनपदार्थ आरम्भ इति । वरणानामिति । वरणा नाम नदी काश्या उत्तरतः प्रसिद्धा । अवयवाभिप्रायं पूजार्थं वा बहुवचनम् । वरणानामदूरभवं नगरं वरणाः । अत्र लुप्प्रत्ययान्तस्य वरणाशब्दस्य नगरे वाच्ये प्रकृतिवत्स्त्रीलिङ्गं बहुवचनं च । शर्कराया वा । लुबित्यनुवर्तते । प्रत्यासत्त्या चातुरर्थिकस्येति लभ्यते । तदाह—अस्मादिति । ठक्छौ च । 'शर्करायाः' इत्यनुवर्तते । तदाह—शर्कराया एतौ स्त इति । ठच्कचाविति । कुमुदादित्वात् ठच्, वराहादित्वात् कक् इति विवेकः । वाग्रहणेति । अन्यथा तत्र पाठसामर्थ्यादेव ठच्कचश्च लोपविकल्पसिद्धेस्तद्वैयर्थ्यादिति भावः । शर्करेति । अणो लुपि युक्तवद्भावे रूपम् । शार्करमिति अणि रूपम् । शार्करिकमिति । ठकि रूपम् । शर्करीयमिति । छे रूपम् । शार्करिकमिति । ठचि रूपम् । शार्करकमिति । ककि रूपम् । 'शर्कराः सन्त्यस्मिन्' इत्यर्थः, शर्कराभिर्निर्वृत्तमिति वा । नद्यांमतुप् । चातुरर्थिक इति । शेषपूरणम् । इक्षुमतीति । मतुपि उपावितौ । इक्षवः सन्त्यस्मिन् इत्यर्थः । मध्वादिभ्यश्च । शेषपूरणेन सूत्रं व्याचष्टे । मतुप् स्याच्चातुरर्थिक इति । मधुमानिति । मधूनां निवासः इत्यर्थः । पूर्वेण सिद्धे किमर्थमिदमित्यत आह—अनद्यर्थ इति । कुमुदनड । कुमुद नड वेतस एतेभ्यो ड्मतुप् स्यादित्यर्थः । डकार उपौ च इतः । अयं मत्वर्थ एवेति 'न पदान्त—' इति सूत्रभाष्यकैयटयोः स्थितम् । कुमुद्वानिति । कुमुदाः अस्मिन् सन्तीति विग्रहः । ड्मतुपि

---

'हरीतक्यादिभ्यश्च' इत्यणो लुप् । तत्र हि 'लुप् च' इत्यतो लुबनुवर्तते । खलतिकमिति । 'वरणादिभ्यश्च' इति लुप् । चञ्चेति । 'संज्ञायाम्' इति कनो 'लुम्मनुष्ये' इति लुप् । चञ्चा तृणमयः पुमान् । वरणादि । चकारोऽनुक्तसमुच्चयार्थः, तेनास्याकृतिगणत्वं सिद्धम् । वरणा इति । एवं कटुबदरी, शिरीषाः, गर्द

---

१ 'शर्कराणां निवासः इत्यर्थः' इति क. ख. । २ 'इक्षूणां निवासः इत्यर्थः' इति क. ख. ।

वेतस्वान् । आद्ययोः 'झयः' ( सू १८९८ ) इति, अन्त्ये 'मादुपधायाः–' ( १८९७ ) इति वक्ष्यमाणेन वः । 'महिषाच्चेति वक्तव्यम्' ( वा २७६१ ) महिष्मान्नाम देशः । १३०७ नडशादाड्ड्वलच् । ( ४-२-८८ )

---

डित्वात् टिलोपः । नड्वानिति । नडा अस्मिन् सन्तीति विग्रहः । 'कुमुद्वान्कुमुदप्राये' इत्यमरः । वेतस्वानिति । वेतसा अस्मिन् सन्तीति विग्रहः । आद्ययोरिति । कुमुद्वच्छब्दे नड्वच्छब्दे च 'झय' इति मतुपो मस्य वकारः । वेतस्वच्छब्दे तु 'मादुपधायाः–' इति मस्य वकार इत्यर्थः । वस्तुतस्तु नड्वच्छब्देऽपि 'झयः' इत्यस्यासिद्धत्वात् 'मादुपधायाः–' इत्येव न्याय्यम्, प्रकरणे 'प्रकरणमसिद्धम्, नतु एकस्मिन्नेव प्रकरणे पूर्वयोगं प्रति परस्यासिद्धत्वम्' इत्यस्य 'उपसर्गादसमासे–' इति सूत्रभाष्ये दूषितत्वात् । वेतस्वानित्यत्र रुत्वं तु न, अल्लोपस्य स्थानिवत्वात् । 'न पदान्त–' इति निषेधस्तु न, पदे अन्त इति विगृह्य पदे परतश्चरमावयवे कर्तव्ये परपदस्याजादेशस्यैव तन्निषेधप्रवृत्तेर्भाष्याभ्युपगतत्वात् । 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधोऽपि न, पदे अन्त इति विगृह्य तत्र स्थानिवत्त्वनिषेधव्यावृत्तिसाधनपर-भाष्यप्रामाण्येन पदचरमावयवकार्यविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणादिति शब्देन्दुशेखरे विस्तरः । महिषाच्चेत्यनन्तरं तु ड्मतुबिति शेषः । महिष्मानिति । महिषा अस्मिन् सन्तीति विग्रहः । डित्वाट्टिलोपः । अल्लोपस्य स्थानिवत्त्वान्न जश्त्वम् ।

---

खलतिकमित्यादीन्युदाहर्तव्यानि । कुमुदवत्त्वस्यासिद्धत्वात्तस्मिन्कर्तव्ये टिलोपो न स्थानि-वदित्याशयेनाह—झय इति । नड्वानित्यत्रापि परत्वाद् 'झयः' इत्यनेनैव वकारो न तु 'मादुपधायाः–' इत्यनेनेति भावः । न चासिद्धत्वात् 'मादुपधायाः–' इत्येव तत्र न्याय्यमिति वाच्यम् 'प्रकरणे प्रकरणमसिद्धम्, न तु योगे योगः' इति 'उपसर्गादसमासेऽपि–' इत्यत्र भाष्ये निर्णीतत्वात् । ननु वेतस्वानित्यत्र वेतसशब्दस्य सुबन्तत्वेन पदत्वाद् ड्मतुपो डित्वसामर्थ्या-ट्टिलोपे एकदेशविकृतन्यायेन पदत्वात्सस्य रुत्वं स्यात् । न च स्थानिवत्त्वेन निर्वाहः, पूर्वत्रा-सिद्धे तन्निषेधादिति चेत्, मैवम्, अन्तरङ्गं रुत्वं प्रति बहिरङ्गस्य टिलोपस्यासिद्धत्वात् । न च पाष्ठी बहिरङ्गपरिभाषा त्रैपादिकं न जानातीति वाच्यम् कार्यकालपक्षाभ्युपगमात् । नन्वेवमपि 'स्वादिषु–' इति सान्तस्य पदत्वे तदाश्रयरुत्वस्यान्तरङ्गत्वाभावाद्बहिरङ्गपरिभाषा न प्रवर्तत इतिरुत्वं दुर्वारमेव । न च 'नद्यां मतुप्' इति चतुरर्थ्यां मतुपा विधानाच्चातुरर्थिको ड्मतुप् मत्वर्थीय इति 'तसौ मत्वर्थे' इत्यनेन भत्वं शङ्क्यम्' टिलोपस्य स्थानिवत्त्वात् । न च पदत्वेऽप्येवम्, तस्य रुत्वविधिना सह कार्यकालतया 'पूर्वत्रासिद्धे न–' इति निषेधात् इति चेत्—अत्राहुः—पदसंज्ञायां यथोद्देशपक्षाश्रयणात् 'पूर्वत्रासिद्धे न–' इति निषेधाप्रवर्तनात्स्थानिवत्त्वप्रवृत्त्या सान्तस्यापदत्वादिति । एतेन घटी आमलकीत्यत्र 'स्वादिषु–' इति पदत्वाजश्त्वं स्यात्, औत्सीत्यत्र तु संयोगान्तलोपः स्यादिति शङ्कापि परास्तेति दिक् । ननु प्रक्रियालाघवाय ड्वतुबेव विधीयताम्, अथवा 'कुमुदनड्वेत-सेभ्यो डित्' इति प्रकृतस्य मतुपो डित्वमतिदिश्यताम्, किमनेन ड्मतुब्विधानेन । सत्यम्, अन्यतो विधानार्थं तत् । तत्सिद्धार्थकथनपरं वार्तिकमाह—महिषाच्चेति ।

# अथ तद्धितेषु शैषिकप्रकरणम् ॥२८॥

१३१२ शेषे। (४—२—९२) अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषः, तत्राणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। उलूखले क्षुण्ण औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं

छस्य किमिति। एभ्यः परस्य छस्यैव संभव इति प्रश्नः। संनियोगेति। 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति न्यायेनेत्यर्थः। ननु 'ढे लोपोऽकद्र्वाः' इत्यतो लोप इत्यनुवृत्त्यैव सिद्धे लुग्ग्रहणं किमर्थमित्यत आह—लुग्ग्रहणं सर्वलोपार्थमिति। प्रत्ययादर्शनस्यैव लुक्शब्दार्थत्वात् कृत्स्नस्य ईयस्य लोपो लभ्यत इति भावः। लोपविधौ तु नैवं लभ्यत इत्याह—लोपो हीति। लोपविधौ, 'सूर्यतिष्य–' इत्यतः 'य उपधायाः' इत्यनुवृत्तौ विल्वकादिभ्यः परस्य छादेशभूतस्य ईयस्य उपधाभूतो यकारः, तस्य लोप इत्यर्थलाभाद्यकारमात्रस्य लोपः स्यात्। 'य उपधायाः' इत्यननुवृत्तौ तु 'आदेः परस्य' इति ईकारस्यैव लोपः स्यादिति भावः।

इति तद्धितेषु चातुरर्थिकप्रकरणम्।



अथ शैषिकप्रकरणं निरूप्यते। शेषे। अणादय इति। 'प्राग्दीव्यतोऽण्' इत्यादिसाधारणाः प्रत्यया इत्यर्थः। चतुर्भिरिति। अश्वादिभिरिति शेषः। चतुर्दश्यामिति। कृष्णचतुर्दश्यां रात्रौ रक्षांसि दृश्यन्ते इत्यागमः।

इत्यनुवर्तमाने लुग्ग्रहणं व्यर्थमित्याशङ्क्याह—सर्वलोपार्थमिति। यमात्रस्येति। न च 'आदेः परस्य' इतीकारस्य भाव्यमिति वाच्यम्। 'सूर्यतिष्य–' इत्यतो यकारसम्बद्धस्यैव लोपस्यानुवर्तनादिति भावः॥

इति चातुरर्थिकप्रकरणम्॥

---

शेषे। लक्षणं चेति। ग्रहणक्षुण्णादिष्वर्थेषूत्तरसूत्रानुपात्तेष्वेषु अणो विधायकमित्यर्थः। ननु लक्षणं तावद्व्यर्थम्, 'तस्येदम्' इत्यनेन चाक्षुषादीनाम्, संस्कृतं भक्षाः' इत्यनेन दार्षदादीनां सिद्धेः। तथा अविकारोऽपि व्यर्थः। तथाहि अविकारस्यापत्यादिचतुरर्थीपर्यन्तेष्वर्थेषु घादीनां ख्युस्त्युलन्तानां निवृत्तिः, जाताद्यर्थसाकल्यं वा प्रयोजनम्। तत्र निवृत्तिस्तावन्न प्रयोजनम्। आर्द्रकशालादीनामुत्करादिपाठेन 'इतः प्राचीनेष्वर्थेषु घादयो न प्रवर्तन्ते' इति ज्ञापनात्। अन्यथा 'वृद्धाच्छः' इत्येव सिद्धे तत्पाठस्य वैयर्थ्यप्रसङ्गात्। नाप्यसाकल्यं प्रयोजनम्, जाताविकारात्प्राक्पाठसामर्थ्यादेव तल्लाभात्। यदि संनिहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु भवाद्यर्थेषु 'प्राग्दीव्यतः' इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमानाऽणादय एव स्युस्तदा जाताविकारानन्तरमेव 'प्रावृषष्ठप्' इत्यादिभिः सह 'राष्ट्रावारपारात्–'

रण । 'शेषे' इति लक्षणं चाधिकारश्च । 'तस्य विकारः' इत्यतः प्राक्शेषाधिकारः ।
१३१३ राष्ट्रावारपाराद्घखौ । (४—२—९३) आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रियः । अवारपारीणः 'अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्' (वा २७७१—२७७२) । अवारीणः । पारीणः । पारावारीणः । इह प्रकृति-

---

लक्षणमिति । प्रदर्शितेषु ग्रहणाद्यर्थेषु उत्तरसूत्रैरनुपात्तेषु अणादिविधायकमित्यर्थः । अधिकारत्वे तु उत्तरसूत्रेष्वनुवृत्तिलाभादिदं न सिध्येदिति भावः । अधिकारश्चेति । उत्तरसूत्रेष्वनुवृत्त्यर्थं, स्वरितत्वादिति भावः । अधिकारस्योत्तरावधिमाह—तस्य विकार इत्यतः प्रागिति । नच उत्तरसूत्रेषु निर्दिष्टानामर्थविशेषाणाम् अपत्यादिचतुरर्थ्यन्तादन्यत्वस्य सिद्धत्वात् शेषाधिकारो व्यर्थ इति वाच्यम्, 'तस्येदम्' इत्यादावपत्यादिचतुरर्थ्यन्तार्थानां ग्रहणाभावाय तदावश्यकत्वात् । न च प्रदर्शितेषु ग्रहणाद्यर्थेषु 'तस्येदम्' इत्येव अणादिसिद्धेः शेष इत्यस्य विधित्वं नाश्रयणीयमिति वाच्यम्, 'शैषिका मतुबर्थीयात्—' इत्यादौ प्रदर्शितग्रहणाद्यर्थकानामपि ग्रहणलाभाय तदावश्यकत्वात् । इदत्वेन भासमानमपत्याद्यपि न शेषः, 'इदंविशेषा ह्येते अपत्यं समूहो विकारो निवासः' इति भाष्यात् । प्रपञ्चितं चैतत् 'तस्यापत्यम्' इत्यत्र 'तस्येदमित्यपत्येऽपि' इत्यादिश्लोकवार्तिकव्याख्यावसरे । राष्ट्रावारपाराद्घखौ । आभ्यामिति । राष्ट्रशब्दादवारपारशब्दाच्चेत्यर्थः । राष्ट्रिय इति । राष्ट्रे जातो भव इत्यादिरर्थो यथायोगं बोध्यः । घस्य इय । अवारपारीण इति । खस्य ईनादेशः, णत्वम् । अवारपाराद्विगृहीतादपीति । अवारशब्दात्पारशब्दाच्च पृथग्भूतादपि खो वक्तव्य इत्यर्थः । विपरीताच्चेति । पारावारशब्दादपीत्यर्थः । ननु राष्ट्रावारपारेत्यारभ्य 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्यन्ते सूत्रे राष्ट्रादिशब्देभ्यः प्रकृतिभ्यः शेषेऽर्थे प्रत्यया विहिताः । तस्यापत्यमित्यादिवदर्थविशेषास्तु न निर्दिश्यन्ते । यत्किञ्चिद्विभक्त्यन्तेभ्यो राष्ट्रादिप्रकृतिविशेषेभ्यो घादयष्ट्युट्युलन्ताः प्रत्ययाः स्युः, 'समर्थानां प्रथमाद्वा' इत्यस्यानुपस्थित्या प्रथमाद्यारितविभक्तिविशेषानुपस्थितेः । किंच 'तत्र जातः' इत्यादिसूत्रेषूत्तरेषु अर्थविशेषा एव निर्दिष्टाः । तत्र प्रथमाच्चारितसप्तम्यन्तादिनद्विभक्त्यन्तेभ्यः सर्वेभ्यः साधारणा अणादय एव स्युः । तत्राह—इह प्रकृतीत्यादिना । राष्ट्रावारेत्यादिसूत्राणां प्रकृतिविशेषेभ्यः केवल-

---

इत्यादयोऽपि पठ्येरन् । तस्माद्व्यर्थमिदं सूत्रमिति चेत् । अत्रोच्यते—'शैषिकात्सरूपः शैषिको न' इति वक्ष्यमाणस्य विषयलाभाय शेषाधिकार आवश्यकः । 'शैषिकत्वप्रयुक्तकार्यविशेषं ज्ञापयितुं क्रियमाणः शेषाधिकार एव 'शैषिका मतुबर्थीयात्' इत्यादिश्लोकं ज्ञापयति । एवं च श्लोके मत्विधौ मतुब्विधौ च भाष्ये पठितः । इह तु मत्वन्ते पठित इति तत्रैव व्याख्यास्यते । अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः । न चानज्ञापकेनैव तत्सिद्धिरिति वाच्यम्, ज्ञापकस्य विशेषापेक्षत्वे दाक्षादवस्थ्यात् । 'आदकादिभ्यो यदि ठः स्यात्तर्हि चातुरर्थिकमिव' इति नियमस्यापि सम्भवाच्च । एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधाय-

विशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते, तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते। **१३१४ ग्रामाद्यखञौ।** (४-२-९४) ग्राम्यः, ग्रामीणः। **१३१५ कत्र्यादिभ्यो ढकञ्।** (४-२-९५) कुत्सितास्त्रयः कत्त्रयः। तत्र जातादिः कात्त्रेयः। नागरेयकः। 'ग्रामात्' इत्यनुवृत्तेर्ग्रामेयकः। **१३१६ कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु।** (४-२-९६) कौलेयकः श्वा। कौलोऽन्यः। कौक्षेयकोऽसिः। कौक्षोऽन्यः। ग्रैवेयकोऽलङ्कारः। ग्रैवोऽन्यः। **१३१७ नद्यादिभ्यो ढक्।** (४-२-९७) नादेयम्। माहेयम्। वाराणसेयम्। **१३१८ दक्षिणापश्चात्पुरसस्त्यक्** (४—२—९८) 'दक्षिणा' इत्याजन्तमव्ययम्। दाक्षिणात्यः। पाश्चात्त्यः। पौरस्त्यः। **१३१९ कापिश्या-**

प्रत्ययविधीना अर्थविशेषविभक्तिविशेषाकाङ्क्षाया 'तत्र जातः' इत्यादिसूत्राणां च केवलमर्थविशेषनिर्देशपराणां 'समर्थानाम्—' इति सूत्रलब्धतत्तद्विभक्तिकप्रकृतिविशेषाणा विधेयप्रत्ययविशेषाकाङ्क्षाया परस्परमेकवाक्यत्वे सति तत्र जात इत्याद्यर्थेषु प्रथमोच्चारिततत्तद्विभक्त्यन्तेभ्यो राष्ट्रादिशब्देभ्यो घादयष्ट्युट्युलन्ताः प्रत्यया स्युरिति लभ्य इति भावः। राष्ट्राद्यन्याभ्यस्तु प्रकृतिभ्यो जाताद्यर्थेषु अणादयः साधारणा भवन्त्येव। **ग्रामाद्यखञौ।** ग्राम्य इति। यप्रत्यये 'यस्येति च' इति लोपः। **ग्रामीण इति।** खस्य ईनादेशः, णत्वम्। **कत्र्यादिभ्यो ढकञ्।** **कत्त्रय इति।** 'कुगतिप्रादयः' इति कुशब्दस्य समासः। 'त्रौ च' इति कोः कदादेशः। **कात्त्रेयक इति।** ढकञ्, ढकारस्य एयादेशः 'लोपो व्योः—इति यलोपः। **अनुवृत्तेरिति।** स्वरितत्वादिति भावः। तथा च ग्रामशब्दाद् ढकञपि लभ्यत इत्यर्थः। **कुलकुक्षि।** कुलाच्छुनि, कुक्षेः असौ, ग्रीवाया अलंकारे ढकञित्यर्थः। **कौलेयकः श्वेति।** कुले जातादिरिति विग्रहः। **कौक्षेयकोऽसिरिति।** कुक्षौ कोशे भवः खड्ग इत्यर्थः। **ग्रैवेयक इति।** ग्रीवासु भव इति विग्रहः। **नद्यादिभ्यो ढक्।** **माहेयमिति।** मही भूमिः, तस्या जातादीत्यर्थः। **वाराणसेयमिति।** वाराणस्यां जातादीत्यर्थः। **दक्षिणापश्चात्।** **आजन्तमव्ययमिति।** अव्ययसाहचर्यादाजन्तं गृह्यत इति भावः। दक्षिणा, पश्चात्, पुरस्

---

कत्वमपि तस्य सुवचमिति दिक्। **विगृहीतादपीत्यादि।** वचनमेवेदम्, सूत्रे यथासंख्यप्रवृत्त्यर्थं विशिष्टोच्चारणम्। **कुत्सितास्त्रय इति।** इह बहुव्रीहिरपि सुवचः। इहैव निपातनात्कोः कद्भावः। 'कद्भावे त्रावुपसंख्यानम्' इति तु प्रत्याख्येयम्। 'कुल्याया यलोपश्च' इति गणसूत्रम्। कुल्यायां जातः कौलेयकः। कत्त्रि, उम्भि, कुण्डिन, माहिष्मतीत्यादि। **दक्षिणापश्चात्।** **अव्ययमिति।** साहचर्यादिति भावः। एवं च दाक्षिणात्य इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे—'इति पुंवद्भावाशङ्कैव नास्तीति बोध्यम्। **पाश्चात्य इति।** कथं तर्हि 'पश्चात्तनैः कञ्चन नुद्यमानः' इति न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम्, 'अग्रादिपश्चात्—'इति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात्। सत्यम्, पश्चात्तन्वन्ति पश्चात्तना इति कथंचित्समाधेयम्।

ष्फक्। (४—२—९९) कापिश्यां जातादि कापिशायनं मधु। कापिशायनी द्राक्षा। १३७० रङ्कोरमनुष्येऽण् च। (४—२—१००) चात्ष्फक्। राङ्कवो गौः। राङ्कवायणः। 'अमनुष्ये' इति किम्—राङ्कवको मनुष्यः। १३७१ द्युप्रागपागुदक्प्रतीचो यत्। (४—२—१०१) दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। १३७२ कन्थायाष्ठक्। (४—२—१०२)

---

एभ्योऽव्ययेभ्यो जातार्थेषु त्यप्प्रत्ययः स्यादित्यर्थः। कापिश्याष्ष्फक्। कापिश्या ष्फक् इति छेदः कापिशीशब्दात् ष्फक् स्यादित्यर्थः। कापिशी नाम देशविशेषः। कापिशायनी द्राक्षेति। षित्त्वाद् ङीष्। रङ्कोरमनुष्येऽण् च। रङ्कोरण् स्यात् चात् ष्फक्। राङ्कवो गौरिति। रङ्कुर्नाम देशविशेषः, तत्र जातादिरित्यर्थः। राङ्कवको मनुष्य इति। अत्र मनुष्यत्वान्न ष्फगणौ। किन्तु 'मनुष्यतत्स्थयोः—' इति वक्ष्यमाणो वुञ्। अकादेशः। राङ्कवो मनुष्य इति त्वपपाठः। द्युप्रागपाक्। दिव्, प्राञ्च्, अपाञ्च्, उदञ्च्, प्रत्यञ्च् एभ्यो यत्स्यादित्यर्थः। सूत्रे 'दिव उत्' इत्युत्त्वेन निर्देशः। दिव्यमिति। दिवि जातादीत्यर्थः। प्राच्यमिति। प्राचि प्रदेशे जातादीत्यर्थः। तद्धितोत्पत्तौ सत्युक्ते प्राञ्च् य इति स्थिते 'अनिदिताम्—' इति नलोपे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घे प्राच्यमिति रूपम्। अपाच्यमिति। इदमपि पूर्ववत्। उदीच्यमिति। अत्र 'उद ईत्' इति ईत्त्वं विशेषः। प्रतीच्यमिति। प्राच्यवद्रूपम्। कन्थायाष्ठक्। नियम्यूत

---

कापिश्या ष्फक्। कापिशीशब्दात् ष्फक् स्यात्। षित्त्वान्ङीष्, तदाह—कापिशायनीति। रङ्कोरमनुष्ये। रङ्कवो जनपदः, ततः 'प्राग्दीव्यतोऽण्' इत्यण् प्राप्तः। तद्वारकत्वेन 'अवृद्धादपि—' इति वुञ् प्राप्तः, तमपि बाधित्वा 'ओर्देशे' इति ठञ् प्राप्तः, तस्य तु 'कोपधादण्' बाधकः, ततोऽपि परत्वात्कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ विधीयेते। कोपधत्वादणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थ इति कैयटः। अतएवाह—राङ्कवको मनुष्य इति। क्वचित्तु राङ्कव इति पठ्यते, स तु लेखकप्रमादः। स्यादेतत्—अमनुष्यग्रहणमिह व्यर्थम्। अपवादेन वुञा तत्र ष्फगणोर्बाधितत्वेनामनुष्य एव पर्यवसानात्। अण्ग्रहणमपि व्यर्थमेव, कच्छादिपाठादेव तत्सिद्धेः। अत्राहुः काशिकाकृतः—नायं प्रसज्यप्रतिषेधः किं तु पर्युदासः, तेन मनुष्यभिन्ने प्राणिन्येव ष्फगणौ विधीयेते इति, राङ्कवः कम्बल इत्यत्र न ष्फक्। निरुपपदविहितेन ष्फका अणो बाधा मा भूदित्यण्ग्रहणं च क्रियत इति। भाष्ये तु अप्राण्यपि ष्फकमङ्गीकृत्येदं द्वयमपि प्रत्याख्यातम्। द्युप्रागपा। दिव्यमिति। सूत्रे 'दिव उत्' इत्युत्त्वेन निर्देश इति भावः। अपाची दक्षिणा दिक्। द्वितीयो वर्णः पकारो, न तु दन्त्योष्ठ्यः, 'यदिन्द्र प्रागपागुदक्' इत्यादौ तथा दर्शनादिति स्थितं मनोरमायाम्। केचित्तु 'प्राच्यवाचीप्रतीच्यस्ताः' इत्यमरकोशे अवाचीति दन्त्योष्ठ्यपाठं कदाचित्कं पुरस्कृत्य सूत्रेऽपि 'अवाक्' इति पठित्वा अवाच्यमित्युदाहरन्ति। 'प्रागपाक्' इति वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः। प्रागादयोऽसनाद्यन्ता अव्ययाः, तद्भिन्नास्त्वनव्ययाः, उभयेषामपीह ग्रहणमविशेषात्। कथं तर्हि सत्कारा प्राक्तना

कान्यिकः । १३२३ वर्णौ वुक् । ( ४—२—१०३ ) वर्णुसमीपदेशो वर्णुः । तद्विषयार्थवाचिकन्याशब्दाद् वुक्स्यात् । 'यथा हि जातं हिमवत्सु कान्थकम्' । १३२४ अव्ययात्त्यप् । ( ४-२-१०४ ) 'अमेहक्वतसित्रेभ्य एव' ( वा २७७९ ) 'अमान्तिकसहार्थयोः' । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम्—उपरिष्टाद्भवः औपरिष्टः । 'अव्ययानां भमात्रे टिलोपः' ( वा ४१८७ ) । अनित्योऽयं वहिषष्टिलोपविधानात् । तेनेह न—आरातीयः । शाश्वतीयः । 'त्यब्नेर्ध्रुव इति वक्तव्यम्' ( वा २७८० ) । नित्यः । 'निसो गते' ( वा २७८१ )। १३२५ ह्रस्वात्तादौ तद्धिते । ( ८—३—१०१ ) ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चण्डालादिः । 'अरण्याण्णः' ( वा २७८२ ) आरण्याः सुमनसः । 'दूरादेत्यः' ( वा २७८३ )

---

वहुवस्त्रखण्डसमूहः कन्या । देशविशेष इत्यन्ये **वर्णौ वुक् वर्णुसमीपेति** । वर्णुर्नाम सिन्धुनदः, तस्यादूरभव इत्यर्थे सुवास्त्वादित्वादणो 'जनपदे लुप्' इति लुप् । तथा च वर्णुसमीपदेशो वर्णुः, तस्मिन् या कन्था तद्वाचकात् वुक्प्रत्यय इति यावत् । **अव्ययात्त्यप्** । **अमेहेति** । अमा, इह, क्व, तसि, त्र—एभ्य एव अव्ययेभ्यः त्यप्प्रत्यय इति परिगणनवार्तिकमिदम् । **अमात्य इति** । समीपे सह वा जात इत्यर्थः । **औपरिष्ट इति** । उपरिष्टादित्यव्ययस्य परिगणितेष्वनन्तर्भावाद् न त्यप् । अणि औपरिष्ट इति रूपमित्यर्थः । कथमिह टिलोप इत्यत आह—**अव्ययानामिति** । वार्तिकमिदम् । **भमात्र इति** । कार्त्स्न्ये मात्रशब्दः । कृत्स्नस्य भस्याव्ययस्य टेर्लोपः । 'नस्तद्धिते' इत्याद्युपाधिनिरपेक्षित इत्यर्थः । नन्वेवं सति आरादित्यव्ययात् छस्य ईयादेशे टिलोपे आरीय इति स्यादित्यत आह—**अनित्योऽयमिति** । **त्यब्नेरिति** । नि इत्यव्ययात् त्यप् स्याद् ध्रुवे गम्ये इत्यर्थः । 'नियतं भवं नित्यम्' इति भाष्यम् । **निसो गते इति** । निस् इत्यव्ययात् त्यव् वक्तव्य गते गम्ये इत्यर्थः । निस् त्य इति स्थिते सकारस्य पदान्तत्वादादेशप्रत्ययावयवत्वाभावाच्च षत्वे अप्राप्ते । **ह्रस्वात्तादौ** । इण्कोरित्यत इण्ग्रहणमनुवर्तते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'अपदान्तस्य मूर्धन्यः' इत्यतः 'मूर्धन्यः' इति च, तदाह—**ह्रस्वादिणः इति** । **निष्ट्य इति** । त्यपि सस्य षत्वे तकारस्य ष्टुत्वेन टः । **अरण्याण्ण इति** । वक्तव्य इति शेषः । **आरण्याः सुमनस इति** । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । अरण्ये भवा इत्यर्थे णप्रत्यये टापि आरण्या इति रूपम् । अणि तु ङीप् स्यादिति भावः ।

---

इव' इति । अत्राहुः—कालवाचिनः प्राक्शब्दाद्यतं वाधित्वा परत्वात् ट्युट्युलौ योध्याविति । **वर्णौ वुक्** । **वर्णुरिति** । 'अदूरभवश्च' इत्यर्थे सुवास्त्वादित्वादणि 'जनपदे लुप्' इति लुप् । **अमात्य इति** । अमाशब्दः समीपवाची स्वरादिः । अमा समीपे भव इत्यर्थः । **ह्रस्वात्तादौ** । पदान्तत्वात्षत्वस्याप्राप्तावयमारम्भः । आदिग्रहणं तु व्यर्थं 'यस्मिन्विधि–' इत्येव सिद्धेः । ह्रस्वात्किम्, गीस्तराम् । धूस्तराम् । तादौ किम्, सर्पिःसाद्भवति । तद्धिते किम्, सर्पिस्तरति । तिङन्तस्य प्रतिषेधो

दूरेत्य । 'उत्तरादाहञ्' (वा २७४४)। औत्तराह । १३७६ ऐषमोह्यःश्वसोऽन्यतरस्याम् । (४—२—१०५) एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते । १३७७ तीररूप्योत्तरपदादञ्ञौ । (४—२—१०६) यथासंख्येन । वानतीरम् । पाल्वलतीरम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम् । बह्वच्पूर्वान्मा भूत् । बाहुरूप्यम् । १३७८ दिक्पूर्वपदादसंज्ञायां ञः । (४-२-१०७) अणोऽपवादः । पौर्वशालः । असंज्ञायां किम्—संज्ञाभूतायाः प्रकृतेर्मा भूत् । पूर्वेषुकामशम्यां भवः पूर्वेषुकामशमः । 'प्राचां ग्रामनगराणाम्' (सू १४००) इत्युत्तरपदवृद्धिः । १३७९ मद्रेभ्योऽञ् । (४-२-१०८)

दूरादेत्य इति । वक्तव्य इति शेषः । दूरेत्य इति । दूरादागतः, दूरे भवः इति वार्थः । दूरादित्यव्ययाद् एत्यप्रत्ययः 'अव्ययानां भमात्रे—' इति टिलोपः । उत्तरादाहञिति । वाच्य इति शेषः । औत्तराह इति । उत्तरस्मादागतः उत्तरस्मिन् भवः इति वार्थः । औत्तर इति त्वसाधु । ऐषमोह्य । एभ्य इति । ऐषमस्, ह्यस्, श्वस् एतेभ्य इत्यर्थः । वक्ष्यमाणाविति । 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' इत्यनेनेति शेषः । ऐषमस्तनमिति । ऐषमस् इत्यव्ययं वर्तमाने संवत्सरे वर्तते तत्र भवमित्यर्थः । 'परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ।' इत्यमरः । ऐषमस्तनमिति । ट्युट्युलौ वा । टावितौ, युवोरनादेशः, तस्य तुट्, ट इत्, उकार उच्चारणार्थः टित्वादाद्युदात्तः । ह्यस्त्यं—ह्यस्तनमिति । ह्यस् इत्यव्ययं गतेऽह्नि तत्र भवमित्यर्थः । श्वस्त्यम्, श्वस्तनमिति । श्वस् इत्यव्ययमनागतेऽह्नि । तत्र भवमित्यर्थः । 'ह्यो गतेऽनागतेऽह्नि श्वः' इत्यमरः । पक्ष इति । 'श्वसस्तुट् च' इति ठञि तस्य इकादेशे तुडागमे 'द्वारादीनां च' इत्यैजागमे शौवस्तिकमित्यपि वक्ष्यमाणं रूपमित्यर्थः । तीररूप । तीरोत्तरपदाद् रूप्योत्तरपदाच्च क्रमादञ्ञप्रत्ययौ स्त इत्यर्थः । वानतीरमिति । वानतीरे[1] भवमित्यर्थः । पाल्वलतीरमिति । पल्वलतीरे भवमित्यर्थः । शैवरूप्यमिति । शिवरूप्ये भवमित्यर्थः । रूप्योत्तरपदेति यकारघटितपाठः । तथा सति ञप्रत्यये 'यस्येति च' इत्यकारलोपे द्वियकारं रूपम् । बाहुरूप्यमिति । 'विभाषा सुपो बहुच् पुरस्तात्तु' इति बहुपूर्वस्य रूप्यान्तत्वेऽपि तदुत्तरपदकत्वाभावान्न ञ्य इति भावः । दिक्पूर्वपदात् । पञ्चम्यर्थे सप्तमी । असंज्ञाभूताद् दिक्पूर्वपदकाद् ञः स्यादित्यर्थः । पौर्वशाल इति । पूर्वस्यां शालायां भव इत्यर्थे 'तद्धितार्थ—' इति समासात् ञः । मद्रेभ्योऽञ् । शेषे इत्येवेति । दिक्पूर्वाद् मद्रशब्दादञित्यर्थः ।

वाच्यः । सिन्धुस्तरामः । दूरेत्य इति । दूरादागत इत्यादिरर्थः । औत्तराह इति । इहाद्युदात्तत्वं स्त्रियां टाप् च बोध्यः । यदा तु 'उत्तराच्च' इत्याहिप्रत्यये तत्राण् क्रियते 'अमेह—' इति परिगणनेन त्यपोऽभावात् तदा औत्तराहशब्दाज्जातः, स्त्रियां ङीप् च विशेषः । वक्ष्यमाणाविति । 'सायंचिरम्—' इत्यादिनेति शेषः । वक्ष्यत इति । 'श्वसस्तुट् च' इत्यत्र । दिक्पूर्व । 'असंज्ञायाम्' इत्यत्र सौत्रत्वा

[1] 'वानतीरे' इति क,

'दिक्पूर्वपदात्' इत्येव । 'दिशोऽमद्राणाम्' (१३९९) इति मद्रपर्युदासादादिवृद्धिः। पौर्वमद्रः । आपरमद्रः । **१३३० उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।** (४-२-१०९) अञ् स्याद्। शैवपुरम् । **१३३१ प्रस्थोत्तरपदपलद्यादिकोपधादण् ।** (४-२-११०) माहिकिप्रस्थः । पालदः । नैलीनकः । **१३३२ कण्वादिभ्यो गोत्रे ।** (४-२-१११) एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात् । कण्वो गर्गादिः । काण्व्यस्य छात्राः काण्वाः । **१३३३ इञश्च ।** (४-२-११२) गोत्रे य इञ् तदन्तादण् स्यात् । दाक्षाः । गोत्रे किम्—सौतङ्गमेरिदं सौतङ्गमीयम् । गोत्रमिह शास्त्रीयम्, न तु लौकिकम् । तेनेह न—पाणिनीयम् ।

---

**पर्युदासादिति** । उत्तरपदवृद्धेः पर्युदासे सति आदिवृद्धिरित्यर्थः । बहुवचनाज्जनपदवाचिन एव ग्रहणम् । **पौर्वमद्र इति** । पर्वेषु मद्रेषु भव इत्यर्थः । **उदीच्यग्रामाच्च** । **शैवपुरमिति** । उत्तरदेशे शिवपुरं नाम ग्रामविशेषः । तत्र भवमित्यर्थः । समासस्येत्यन्तोदात्तः शिवपुरशब्दः । 'बह्वचः' किम् ? [1]ध्वञ्जी (ङीपन्तो) नाम उत्तरदेशे ग्राम विशेषः । तत्र भवः [2]ध्वाञ्जः । 'अन्तोदात्तात्' किम् । [3]शार्करीधानम् । कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यैवावस्थानाद् मध्योदात्तोऽयम् । **प्रस्थोत्तरपद** । प्रस्थोत्तरपदात् पलद्यादिभ्यः कोपधाच्च अणित्यर्थः । पलादिः आदिर्येषामिति विग्रहः । उदीच्यग्रामलक्षणस्य अञोऽपवादः । **माहिकिप्रस्थ इति** । महिकिप्रस्थनाम्नि ग्रामे भव इत्यर्थः । **पालद इति** । पलदिनाम्नि ग्रामे भव इत्यर्थः । **नैलीनक इति** । निलीनकनाम्नि ग्रामे भव इत्यर्थः । **कण्वादिभ्यो गोत्रे** । **काण्व्यस्येति** । कण्वस्य गोत्रापत्यं काण्व्यः । गर्गादियञ् । काण्व्यस्य छात्रा इत्यर्थे अनेन छापवादः अण् । 'यस्येति च' इत्यकारलोपः, 'आपत्यस्य च—' इति यकारलोपः, काण्वा इति रूपम् । **इञश्च** । **दाक्षा इति** । दक्षस्य गोत्रापत्यं दाक्षिः । 'अत इञ् ।' दाक्षेः छात्रा इति विग्रहः । **सौतङ्गमेरिदमिति** । सुतङ्गमस्य निवासः सौतङ्गमिः 'सुतङ्गमादिभ्य इञ्' । सौतङ्गमेरिदमित्यर्थे वृद्धात् छः, न त्वण्, इञो गोत्रार्थकत्वाभावात् । **गोत्रमिह शास्त्रीयमिति** । अपत्याधिकारादन्यत्र यद्यपि लौकिकमेव गोत्रमिति

---

त्पञ्चम्यर्थे सप्तमीत्याशयेनाह—**संज्ञाभूताया इति** । **मद्रेभ्योऽञ्** । बहुवचननिर्देशाज्जनपदवाची गृह्यते, न तु मद्रपर्यायः । **दिशोऽमद्राणामिति** । 'दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याचामादेर्वृद्धिः स्याद् ञिति णिति किति च तद्धिते' इति सूत्रार्थः । **पौर्वमद्र इति** । मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन सामानाधिकरण्यात् 'तद्धितार्थ—' इति समासः । **उदीच्य** । दिग्ग्रहणं निवृत्तम् । उदीच्यग्रामात्किम्, माथुरः । बह्वचः किम्, ध्वाजः । पिप्पल्यादिङीपन्तो ध्वजीशब्दः । अन्तोदात्तात्किम्, शार्करावानम्, शर्करावानशब्दे धाशब्दाकार उदात्तः । कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यावस्थानात् । **शैवपुरमिति** । 'प्रस्थपुरवहान्ताच्च' इति वुञ् न भवति, 'वृद्धात्' इति तत्रानुवृत्तेः । **प्रस्थोत्तर** । उदीच्यग्रामलक्षणस्याञोऽपवादः । **पालद इति** । पलदीति ईकारान्त इत्येके । नान्त इत्यन्ये । नलोपे

---

१ 'ध्वजी' इति क. २ 'ध्वाजः' इति क. ३ 'शार्करावानम्' इति क. ।

१३३४ न द्व्यचः प्राच्यभरतेषु। ( ४-२-११३ ) 'इञश्च' ( सू १३३३ ) इत्यणोऽपवादः। प्रौष्ठीयाः। काशीयाः। भरतानां प्राच्यत्वेऽपि पृथगुपादानम् अन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम्। १३३५ वृद्धिर्यस्याचामादिस्तद्वृद्धम्। ( १-१-७३ ) यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्। १३३६ त्यदादीनि च। ( १-१-७४ ) वृद्धसंज्ञानि स्युः। १३३७ वृद्धाच्छः। ( ४-२-११४ ) शालीयः। मालीयः। तदीयः। १३३८ एङ् प्राचां देशे ( १-१-७५ ) एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने। एणीपचनीयः। गोनर्दीयः। भोजकटीयः। पक्षेऽणि ऐणीपचनः, गौनर्दः, भौजकटः। एङ् किम्—आहिच्छत्रः। कान्यकुब्जः। 'वा नाम

---

सिद्धान्तः। तथापि इह सूत्रद्वयेऽपि शास्त्रीयमेव गोत्रं गृह्यते, 'यूनि लुक्' इति सूत्रभाष्ये तथावगतत्वादिति भावः। पाणिनीयमिति। पणिनो गोत्रापत्यं पाणिनः। तस्यापत्यं युवा पाणिनिः। तस्येदं पाणिनीयम्। वृद्धाच्छः। अण् तु न, पाणिनिशब्दस्य युवप्रत्ययान्तत्वादिति भावः। न द्व्यचः। प्राच्येषु भरतेषु च गोत्रेषु विद्यमानादिञन्ताद् द्व्यचः अण् न भवतीत्यर्थः। इञश्चेत्यणोऽपवादः। प्रतिषेध इत्यर्थः। प्रौष्ठीया इति। प्रोष्ठस्य गोत्रापत्यं प्रौष्ठिः, तस्य छात्रा इत्यर्थः। काशीया इति। काशस्य गोत्रापत्यं काशिः, तस्य छात्रा इत्यर्थः। अणो निषेधे वृद्धाच्छः। लिङ्गमिति। तेन औद्दालकिः पिता, औद्दालकायनः पुत्र इत्यत्र 'इञः प्राचाम्' इति भरतेभ्यो लुङ् न भवति। वृद्धिर्यस्य। अचामिति बहुत्वमनेकस्योपलक्षणम्। तेन शालाशब्दस्यापि वृद्धत्वं सिध्यति। व्यपदेशिवद्भावेन शाशब्दस्यापि वृद्धत्वम्। त्यदादीनि च। शेषपूरणेन सूत्रं व्याचष्टे—वृद्धसंज्ञानि स्युरिति। आदेरचो वृद्धत्वाभावादारम्भः। वृद्धाच्छः। वृद्धसंज्ञकात् छः स्याद् जातादिष्वर्थेषु। अणोऽपवादः। शालीय इति। शालायां जात इत्यादिरर्थः। एवं तदीयः। एङ् प्राचां देशे। देशविशेषनाम्नश्चेदादिरेङ् वृद्धसंज्ञकः इति नियमार्थमिदम्।

---

सति गणादेशमहिना तत्र्यैव। शालीयशब्दं बाधकाभावेऽपि नलग्रादिषु पठ्यते परं छं बाधितुम्। अन्यथा अणं बाधित्वा परत्वाच्छ एव स्यात्। नोपधप्रयुक्तोऽण् अवृद्धे सावकाश इति। यत्कृलोमनि भवा यात्कृलोम। 'अन्' इति प्रकृतिभावस्तु न, गणेऽस्मिन्नलोपाभिधानादिति हरदत्तादयः। मौतगर्मेरिति। सुतगमादिभ्यश्चातुरर्थिक इञ्। शास्त्रीयमिति। ननु 'अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते' इति चेन्। अत्राहुः—'पूर्वसूत्रे गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते कण्वादिभ्यो गोत्रे ये प्रत्यया विहितास्तदन्तेभ्यः—' इति गोत्रप्रत्ययानुवादेन तथाभिधानात्। कण्वादयश्च गर्गाद्यन्तर्गताः। 'गर्गादिभ्यो यञ्' इत्यत्र तु 'गोत्रे कुञ्जादिभ्यः—' इत्यतो गोत्र इत्यनुवर्तते, न तु शास्त्रीयगोत्रमेव गृह्यते अपत्याधिकारस्थत्वात् तदेव हि 'इञश्च' इति सूत्रेऽनुवर्तते इति। न द्व्यचः। अपवाद इति। प्रतिषेध इत्यर्थः। भरतानामग्रहणस्येति। तेन 'इञः प्राचाम्' इति भरतेभ्यो युवप्रत्ययस्य लुङ् न भवति। औद्दालकिः पिता, औद्दालकायनः पुत्रः, इति, 'यस्कादिगोपुच्छ—' इति

वेयस्य वृद्धसंज्ञा वक्तव्या' ( वा ५७६ )। दैवदत्तः, देवदत्तीयः। १३३९ भवतष्ठक्छसौ। ( ४-२-११५ ) वृद्धाद्भवत एतौ स्तः। भावत्कः। जश्त्वम्, भवदीयः। वृद्धाद् इत्यनुवृत्तेः शत्रन्तादणेव। भावत। १३४० काश्यादिभ्यष्ठञ्ञिठौ। ( ४-२-११६ ) इकार उच्चारणार्थः। काशिकी, काशिका। वैदिकी, वैदिका। 'आपदादिपूर्वपदात् कालान्तात्' ( ग सू ७४ )। आपदादिराकृतिगणः। आपत्कालिकी, आपत्कालिका। १३४१ वाहीकग्रामेभ्यश्च। (४-२-११७) वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः। छस्यापवादः। कास्तीरं नाम वाहीकग्रामः। कास्तीरिकी, कास्तीरिका। १३४२ विभाषोशीनरेषु। ( ४-२-११८ ) एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया। १३४३ ओर्देशे ठञ्। ( ४-२-११९ ) उवर्णान्ताद्देशवाचिनष्ठञ्। निषादकर्षूः नैषादकर्षुकः। 'केऽणः' ( सू ८३४ ) इति ह्रस्वः। 'देशे किम्—पटोश्छात्राः पाटवाः। ञिठं व्यावर्तयितुं ठञ्ग्रहणम्।

---

वा नामधेयस्येति। रूढशब्दत्वमिह नामत्वम्, न त्वाधुनिकसंकेतितत्वमेव, तेन वटीयमित्यादि सिद्धम्। भवतष्ठक्छसौ। भावत्क इति। 'इसुसुक्तान्तात्कः'। ननु भवच्छब्दाच्छस्य ईयादेशे सति भत्वेन पदत्वस्य बाधात्कथं जश्त्वमित्यत आह—जश्त्वमिति। सिति च' इति पदत्वेन भत्वस्य बाधादिति भावः। ननु भावत इति कथमण्प्रत्ययः, त्यदादीनि च' इति भवच्छब्दस्य वृद्धतया छस्यैव युक्त्वादित्यत आह—वृद्धादित्यनुवृत्तेः शत्रन्तादणेवेति। त्यदादिषु 'भातेर्डवतुः' इति डवत्वन्तस्यैव पाठादिति भावः। काश्यादिभ्यष्ठञ्ञिठौ। ठञ् ञिठ इति प्रत्ययौ स्तः ञिठप्रत्यये ञि इति समुदायस्य, आदिर्ञिटुडवः' इति इत्संज्ञाया प्रयोजनाभावाद् ञकार एव इत्, तस्य ञित्स्वरः प्रयोजनम्। ठञ एव ञित्वे तु ङीप् स्यात्, टाप् न स्यात्। नन्वेवं सति इठप्रत्यये ठस्य इकादेशो न स्यात्। अङ्गात्परत्वाभावादित्यत आह—इकार उच्चारणार्थ इति। काशिकीति। काश्यां जातादिरित्यर्थः। ठञन्ताद् ङीप्। काशिकेति। ञिठप्रत्यये इकादेशे टाप्। वैदिकी, वैदिकेति। वेदिर्देशविशेषः। आपदादिपूर्वपदात्कान्तादिति। गणसूत्रम्। ठञ्ञिठावित्येव। आपदादादिरिति। आपद् आदिर्यस्येति विग्रहः। आपत्कालिकी, आपत्कालिकेति। ठञि ङीप्, ञिठे टाप्। वाहीकग्रामेभ्यश्च। वाहीकाख्याः केचिद् ग्रामाः, तद्विशेषवाचिभ्य इत्यर्थः। तदाह—वाहीकग्रामवाचिभ्य इति। विभाषोशीनरेषु। पूर्वसूत्रे समस्तनिर्देशेऽपि 'ग्रामेभ्यः' इत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानात्, तदाह—एषु ये ग्रामा इति। उशीनरेषु ये ग्रामास्तद्विशेषवाचिभ्य इत्यर्थः। सौदर्शनो नाम उशीनरदेशे कश्चित् ग्रामः। सौदर्शनीया इति। ठञ्ञिठयोरभावे वृद्धाच्छः। ओर्देशे ठञ्। निषादकर्षूरिति। कश्चिद्

---

सूत्रे कैयटः। भवतः। छादिरयं प्रत्ययो न तु शादिः। पदसंज्ञार्थं सित्करणादित्याशयेनाह—जश्त्वमिति। काश्यादिभ्यः। इकार उच्चारणार्थ इति। उभयत्र ञकार एवानुबन्धः, तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थ इति भावः।

वृद्धाच्छं परत्वादयं बाधते । दाक्षिकर्षुकः । १३४४ वृद्धात्प्राचाम् । ( ४-२-१२० ) प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् । आटकजम्बुकः । शाकजम्बुकः । नह—मल्लवास्तु, माल्लवास्तवः । १३४५ धन्वयोपधाद् वुञ् । (४-२-१२१) धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद् वुञ् स्यात् । ऐरावतं धन्व, ऐरावतकः । साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादि—( १२९२ ) सूत्रेण ण्यान्तौ । साङ्काश्यकः । काम्पिल्यकः । १३४६ प्रस्थपुरवहान्ताच्च । ( ४-२-१२२ ) एतदन्ताद् वृद्धाद्देशवाचिनो वुञ् स्यात् । छम्प्रापवादः । मालाप्रस्थकः । नान्दीपुरकः । पैलुवहकः । पुरान्तग्रहणमप्राग्यर्थम् । प्राग्देशे तूत्तरेण सिद्धम् । १३४७ रोपधेतो प्राचाम् । ( ४-२-१२३ ) रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद् वुञ् स्यात् । पाटलिपुत्रकः । ईत, काकन्दकः । १३४८ जनपदतदवध्योश्च । ( ४-२-१२४ ) जनपदवाचिनस्तदवधिवाचिनश्च वृद्धात् वुञ् स्याद् । आदर्शकः । त्रैगर्तकः । १३४९ अवृद्धादपि बहुवचन

ग्राम इति शेषः । नैपादकर्षुक इति । उगन्तात्परत्वात् कादेशः । वृद्धात्प्राचाम् । 'ओर्देशे ठञ्' इत्यनुवर्तते । प्राचामिति देशविशेषणम्, ननु विकल्पार्थम्, व्याख्यानात् । पूर्वेण सिद्धे नियमार्थमिदम् । तदाह—प्राग्देशेत्यादिना । आटकजम्बुक इति । आटकजम्बूर्नाम कश्चिद् ग्रामः । तत्र भव इत्यर्थः । उगन्तात्परत्वात् ठस्य कः । 'केऽणः' इति ह्रस्वः । एवं शाकजम्बुकः । मल्लवास्त्विति । कश्चित् प्राच्यो ग्राम इति शेषः । धन्वयोपधाद् वुञ् । ऐरावतं धन्वेति । ऐरावताख्यं धन्वेत्यर्थः । धन्व मरुप्रदेशः । 'समानौ मरुधन्वानौ' इत्यमरः । आष्ट्रकं नाम धन्व इति भाष्यान्नपुंसकत्वमपि । ऐरावतक इति । ऐरावताख्ये मरुप्रदेशे भव इत्यर्थः । वुञ्, अकादेशः । साङ्काश्यक । काम्पिल्यक इति । साङ्काश्ये काम्पिल्ये च भव इत्यर्थः । प्रस्थपुरवहान्ताच्च । एतदन्तादिति । प्रस्थ, पुर, वह एतदन्तादित्यर्थः । ननु पुरान्तग्रहणं व्यर्थम्, नान्दीपुरक इत्यत्र 'रोपधेतोः प्राचाम्' इत्युत्तरसूत्रेण सिद्धत्वादित्यत आह—पुरान्तेति । रोपधेतो प्राचाम् । रोपधश्च, ईच्च तयोरिति द्वन्द्वः । षष्ठी पञ्चम्यर्थे । प्राचामिति देशविशेषणम् । तदाह—रोपधादित्यादिना । ईत इति । उदाह्रियत इति शेषः । काकन्द्यापदादीति । गणसूत्रमिदम् । वृद्धादेवेति । 'वृद्धाच्चेत्प्राचामेव' इति विपरीतनियमस्तु न भवति, अप्राग्देशवाचिनो वृद्धस्य उत्पत्तिस्याभावात् । धन्वयोपधात् । धन्वेति न स्वरूपपर्याययोर्ग्रहणम्, वृद्धत्वासम्भवादित्याशयेनाह—धन्वविशेषेति । ऐरावतं धन्वेति । यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण पुम्स्त्वमुक्तम्, तथापि 'आष्ट्रकं नाम धन्व' इति भाष्ये ह्रस्वपाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बोध्यम् । उत्तरेणेति । रोपधत्वादिति भावः । जनपद । स चासौ अवधिश्चेति कर्मधारयाज्जनपदरूप एवावधिर्लभ्येत । न च जनपदवादेव सिद्धे अवधिग्रहणं व्यर्थम्, 'वुञेव यथा स्यान्नान्यत्' इत्येतदर्थं तस्यावश्यकत्वात् । अत एव जनपदावधिवाचिनस्त्रिगर्तशब्दाद् 'गर्तोत्तरपदात्—' इति छो न भवति, किंतु 'अवृद्धादपि बहुवचन

विषयात् । (४-२-१२५) अवृद्धाद् वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद् वुञ्स्यात् । अवृद्धादणो वृद्धाच्छस्यापवादः । अवृद्धाज्जनपदात्, आङ्गकः । अवृद्धाज्जनपदावधेः, आजमीढकः । वृद्धाज्जनपदात्, दार्वकः वृद्धाज्जनपदावधेः, कालञ्जरकः । 'विषय' ग्रहणं किम्—एकशेषेण बहुत्वे मा भूत्—वर्तनी च वर्तनी वर्तनी च वर्तन्यः, तासु भवो वार्तनः ।

१३५० कच्छाग्निवक्त्रवर्तोत्तरपदात् । (४-२-१२६) देशवाचिना वृद्धादवृद्धाच्च वुञ्स्यात् । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्त्रकः । बाहुवर्तकः । १३५१ धूमादिभ्यश्च । (४-२-१२७) देशवाचिभ्यो वुञ् । धौमकः । तैर्थकः । १३५२ नगरात्कुत्सनप्रावीण्ययोः । (४-२-१२८) नगरशब्दाद्वुञ्स्यात्कुत्सने प्रावीण्ये च गम्ये । नागरकश्चौरः शिल्पी वा । 'कुत्सन' इति किम्—नागरा ब्राह्मणाः । १३५३ अरण्यान्मनुष्ये । (४-२-१२९) वुञ् । 'अरण्याण्णः' (वा २७८२) इत्यस्यापवादः । 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्, (वा २८१९) आरण्यकः पन्था अध्यायो न्यायो विहारो मनुष्यो हस्ती वा । 'वा गोमयेषु' (वा २८२०) । आरण्यका आरण्या वा गोमयाः ।

---

इति । काकन्दी नाम देशः, तत्र भव इत्यर्थः । **जनपदतदवध्योश्च** । **आदर्शक इति** । आदर्शो नाम जनपदः । तत्र भव इत्यर्थः । त्रिगर्तो नाम जनपदविशेषस्यावधिः । जनपदत्वेन सिद्धावपि त्रिगर्तशब्दे परमपि गर्तोत्तरपदाच्छं बाधितुमिह तदवधिग्रहणम् । तदाह—**त्रैगर्तक इति** । **अवृद्धादपि बहुवचनविषयात्** । उदाह्रियत इति शेषः । **आजमीढक इति** । अजमीढेषु भव इत्यर्थः अजमीढाख्यो जनपदः । कस्यचिज्जनपदस्यावधिः । **अवृद्धाज्जनपदादिति** । उदाह्रियत इति शेषः । **दार्वक इति** । दार्वा इति बहुवचनान्तो जनपदविशेषे वर्तते । तत्र भव इत्यर्थः । **कालञ्जरक इति** । कलञ्जरेषु भव इत्यर्थः । **कच्छाग्नि** । कच्छ, अग्नि, वक्त्र, वर्त एतदुत्तरपदादित्यर्थः । शेषपूरणेन सूत्रं व्याचष्टे—**देशवाचिन इति** । छाणोरपवादः । **दारुकच्छक इति** । दारुकच्छे भव इत्यर्थः । **काण्डाग्नक इति** । काण्डाग्नौ भव इत्यर्थः । अकादेश 'यस्येति च' इति इकारलोपः । **सैन्धुवक्त्रक इति** । सिन्धुवक्त्रे भव-इत्यर्थः । **बाहुवर्तक इति** । बहुवर्ते भव इत्यर्थः । **धूमादिभ्यश्च** । देशवाचिभ्यो वुनिति शेषपूरणम् । **नगरात्कुत्सन** । **नागरा ब्राह्मणा इति** । कत्र्यादिषु माहिष्मतीसाहचर्येण संज्ञाभूतस्यैव नगरशब्दस्य ग्रहणम्, अतो न ढकञ् । 'प्राचां ग्रामनगराणाम्' इति सूत्रभाष्ये नागरा इत्युदाहरणात् । **अरण्यान्मनुष्ये** । **आरण्यक इति** । पन्थाः अध्यायो न्यायो विहारो मनुष्यो हस्ती वा । वा

---

विषयात्' इत्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति—**त्रैगर्तक इति** । 'जनपदतदवध्योः-' इति सूत्रे जनपदावधिवाचिन उदाहरणं तु 'श्यामायनकः' इत्यादि बोध्यम् । **नागरा ब्राह्मणा इति** । कत्र्यादिषु माहिष्मतीति संज्ञाशब्दसाहचर्यात्संज्ञाभूतनगरशब्दस्यैव ढकञा नागरेयक इति भाव्यमिति भावः ।

१३५४ विभाषा कुरुयुगन्धराभ्याम् । (४—२—१३०) वुञ् । कौरवक, कौरव । यौगन्धरक, यौगन्धर । १३५५ मद्रवृज्योः कन् । (४—२—१३१) जनपदवुञोऽपवादः । मद्रेषु जातो मद्रकः । वृजिकः । १३५६ कोपधादण् । (४—२—१३२) माहिषिकः । १३५७ कच्छादिभ्यश्च । (४—२—१३३) देशवाचिभ्योऽण् । वुञादेरपवादः । काच्छः । सैन्धवः । १३५८ मनुष्यतत्स्थयोर्वुञ् । (४—२—१३४) कच्छाद्यणोऽपवादः । कच्छे जातादि काच्छको मनुष्यः । काच्छकं हसितम् । 'मनुष्य' इति किम्—काच्छो गौः । १३५९ अपदातौ साल्वात् । (४—२—१३५) साल्वशब्दस्य कच्छादित्वाद् वुञि सिद्धे नियमार्थमिदम्, अपदातावेवेति । साल्वको ब्राह्मणः । 'अपदातौ' किम्—साल्वः पदातिर्व्रजति । १३६० गोयवाग्वोश्च । (४—२—१३६) साल्वाद् वुञ् । कच्छाद्यणोऽपवादः । साल्वको गौः साल्विका यवागूः । साल्वमन्यत् । १३६१ गर्तोत्तरपदाच्छः । (४—२—१३७) देशे । अणोऽपवादः । वृकगर्तीयम् । उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् । १३६२ गहादिभ्यश्च । (४—२—१३८) छः स्यात् । गहीयः । 'मुखपार्श्वतसोर्लोपश्च (ग सू ६८) । मुखतीयम् । पार्श्व-

---

गोमयेष्विति । वार्तिकमिदम् । विभाषा कुरु । कुरुयुगन्धरौ जनपदौ । अवृद्धाभ्यामपि ताभ्याम् 'अवृद्धादपि-' इति नित्ये प्राप्ते विकल्पः । मद्रवृज्योः कन् । मद्रा वृजिश्च जनपदविशेषः । जनपदवुञोऽपवादः । कोपधादण् । माहिषिक इति । महिषिको नाम जनपदः, तत्र भव इत्यर्थः । 'प्रस्थोत्तरपद-' इत्यादिना सिद्धे जनपदवुञ्बाधनायमिदम् । कच्छादिभ्यश्च । काच्छ इति । अत्र वुञोऽपवादोऽण् । सैन्धव इति । आदेशे ठञोऽपवादः । मनुष्यतत्स्थयोर्वुञ् । कच्छादिभ्य इत्यनुवर्तते । तदाह—कच्छादीति । अपदातौ साल्वात् । नियमार्थमिति । साल्वाच्चेदपदातावेवेति नियमार्थमित्यर्थः । गोयवाग्वोश्च । जातादिना विवक्षितयोरित्यर्थः । गर्तोत्तरपदाच्छः । देश इति । शेषपूरणम् । देशवाचिन इति यावत् । वृकगर्तीयमिति । वृकगर्तो नाम देशः । तत्र भव इत्यर्थः । ननु गर्ताच्छ इत्येतावतैव केवलगर्तशब्दस्य देशवाचित्वाभावाद् 'गर्तोत्तरपदात्' इति सिद्धे उत्तरपदग्रहणं व्यर्थमित्यत आह—उत्तरपदग्रहणमिति । गहादिभ्यश्च । गहीय इति । गहो देशविशेषः । मुखपार्श्वेति । गहादिगणसूत्रम् । मुखपार्श्वेति लुप्तषष्ठीकं पदम् । तसन्तयोस्तयो-

---

विभाषा कुरु । वुञ् कच्छादिषु पठ्यते, तत्सामर्थ्यात् पक्षेऽण् सिद्ध इति परिशेषाद्विभाषाग्रहणं युगन्धरार्थमेव । 'अवृद्धादपि-' इति नित्यप्राप्तो वुञनेन विकल्प्यते । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितम् । एतदर्थमेवास्य कच्छादौ पाठः । अन्यथा अनयैव विभाषया वुञा सिद्धो किं तेनेति भावः । सैन्धव इति । 'आदेशे-' इति ठञ् प्राप्तः । वुञि सिद्धे इति । 'मनुष्यतत्स्थयोः-' इत्यनेन । गहादिभ्यश्च । एभ्यो देशवाचिभ्यश्छः स्यात् । पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः । मुखपार्श्व-

तीयम्। अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम्। 'कुग्जनस्य परस्य च' (ग सू ८९)। जनकीयम्। परकीयम्। 'देवस्य च' (ग सू ९०)। देवकीयम्। 'स्वस्य च' [1]स्वकीयम्। 'वेणुकादिभ्यश्छण्वाच्यः' (ग सू ९१) वेणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्। १३६३ प्राचां कटादेः। (४-२-१३९) प्राग्देशवाचिनः कटादेश्छः स्यात्। अणोऽपवादः। कटनगरीयम्। कटघोषीयम्। कटपल्वलीयम्। १३६४ राज्ञः क च। (४-२-१४१) वृद्धत्वाच्छे सिद्धे तत्संनियोगेन कादेशमात्रं विधीयते, राजकीयम्। १३६५ वृद्धादकेकान्तखोपधात्। (४-२-१४१) 'अक' 'इक' एतदन्ता त्खोपधाच्च वृद्धाद्देशवाचिनः छः स्यात्। ब्राह्मणको नाम जनपदः, यत्र ब्राह्मणा आयुधजीविनः, तत्र जातो ब्राह्मणकीयः। शाल्मलिकीयः। अयोमुखीयः। १३६६ कन्थापलदनगरग्रामह्रदोत्तरपदात्। (४—२—१४२) कन्थादि पञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात्। ठञ्ञिठादेरपवादः। दाक्षि-

---

रन्त्यस्य लोपश्च। चाच्छः। असम्भवादत्र जनपदस्येति न सम्बध्यते। कुग्जनस्येति। गणसूत्रमिदम्। जनशब्दस्य परशब्दस्य च कुगागमः स्यात्, चाच्छः अत्रापि देश इति न सम्बध्यते। देवस्य च। इदमपि गणसूत्रम्। चात्कुक् छश्च। 'देवाद्यञञौ' इत्यस्यापवादः। दैवानुग्रह इति भाष्यप्रयोगाद्दैवमित्यपि साधु। स्वकीयमिति। गहादित्वाच्छः कुक्च। स्वशब्दोऽपि गहादिः, आगमशास्त्रानित्यत्वात् स्वीयम्। प्राचां कटादेः। कटनगरीयमिति। कटनगरो नाम प्राच्यो देशः। राज्ञः क च। राजशब्दात् छः स्यात्, ककारश्चान्तादेशः। वृद्धादकेकात्खोपधात्। ब्राह्मणकीय इति। कोपधाणोऽपवादः छः। शाल्मलिकीय इति। शाल्मलिको नाम देशः। तत्र भव इत्यर्थः। इकान्तोदाहरणमिदम्। कोपधाणपवादः। अयोमुखीय इति। 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठयोरपवादः छः। कन्थापलद। ठञ्ञिठादेरपवाद इति। नगरान्ते 'रोपधेतोः–' इति वुञोऽपवादः।

---

तसोरिति। गणसूत्रमिदम्। सप्तम्यन्ताभ्यामाद्यादित्वात्तसिः। मुखतीयमिति। मुखे जातमित्याद्यर्थे तसन्ताच्छः। 'अलोऽन्त्यस्य' इति तसः सकारस्य लोपे 'यस्येति च' इत्यकारलोपः। कुग्जनस्येति। इदमपि गणसूत्रम्। स्वकीयमिति। स्वार्थिककन्नन्तात्स्वशब्दाद्गहादेराकृतिगणत्वाच्छः, देशवाचित्वाभावेऽपि पूर्वपक्षादिवद्बोध्य.। अतएव लुब्योगाप्रत्याख्यानादिति सूत्रे 'न हि स्वकीयस्यैव प्रत्याख्यानम्' इति न्यासकारोक्तिः संगच्छते। केवलात्स्वशब्दादणेव। सौवम्। एतच्च 'द्वारादीनां च' इत्यत्र आकरे उदाहृतम्। स्वीयमित्यत्र तु 'प्राक्क्रीताच्छः'। अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च 'नान्तरीयकम्' इति भवति। अविनाभूतमित्यर्थः। वृद्धादके। ब्राह्मणकीय इति। 'कोपधादण्' इत्यण् प्राप्तः। आयोमुखीय इति। वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ। ठञ्ञिठादेरिति।

---

१ स्वार्थिककन्नन्तात्स्वशब्दाद् गहादेराकृतिगणत्वाच्छः—इति मनोरमातत्त्वबोधिन्यौ। गहादौ तु 'स्वस्य च' इति नोपलभ्यते।

कन्थीयम्। दाक्षिपलदीयम् दाक्षिनगरीयम्। दाक्षिग्रामीयम्। दाक्षिह्रदीयम्। १३६७ पर्वताच्च। (४-२-१४३) पर्वतीय। १३६८ विभाषाऽमनुष्ये। (४-२-१४४) मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात्। पक्षेऽण्। पर्वतीयानि, पार्वतानि वा फलानि। अमनुष्ये किम्-पर्वतीयो मनुष्य। १३६९ कृकणपर्णाद्भारद्वाजे। (४-२-१४५) भारद्वाजदेशवाचिभ्यामाभ्यां छ। कृकणीयम्। पर्णीयम्। भारद्वाज किम्-काकणम्। पार्णम्। १३७० युष्मदस्मदोरन्यतरस्यां खञ् च। (४—३—१) चाच्छ पक्षेऽण्। युवयो युष्माकं वा अयं युष्मदीय अस्मदीय। १४७१ तस्मिन्नणि च

इतरत्र 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठयोरपवाद इति विवेक। पर्वताच्च। इत्यादि स्पष्टम्[1]। युष्मदस्मदोरन्यतरस्यां खञ् च। युष्मदस्मच्छब्दयोरिह शब्दस्वरूपपरत्वात् 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषो न भवति। पञ्चम्यर्थे षष्ठी। युष्मच्छब्दादस्मच्छब्दाच्च जातान्यर्थेषु खञ् स्यादित्यर्थ। चाच्छ। गर्तोत्तरपदादित्यधिकृत छ चकारेण समुच्चीयत इत्यर्थ। पक्षेऽणिति। अन्यतरस्याग्रहणादिति भाव। अत्र 'युष्मदस्मदो' इति योगो विभज्यते। आभ्यां छो भवतीत्यर्थ। 'खञ् च' इति योगान्तरम्। आभ्यां खञ् च भवतीत्यर्थं। अतो न यथासङ्ख्यमिति भाष्ये स्पष्टम्। युष्मदीय इति। द्विवचनान्ताद्बहुवचनान्ताच्च छ। इत्यादेश। सुब्लुकि युवादेशस्य निवृत्ति, तस्य विभक्तौ परे विधानात्। प्रकृत्यर्थैकत्वे विभक्तेर्लुप्तत्वेऽपि त्वादेशा वक्ष्यते। अस्मदीय इति। आवयोरस्माकं वा अयमित्यर्थ। अथ खञि अणि च विशेषमाह–तस्मिन्नणि च। पूर्वसूत्रे निर्दिष्ट खञ् तच्छब्देन

आदिशब्देन 'रोपधेतो —'इत्यादिना प्राप्तस्य वुञ। पर्वतीय इति। 'तत्र जन्यरघोर्घोरं पार्वतीयैर्गणैरभूत्' इत्यत्र तु 'पर्वतीयस्य राज्ञ इमे' इत्यर्थे छान्तादण्। कृकण। भारद्वाजशब्दोऽत्र देशवचन, स च न प्रत्ययार्थ, किं तु प्रकृतिविशेषणमित्याह—भारद्वाजदेशेत्यादिना। युष्मदस्मदो। 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानायमिदम्। पक्षे अणिति। अन्यतरस्याग्रहणादिति भाव। तथा चैते त्रय प्रत्यया इति वैषम्याद्यथासङ्ख्यं न भवन्तीति कश्चित्। मनोरमायां तु यथासङ्ख्यनिवारणाय योगविभाग कृत, तथा हि 'युष्मदस्मदोरन्यतरस्याम्'। आभ्यां छो वा स्यात्। 'त्यदादीनि च' इति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम्। तत 'खञ्च'। एवमुत्तरसूत्रेऽपि योगविभागो बोध्य। तेन आदेशयो खञण्भ्यां यथासङ्ख्यं नेत्यादि। युवयोरित्यादि। एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृत तस्मिन्नणि च। तस्मिन्निति साक्षाद्विहित खञ् निर्दिश्यते न तु चानुकृष्ट। निमित्तयोरादेशौ प्रति यथासङ्ख्यं तु न भवति

१ इह मूले टीकायां च 'इति चतुर्थस्य द्वितीय पाद' इत्याद्यधिकं दृश्यते क ख पुस्तकयो, परं प्रथमपादान्ते तथा लेखादर्शनान्मूलपुस्तकान्तरेष्वदर्शनाच्च सोऽस्माभिरुपेक्षित।

युष्माकास्माकौ। (४-३-२) युष्मदस्मदोरेतावादेशौ स्तः, खञ्यणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। **१३७२ तवकममकावेकवचने।** (४-३-३) एकार्थवाचिनो युष्मदस्मदोस्तवकममकौ स्त:खञ्यणि च। तावकीनः, तावकः। मामकीनः, मामकः। छे तु। **१३७३ प्रत्ययोत्तरपदयोश्च।** (७-२-९८) मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः। उत्तरपदे तु त्वत्पुत्रः, मत्पुत्रः। **१३७४ अर्धाद्यत्।** (४-३-४) अर्ध्यः। **१३७५ परावराधमोत्तमपूर्वाच्च।** (४-३-५) परार्ध्यम्। अवरार्ध्यम्। अधमार्ध्यम्। उत्तमार्ध्यम्। **१३७६ दिक्पूर्वपदाट्ठञ्च।** (४-३-६) चाद्यत्। पौर्वार्धिकम्, पूर्वार्ध्यम्। **१३७७ ग्रामजनपदैकदेशादञ्ठञौ।** (४-३-७) जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः। इमे अस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः। ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे

---

परामृश्यते। तदाह—**खञि अणि चेति।** अत्र स्थानिनोरादेशयोश्च यथासंख्यम्, न तु परनिमित्तयोः, 'तस्मिन्नणि' इति व्यस्तनिर्देशात्। **यौष्माकीण इति।** युवयोर्युष्माकं वा अयमिति विग्रहः। खञ्, ईनादेशः, युष्माकादेशः, आदिवृद्धिः णत्वम्। **अस्माकीन इति।** आवयोरस्माकं वा अयमिति विग्रहः। अणि उदाहरति—**यौष्माकः आस्माक इति।** **तवकममकौ।** 'एकवचने' इति युष्मदस्मदोः प्रकृत्योर्विशेषणम्। एकस्य वचनम् उक्तिः एकवचनम्। एकस्योक्तौ व्याप्रियमाणयोरिति लभ्यते। तदाह—**एकार्थवाचिनोरिति।** **छे त्विति।** एकार्थवृत्तयोर्विशेषो वक्ष्यत इति शेषः। **प्रत्ययोत्तरपदयोश्च।** साप्तमिकमिदम्। त्वमावेकवचने इत्यनुवर्तते। 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदेरित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतम्, तदाह—**मपर्यन्तयोरित्यादि।** **त्वदीयः। मदीय इति।** छे सुब्लुकि तवममयोर्निवृत्तौ मपर्यन्तयोः त्वदिति मदिति च आदेशौ। विभक्तिपरकत्वाभावान्न शेषे लोपः। उत्तरपदे तु परे त्वत्पुत्रो मत्पुत्र इत्युदारणम्। **अर्धाद्यत्।** **अर्ध्य इति।** अर्धे जातादिरित्यर्थः। 'सपूर्वपदाट्ठञ् वाच्यः' इति वार्तिकं भाष्ये स्थितम्। वालेयार्धिकः। **परावर।** अर्धाद्यदिति शेषः। अवरशब्दो दन्त्योष्ठ्यवकारमध्यः। **दिक्पूर्वपदाट् ठञ् च।** अर्धादित्येव परावरपूर्वार्धशब्दात्पूर्वसूत्रेण यदेव, विशिष्य विहितत्वात्। **ग्रामजनपद।** ननु अञ् चेत्येतावतैव चकारात् ठञोऽनुकर्षसिद्धेः ठञ्ग्रहणं व्यर्थमित्यत आह—**ठञ्ग्रहणमिति।** ननु अञ् चेत्युक्तेऽपि चकाराट्ठञोऽनुकर्षः स्पष्ट एवेत्यत आह—**अञ्**

---

'खञणोः–' इति वक्तव्ये पृथग्विभक्तिनिर्देशसामर्थ्यात्। स्थान्यादेशयोस्तु इष्यत एव तत्। **तवक।** इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासंख्यं न भवति, किन्तु स्थान्यादेशयोरेवेत्याशयेनोदाहरति—**तावकीनः। मामकीन इति।** **परावरा।** 'परावराधमोत्तमेभ्यः' इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थम्। तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि

तमसो निषिद्धये' इति कालिदासः । 'अनुदितौपसरागा' इति भारविः । समानकालीनं प्राक्कालीनमित्यादि च । 'अपभ्रंशा एवैते' इति प्रामाणिकाः । 'तत्र जातः' ( सू १३९३ ) इति यावत्कालाधिकारः । १३८२ श्राद्धे शरदः । (४-३-१२) ठञ् स्यात् । ऋत्वणोऽपवादः । शारदिकं श्राद्धम् । १३८३ विभाषा रोगातपयोः । ( ४-३-१३ ) शारदिकः शारदो वा रोग आतपो वा । 'एतयोः' किम्—शारदं दधि । १३८४ निशाप्रदोषाभ्यां च । (४-३-१४) वा ठञ् स्यात् नैशिकम् नैशम् । प्रादोषिकम्, प्रादोषम् । १३८५ श्वसस्तुट् च । ( ४-३-१५ ) श्वस्शब्दाट्ठञ् वा स्यात् । तस्य तुडागमश्च । १८३६ द्वारादीनां च । ( ७-३-४ ) द्वार, स्वर, [1]स्वाध्याय, व्यल्कश,

---

'अव्ययानां भमात्रे–' इति टिलोपः । 'सायंचिरम्–' इति ट्युट्युलौ तु न भवतः, 'नस्तद्धिते' इति सूत्रभाष्ये तथा प्रयोगदर्शनात् । शार्वरस्येति । शार्वरिकस्येति भाव्यमिति भावः । अनुदितौपसेति । औपसिकेति भाव्यमिति भावः । समानेति । समानकालिकं प्राक्कालिकमिति भाव्यमित्यर्थः । प्रामाणिका इति । केचित्तु अमुकः पुरतः परेद्युरित्यादिवद् एतेऽपि शब्दा अव्युत्पन्नाः, पृषोदरादयो वा साधव इत्याहुः । इति यावदिति । व्याख्यानादिति भावः । श्राद्धे शरदः । ठञ् स्यादिति । शेषपूरणमिदम् । ननु 'कालाट्ठञ्' इत्येव सिद्धे किमर्थमिदमित्यत आह—ऋत्वण इति । 'सन्धिवेलाद्यृतु-नक्षत्रेभ्योऽण्' इति वक्ष्यमाणस्येत्यर्थः । शारदिकमिति । शरदि ऋतौ भवमित्यर्थः । शरच्छब्दस्य संवत्सरवाचित्वे तु पूर्वेणैव सिद्धम् । विभाषा रोगातपयोः । 'ठञ्' इति 'शरद' इति चानुवर्तते । शारदं दधीति । ऋत्वणिति भावः । निशाप्रदोषाभ्यां च । वा ठञ् स्यादिति । शेषपूरणम् । 'कालाट्ठञ्' इति नित्यं प्राप्ते विकल्पोऽयम् । श्वसस्तुट् च । तस्येति । प्रत्ययस्येत्यर्थः ।

---

वाच्यम्, तस्य स्वरूपमात्रग्रहणनिरासत्वेनापि साफल्यात् । गौणमुख्यन्यायस्त्विह नाश्रीयते । तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद् व्रीहिपलालः कालः, तत्र भवं कादम्बपुष्पिकं व्रैहिपलालिकमित्याकरः । अत्र हि प्रमाणं सन्धिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमेवेत्याहुः । न च पुष्यादिशब्दानां कालो मुख्य एवार्थः, 'लुबविशेषे' इति व्युत्पादनात् । तथा च कालविशेषणमुक्तार्थे न प्रमाणमिति वाच्यम्, पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां गौणत्वात् । 'लुबविशेषे' इति शास्त्रमपि गौणवृत्तित्वान्वाख्यापकमेवेति दिक् । एवं स्थिते 'कालवाचिभ्यः–' इति मूलस्य 'कालप्रतिपादकेभ्यः' इति फलितोऽर्थः । श्राद्धमिति । भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः । 'प्रज्ञाश्रद्धार्चाभ्योऽणः' इति मत्वर्थीयेन व्युत्पादितः श्राद्धवान्पुरुषस्तु न गृह्यते, अनभिधानात् । श्वसस्तुट् च । विभाषेत्यनुवर्तनादाह—ठञ् वा स्यादिति । 'एषमो ह्यः–' इत्यादिना त्यबपि

---

१ क्वचित् 'स्वग्राम' शब्दपाठोऽप्यत्रोपलभ्यते । क्वचिच्च 'स्वाध्याय' शब्दस्यापि पाठो नास्ति ।

स्वस्ति, स्वर्, स्पयकृत, स्वादु, मृदु, श्वस्, श्वन्, स्व एषा न वृद्धिरैजागमश्च । शौवस्तिकम् ।
१३८७ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । (४-३-१६) सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् । सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । तैषम् । सन्धिवेला, सन्ध्या, अमावस्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत् । 'संवत्सरात्फलपर्वणोः' (ग सू ९२) । सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् । १३८८ प्रावृष एण्यः (४-३-१७) प्रावृषेण्यः । १३८९ वर्षाभ्यष्ठक् (४-३-१८) वर्षासु साधु वार्षिकं वासः । 'कालात्साधुपुष्प्यत्पच्यमानेषु' (सू १४१८) इति साध्वर्थे । १३९० सर्वत्राण् च

तुटि टकार इत् । उकार उच्चारणार्थः । **द्वारादीनां च ।** 'न य्वाभ्याम्–' इति सूत्रे 'पदान्ताभ्याम्' इतिवर्जमनुवर्तते, 'मृजेर्वृद्धिः' इत्यतो 'वृद्धिः' इति च, तदाह—एषां न **वृद्धिरैजागमश्चेति ।** द्वारादीनां नादिवृद्धिः, किन्तु यकारवकाराभ्यां पूर्वौ ऐजागमौ स्त इत्यर्थः । अत्र यकारवकारयोरपदान्तत्वाद् 'न य्वाभ्यां पदान्ताभ्याम्—'इत्यप्राप्ते वचनमिदम् । **शौवस्तिकमिति ।** श्वस् इत्यव्ययाद् जाताद्यर्थे ठञि इकादेशे तुडागमे वकारात्पूर्वमैजागमेन औकारः । अकारस्य न वृद्धिः । **सन्धिवेला ।** कालवृत्तिभ्य इति । 'कालाट्ठञ्' इत्यतस्तदनुवृत्तेरिति भावः । ठञोऽपवादः । **तैषमिति ।** तिष्ये भवमित्यर्थः । 'तिष्यपुष्ययोर्नक्षत्राणि–' इति यलोपः । तिष्ये जात इत्यर्थे 'श्रविष्ठाफल्गुनी–' इति लुग्वक्ष्यते । सन्धिवेलादिगणं पठति—सन्धिवेलेत्यादि । **संवत्सरात्फलपर्वणोरिति ।** गणसूत्रमिदम् । **प्रावृष एण्यः ।** ऋत्वणोऽपवादः । **प्रावृषेण्य इति ।** प्रावृट् वर्षर्तुः, तत्र भवादित्यर्थः । जाते तु ठप् वक्ष्यते । प्रक्रियालाघवार्थं णकारोच्चारणम् । **वर्षाभ्यष्ठक् ।** तृतीयार्थे

विकल्पेन विहितं, आभ्यां मुक्ते ट्यु ट्युलावपि स्त एव । **शौवस्तिकमिति ।** नन्वन्तरङ्गत्वात् तुटि ठस्य प्रत्ययादित्वाभावात्कथं ठ इत्यत्र ठस्य इकादेशो न स्यात् । न च परत्वादिकादेशे तस्य तुडिति वाच्यम्, आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः । इकादेशस्य स्वाङ्गत्वेन बहिरङ्गत्वात् । सूत्रभङ्गेन तुकि हि क्रियमाणे तु 'इसुसुक्तान्तात्–' इति कादेशप्रसङ्ग इति चेत् । सत्यम्, वुञ्छणादिषु ठचश्चिरत्वेन 'एकदेशोऽन्तरङ्गेभ्यो बलवान्' इति ज्ञापितत्वात् । अन्यथा प्रत्ययाद्युदात्तत्वे कृते एकादेशः स्यादिति किं ठचश्चिरत्वेन । कृते त्वेकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम् । **सन्धिवेला ।** अण्ग्रहणं तु छबाधनार्थम् । अन्यथा 'सन्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः' इत्युक्ते पौर्णमासीशब्दाद् 'वृद्धाच्छः' स्यात् । वचनं तु ठञ् बाधनाय स्यादिति भावः । **तैषमिति ।** तिष्याद्भवादावण् । जातार्थे तु 'श्रविष्ठाफल्गुनी–' इति लुक् स्यात् । 'सूर्यतिष्य–' इत्यत्र 'तिष्यपुष्ययोर्नक्षत्राणि–' इति वचनाद्यलोपः । **प्रावृष एण्यः ।** ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट्, 'नहिवृति–' इति दीर्घः । तत्र भवः । जाते तु ठञ् वक्ष्यति । 'रषाभ्याम्–' इति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः । किंच प्रावृषेण्यमाचक्षाणः प्रावृषेण इत्यत्र णकारश्रवणार्थमपि तत् । ण्यन्तात्क्विपि टिलोपणिलोपयलोपाः । **सर्वत्राण्च ।**

**तलोपश्च।** ( ४-३-२२ ) हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हैमनम्, हैमन्तम् । **१३९१ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ( ४-३-२३ ) सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ स्तः तयोस्तुट् च । तुटः प्रागनादेशः, 'अनद्यतने-' ( सू २१८५ )

---

वर्षाशब्दो नित्यं बहुवचनान्तः, 'अप्सुमनःसमासिकतावर्षाणा बहुत्वम्' इति लिङ्गानुशासन-सूत्रात्। 'स्त्रिया प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । वर्षाशब्दाज्जाताद्यर्थे ठगित्यर्थः । **वर्षासु साध्विति**। हितकारीत्यर्थः । ननु 'तत्र साधुः' इति साध्वधिकारस्य शेषाधिकार-बहिर्भूतत्वात्कथं साध्वर्थेऽयं प्रत्यय इत्यत आह—**कालादिति** । **साध्वर्थ इति**। साध्वर्थेपि ठगित्यर्थः । अस्य जाताद्यर्थेषु शैषिकेष्वन्तर्भावादिति भावः । **सर्वत्राण्च**। छन्दसीत्यनुवृत्तिनिवृत्त्यर्थं सर्वत्रग्रहणम् । लोके वेदे चेत्यर्थः । 'हेमन्ताच्च' इति पूर्वसूत्राद् हेमन्तादित्यनुवर्तते । तदाह—**हेमन्तादित्यादिना** । ननु 'सर्वत्राण् तलोपश्च' इत्येव सिद्धे प्रथमचकारो व्यर्थ इत्यत आह—**चकारादिति**। **हैमनमिति**। हेमन्तेत्यत्र तकारात्प्राग् नकारस्यानुस्वारपरसवर्णौ स्थितो । तत्र तकाराकारसमुदायस्य लोप इति पक्षे अनिति प्रकृतिभावान्न टिलोपः । तकारस्यैव लोप इति पक्षे तु अकारस्य 'यस्येति च' इति लोपे तस्य आभीयत्वेनासिद्धत्वात् स्थानिवत्त्वाद्वा न टिलोपः । **हैमन्तमिति**। ऋत्वणि रूपम् । अम् न तलोपः, तस्य एतत्सूत्रप्रतिपदोक्ताणा संनियोगशिष्टत्वा-दिति भावः । **सायंचिरम्**। **चतुर्भ्य इति** । सायं चिरं प्राह्णे इत्येभ्य इत्यर्थः । **कालवाचिभ्य इति** । 'कालाट्ठञ्' इत्यतस्तदनुवृत्तेरिति भावः । 'युवोर-**तयोरिति**। ट्युट्युलोरित्यर्थः । ननु सायंतनमित्यादौ कथं योरनादेश । 'युवोर-नाकौ' इति ह्यङ्गाधिकारस्थम् । अङ्गात्परयोः यु वु इत्येतयोरनाकौ विधीयेते । प्रकृते च अन्तरङ्गत्वात्तुटि यु इत्यस्य अङ्गात्परत्वाभावादनादेशो न संभवति । नच 'तदागमास्तद्ग्रहणेन गृह्यन्ते' इति न्यायेन त्यु इत्यस्यापि युग्रहणेन ग्रहणात्तस्या-

---

**हेमन्तादिति** । एतच्च 'हेमन्ताच्च' इत्यतोऽनुवृत्तमिति भावः । **हैमनमिति**। अकार-विशिष्टस्य तशब्दस्य लोपे 'अन्' इति प्रकृतिभावाद् 'नस्तद्धिते' इति टिलोपो न । तकार-स्यैव लोप इति पक्षे तु 'यस्येति च' इत्यल्लोपस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् । **हैमन्तमिति**। ऋत्वणि तकारलोपो न भवति, तस्य 'सर्वत्राण्-' इति प्रतिपदोक्तेन अणा संनियोगशिष्टत्वात् । एतच्च प्रत्याख्यातं भाष्ये । तथाहि हेमन्तपर्यायो हेमन्शब्दोप्यस्ति 'हेमन्नागनीगन्ति कर्णौ' इत्यादिप्रयोगात्, ततश्च हेमन्हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम् । छन्दसि तु 'हेमन्ताच्च' इति ठञा हैमन्तिकमिति तृतीय-मपि रूपं सिध्यति । न च विशेषविहितेन ठञा अणो बाध. शङ्क्यः, छन्दसि सर्वविधीना वैकल्पिकत्वात् । वृत्तिकृता तु 'हेमन्ताच्च' इति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिक-मिति स्वीकृतम् । **सायंचिरं**। नन्वन्तरङ्गत्वात्प्रथमं तुटि 'मृत्युः' इत्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात् । न चैवं

इत्यादिनिर्देशात् । सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् । 'चिरपरुत्परारिभ्यस्त्नो वक्तव्यः' (वा २८४२) । चिरत्नम् । परुत्नम् । परारित्नम् । 'अग्रादिपश्चाड्डिमच्' (वा २८४४ । अग्रिमम् । आदिमम् । । पश्चिमम् । 'अन्ताच्च' (वा २८४५)

---

न्तत्वं परत्वं निर्बाधमिति वाच्यम्, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषया यस्वा- नादेशप्रसङ्गे तस्य च तुटा व्यवहितत्वादङ्गान्परत्वाभावादित्यत आह—तुट् प्रागनादेश इति । कुत इत्यत आह—अनद्यतने इत्यादिनिर्देशादिति । आदिना 'घकालतनेषु-' इत्यत्र तनेति ग्राह्यम् । सायन्तनमिति । 'षो अन्तकर्मणि' इति धातोर्घञि सायशब्दो दिवसावसाने रूढः, तस्माट्ट्युट्युलौ, तयोरनादेशः तुट् प्रकृतेर्मान्तत्वं निपात्यते । तत्तु सायमिति स्वरादिपठितमव्ययं, तस्मादव्ययत्वादेव ट्युट्युलौ सिद्धौ । चिरन्तनमिति । अत्रापि प्रकृतेर्मान्तत्वं निपात्यते । अस्मादेव लिङ्गाच्चिरमित्यस्याव्ययेषु पाठः अप्रामाणिक इति गम्यते । प्राह्णेतनमिति । प्राह्णः सोढाऽस्येति विग्रहः, 'तदस्य सोढम्' इत्यर्थस्य निर्देश्यमानत्वात् । प्राह्णे जात इत्याद्यर्थे तु 'घकालतनेषु-' इति अलुकैव एदन्तत्वं सिद्धम् । प्रगेतनमिति । प्रगच्छतीति प्रगः, तस्मिन् जातादिरित्यर्थः । यस्तु प्रगे इत्यव्ययमदन्तं प्रातरित्यर्थे तस्य त्वव्ययत्वादेव सिद्धम् । अव्ययस्य उदाहरति—दोषातनमिति । दोषे- त्याकारान्तमव्ययं रात्रौ । दिवातनमिति । दिवेत्याकारान्तमव्ययमह्नि । चिरपरुदिति । चिर, परुत्, परारि एभ्यः त्नप्रत्ययः इत्यर्थः । चिरत्नमिति । ट्युट्युलोरेव प्राप्तयोर्व- चनम् । त्नप्रत्ययसन्नियोगे मान्तत्वं न भवति, ट्युट्युलाभ्यां तस्य सन्नियोगशिष्टत्वात् । परुदिति परारीति चाव्ययं पूर्वस्मिन् पूर्वतरे च वत्सरे क्रमाद्वर्तते । अग्रादीति । वार्तिकमिदम् अग्र, आदि, पश्चाद् एभ्यो डिमच् स्यादित्यर्थः । पश्चिममिति । 'अव्ययानां भमात्रे-

---

टिलोपः' इति वाच्यम्, तस्य पूर्वान्तत्वेन विसर्गाभावात्प्रातस्तनमित्यत्र सन्त्वाभाव प्रसङ्गात्, अत आह—तुट् प्रागिति । इत्यादीति । आदिशब्देन 'घकालतनेषु-' इति ग्राह्यम् । सायन्तनमिति । स्यतेर्घञि सायशब्दोऽकारान्तः दिवसावसाने रूढः, तस्य प्रत्यय सन्नियोगेन मान्तत्वं निपात्यत इति वार्तिककृन्मतम् । भाष्यकृता तु 'सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यः' इत्यत्र सायग्रहणं प्रत्याख्यातम् । न चैवं सायशब्दादकारान्तात् ठञि अनिष्टरूपप्रसङ्ग इति वाच्यम् । तस्य कालवाचित्वाभावात्तदनभिधानाद्वेत्याहुः । चिरन्तनमिति । चिरशब्दस्यापि प्रत्ययसन्नियोगेन मान्तता निपात्यत इति भावः । अत्र वदन्ति—स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येव उचितम् । न चाकारान्ताच्चिरशब्दाट्ठञ् स्यादिति वाच्यम्, त्नेन बाधादिति । एदन्तत्वमिति । प्राह्णः, सोढोऽस्य प्राह्णेतनम् । इत्याद्यर्थम् । तत्र हि सप्तमी नास्ति । जातार्थे 'घकालतनेषु-' इत्यलुकापि सिद्धेः । चिरत्नमिति । सूत्रे चिरशब्दस्योपादानात् ट्युट्युलावपि स्तः । न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न सम्भवतीति वाच्यम्, मान्तादव्ययादेव ट्युट्युलविधौ तत्सम्भवात् । परुत् पूर्वस्मिन् वत्सरे । परारि पूर्वतरे । अग्रादीति ।

अन्तिमम्। १३६२ विभाषा पूर्वाह्णापराह्णाभ्याम्। (४-३-२४) आभ्यां ट्यट्युलौ वा स्तः, तयोस्तुट् च। पक्षे ठञ्। पूर्वाह्णेतनम्। अपराह्णेतनम्। 'घकालतनेषु—' (सू ९७५)। इत्यलुक्। पूर्वाह्णः सोढाऽस्येति विग्रहे तु पूर्वाह्णतनम्। अपराह्णतनम्। पौर्वाह्णिकम्। १३६३ तत्र जातः। (४-३-२५) सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने जातः स्रौघ्नः। औत्सः। राष्ट्रियः। अवारपारीण इत्यादि। १३६४ प्रावृषष्ठप् (४-३-२६) एण्यस्यापवादः। प्रावृषि जातः प्रावृषिकः। १३६५ संज्ञायां शरदो वुञ्। (४-३-२७) ऋत्वणोऽपवादः। शारदकाः दर्भविशेषा मुद्गविशेषाश्च। १३६६ उत्तरपदस्य। (७-३-१०) अधिकारोऽयम्, 'हनस्त—' (सू २५७४) इत्यस्मात्प्राक्। १३६७ अवयवादृतोः। (७-३-११) अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात्, ञिति णिति किति च तद्धिते परे। पूर्ववार्षिकः। अपरहैमनः। 'अवयवात्'

---

इति टिलोपः। अन्ताच्च। इदमपि वार्तिकम्। विभाषा पूर्वाह्ण। पक्षे ठञिति। तथा सति न तुट्, तस्य ट्युट्युल्भ्यां संनियोगशिष्टत्वादिति भावः। तदेवं 'राष्ट्रावार—' इत्यारभ्य एतदन्तैः सूत्रै राष्ट्रादिप्रकृतिविशेषेभ्यो घादयः प्रत्ययविशेषा अनुक्रान्ता। अथ तेषां प्रत्ययानामर्थविशेषान् प्रकृतीनां च विभक्तिविशेषान् दर्शयितुमुपक्रमते। तत्र जातः। सप्तमीसमर्थादिति। सप्तम्यन्तात्कृतसंधेरित्यर्थः। तत्रेत्यनेन सप्तम्यन्तस्यैव प्रथमानिर्दिष्टत्वादिति भावः। अणादय इति। अपत्यादिविकारान्तार्थसाधारणा इत्यर्थः। घादय इति। 'राष्ट्रावारपार—' इत्यादिभिः विशेषविहिता इत्यर्थः। प्रावृषष्ठप्। ठपः पित्त्वम् 'अनुदात्तौ सुप्पितौ' इति स्वरार्थम्। एण्यस्येति। 'प्रावृष एण्यः' इति विहितस्येत्यर्थः। एवं च 'प्रावृष एण्यः' इति सूत्रं जातादन्यार्थमिति पर्यवस्यति। संज्ञायां शरदो वुञ्। संज्ञायामित्येतत् 'कृतलब्धक्रीत—' इत्येतत्पर्यन्तमनुवर्तत इति केचिदिति वृत्तिकृतः। उत्तरपदस्य। अधिकारोऽयमिति। सप्तमे आदिवृद्धिप्रकरणे एतडिमचो डित्वं स्पष्टार्थम्। तत्र जातः। ननु शेषे इत्यस्य लक्षणत्वोक्तेः 'चाक्षुषं रूपम्, श्रावणः शब्दः' इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराच्च घादयोऽपि। न च 'जातादिष्वेवाणादयः' इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः, अन्यथा 'तत्रास्ते तत्र शेते' इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम्, चाक्षुषमित्याद्यसिद्ध्यापत्तेः। 'स्रुघ्ने आस्ते, स्रुघ्ने शेते' इत्यादौ त्वनभिधानादेव तद्धितो न भविष्यति, अङ्गुल्या खनति, वृक्षमूलादागत इत्यादौ यथा। समर्थविभक्तयस्त्वपेक्षादेव लप्स्यन्ते। चाक्षुषमित्यत्र तृतीया यथा, तस्मात्, 'तत्र जातः' इत्याद्यर्थनिर्देशो व्यर्थ इति चेत्। मैवम्, 'प्रावृषष्ठप्' इत्याद्यपवादार्थं तदावश्यकत्वात्। ये तु निरपवादा अर्थनिर्देशाः 'कृतलब्धक्रीतकुशलाः' इत्यादयः, ये तु व्यर्था एवेति दिक्। संज्ञायां शरदः। समुदायेन चेत्संज्ञा गम्यत इत्यर्थः। संज्ञायां किम्, शारदं सस्यम्। 'संज्ञायाम्' इत्येतत् 'कृतलब्ध—' इत्येतत्पर्यन्तं केचिदनुवर्तयन्तीति वृत्तिकृत्।

विम्—पूर्वासु वर्षासु भवं पौर्ववर्षिकम् । 'ऋतोर्वृद्धिमद्विधावयवानाम्' (वा ५६०) इति तदन्तविधि पूर्वस्य । तु न, अवयवत्वाभावात् । १३९८
**सुसर्वार्धाज्जनपदस्य ।** ( ७—३—१२ ) उत्तरपदस्य वृद्धिः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । 'जनपदतदवध्योः—' ( सू १३४८ ) इति वुञ् । 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' ( वा ५५९ ) इति तदन्तविधिः । १३९९

---

ताविसूत्राणि । **अवयवादृतो ।** **पूर्वपदादिति ।** परस्येति शेषः । **ऋतुवाचिन इति ।** उत्तरपदस्येति शेषः । **पूर्ववार्षिक इति ।** ऋतुविशेषे वर्षाशब्दो नित्यस्त्रीलिङ्गो बहुवचनान्तः । वर्षाणां पू० पूर्ववर्षाः, तत्र जातः इत्यर्थः । 'पूर्वापराधरोत्तरम्—' इत्येकदेशिसमासः । **अपरहैमन इति ।** हेमन्तस्यापरम् अपरहेमन्तः । तत्र जातादिरित्यर्थः । एकदेशिसमासः । 'सर्वत्राण्च तलोपश्च' इत्यण् तलोपश्च, उत्तरपदादिवृद्धिः । **पूर्वासु वर्षास्विति ।** 'तद्धितार्थ—' इति समासः । आदिवृद्धिरेव, न तु उत्तरपदादिवृद्धिः, पूर्वपदस्य अवयववृत्तित्वाभावात् । ननु कथमिह 'वर्षाभ्यष्ठक्' इति ठक्, प्रत्ययविधौ तदन्तविधिप्रतिषेधात्, तत्राह—**ऋतोरिति ।** अवयववाचकानां शब्दानामुपरि स्थिताद् ऋतुवाचकाद् वृद्धिनिमित्तकप्रत्ययविधाने कर्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन 'येनविधि—' इति सूत्रभाष्यस्थितवचनेन पूर्वं पूर्वमुदाहृते उदाहरणे तदन्तविधिरित्यर्थः । तथा च पूर्ववार्षिक इत्यत्र पूर्वहैमन इत्यत्र चोदाहरणे 'वर्षाभ्यष्ठक्' इति ठक् 'सर्वत्राण् च तलोपश्च' इत्यण्तलोपौ न सिध्यन्ति । **इह तु नेति ।** प्रत्युदाहरणे तु तदन्तविधिर्नास्ति । पूर्वासु वर्षास्विति सामानाधिकरण्येन पूर्वशब्दस्य अवयववृत्तित्वाभावादित्यर्थः । ततश्च प्रत्युदाहरणे पौर्ववर्षिक इत्यत्र 'कालाट्ठञ्' इति ठञेव, न तु ठक्, स्वरे विशेषः । पौर्वहैमनिक इत्यत्रापि ठञेवेति भावः । **सुसर्वार्धाज्जनपदस्य ।** सु, सर्व, अर्ध इत्येतत्पूर्वस्य जनपदवाचिन इत्यर्थः । **उत्तरपदस्य वृद्धिरिति ।** शेषपूरणम् । **सुपाञ्चालक इति ।** सुपञ्चालेषु जात इत्यर्थः । **जनपदेति ।** 'जनपदतदवध्योः' इत्यनुवृत्तौ 'अवृद्धादपि बहुवचनविषयात्' इति वुञित्यर्थः । ननु 'अवृद्धादपि—' इति प्रत्ययविधौ कथं तदन्तविधिरित्यत आह—**सुसर्वेति ।** सु, सर्व, अर्ध, दिक्शब्द एभ्यः परस्य जनपदवाचिन उपरि प्रत्ययविधौ तदन्तविधिरित्यर्थकेन 'येन विधि—' इति सूत्रभाष्यपठितवचनेन तदन्तविधि

---

**पूर्ववार्षिक इत्यादि ।** वर्षाणां पूर्वः, हेमन्तस्यापरः इति विग्रहः 'पूर्वापराधरोत्तरम्—' इत्येकदेशिसमासः । **पूर्वास्विति ।** तद्धितार्थे समासः । **ऋतोर्वृद्धिमद्विधाविति ।** ऋतुवाचिनः शब्दाद् वृद्धिनिमित्तप्रत्ययविधाने तदन्तविधिर्वाच्यः स चेदृतुवाची शब्दः अवयवेभ्यः परः इत्यर्थः । **पूर्वेणेति ।** पूर्ववार्षिकः, अपरहैमनः इत्यत्र । तथा च 'वर्षाभ्यष्ठक्', 'सर्वत्राण् च तलोपश्च' इत्याभ्यां क्रमेण ठगणौ भवतः । वृद्धिमद्विधौ किम्, पूर्वप्रावृषम् । 'प्रावृष एण्यः' इत्यत्र तदन्तविध्यभावादिह अणेव । **इह त्विति ।** पौर्ववार्षिकः इत्यत्र । तथा चेह 'कालाट्ठञ्' इति ठञेवेति भावः । **अवयवत्वाभावादिति ।** अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्यं न सगच्छेतेति भावः । **जनपदतदवध्योरितीति ।** तस्मिन्ननुवर्तमाने 'अवृद्धादपि बहुवचनविषयात्

दिशोऽमद्राणाम् । (७-३-१३) दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । 'दिशः' किम्-पूर्वपञ्चालानामयं पौर्वपञ्चालः । 'अमद्राणाम्' किम्-पौर्वमद्रः । योगविभाग उत्तरार्थः ।
१४०० प्राचां ग्रामनगराणाम् । (७-३-१४) दिशः परेषां ग्रामवाचिनां नगरवाचिनां चाङ्गानामवयवस्य च वृद्धिः । पूर्वेषुकामशम्यां भवः पूर्वेषुकामशमः । नगरे पूर्वपाटलिपुत्रकः ।
१४०१ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् । (४-३-२८) पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः । १४०२ पथः पन्थ च । (४-३-२९) पथि जातः पन्थकः । १४०३ अमावास्याया वा ।

---

रित्यर्थः । दिशोऽमद्राणाम् । अमद्राणामिति च्छेदः । दिग्वाचकादिति । परस्येति शेषः । जनपदवाचिन इति । मद्रवाचिभिन्नस्येत्यपि बोध्यम् । वृद्धिरिति । आदेरिति शेषः । पौर्वपञ्चाल इति । अत्र पूर्वशब्दः कालवाचीति भावः । पौर्वमद्र इति । 'मद्रेभ्योऽञ्' इत्यञ् । ननु 'सुसर्वार्धदिशो जनपदस्यामद्राणाम्' इत्येकसूत्रमेवास्त्वित्यत आह-योगविभाग उत्तरार्थ इति । 'प्राचां ग्रामनगराणाम्' इत्युत्तरसूत्रे दिश एव संबन्धो यथा स्यादित्येवमर्थमित्यर्थः । एकसूत्रत्वे तु सुसर्वादिभ्यः परस्यापि मद्रशब्दस्य पर्युदासः प्रसज्येतेति इहार्थोऽपीत्येके । प्राचां ग्रामनगराणाम् । दिश इति । दिशः परे ये प्राच्यग्रामवाचिनः प्राच्यनगरवाचिनश्च तेषामवयवस्यादेर्वृद्धिः स्यादित्यर्थः । पूर्वेषुकामशम्यामिति । 'दिक्संख्ये संज्ञायाम्' इति समासः । अण् । 'संज्ञात्वाद् दिक्पूर्वपदात्-' इति ञो न । समुदायस्य [ग्रा]मनामत्वेऽपि उत्तरपदस्यापि तन्नामत्वमस्तीति उत्तरपदादिवृद्धिः । नगरेति । उदाहरण[व]चनम् । पूर्वपाटलिपुत्रक इति । 'पूर्वापरप्रथम-' इति समासः 'अवृद्धादपि-' इति वुञ् । [य]द्यपि पाटलीपुत्रशब्दे उत्तरपदे आदिवृद्धिरेव । तथापि पूर्वपदस्य वृद्धिनिवृत्तिः फलम् । [पू]र्वाह्णापराह्ण । पूर्वाह्णकः, अपराह्णक इति । पूर्वाह्णे अपराह्णे च जात इत्यर्थः । [वि]भाषा पूर्वाह्णापराह्णाभ्याम्' इत्यस्यापवादः । ट्युट्युलोः ठञश्च विकल्पस्तु जातादन्यार्थे [सा]वकाश इति भावः । आर्द्रकः । मूलक इति । आर्द्रायां मूले च जात इत्यर्थः । [न]क्षत्रत्वणोऽपवादः । प्रदोषक इति । 'निशाप्रदोषाभ्याम्' इत्यस्यापवादः । अवस्करक इति । [औ]त्सर्गिकस्याणोऽपवादः । पथः पन्थ च । पथिन्शब्दाद् वुन स्यात् प्रकृतेः पन्थादेशश्च । अमा[वा]स्याया वा । वुनिति शेषः । पक्षे संधिवेलादित्वादण् । एकदेशविकृतन्यायादमावस्याशब्दादप्ययं [वि]धिः । अ च । अ इति लुप्तप्रथमाकम् । अमावास्याशब्दादकारः प्रत्ययोऽपीत्यर्थः । आदिवृद्ध्यभावः

---

[इ]त्यनेनेत्यर्थः । पौर्वमद्र इति । 'मद्रेभ्योऽञ्' इत्यञ् । पूर्वाह्णक इति । 'विभाषा [पू]र्वाह्णापराह्णाभ्याम्, इत्यस्यापवादः । आर्द्रकः । मूलक इति । नक्षत्राणोऽपवादः । [प्र]दोषक इति । 'निशाप्रदोषाभ्यां च' इत्यस्यापवादः । अवस्करक इति । [औ]त्सर्गिकस्याणोऽपवादः । ये तु 'संज्ञायाम्' इत्येतत् 'कृतलब्ध-' इत्येतत्पर्यन्तमनु[व]र्तयन्ति तन्मते असंज्ञायां यथायथमणादयो घादयश्च बोध्याः । अमावास्याया वा ।

( ४-३-३० ) अमावास्यक , अमावास्य । १४०४ अ च ( ४-३-३१ ) अमावास्य
१४०५ सिन्ध्वपकराभ्यां कन् । ( ४-३-३२ ) सिन्धुक । कच्छादिणि मनुष्यवुञि
च प्राप्ते, अपकरक । औत्सर्गिकेऽणि प्राप्ते । १४०६ अणञौ च । ( ४-३-३३ )
क्रमात्स्त । सैन्धव । आपकर । १४०७ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसु-
हस्तविशाखाषाढाबहुलाल्लुक् । ( ४-३-३४ ) एभ्यो नक्षत्रवाचिभ्यः परस्य जाताद्यर्थ
प्रत्ययस्य लुक् स्यात् । १४०८ लुक्तद्धितलुकि । ( १-२-४९ ) तद्धितलुकि सत्युपस
र्जनस्त्रीप्रत्ययस्य लुक् स्यात् । श्रविष्ठासु जातः श्रविष्ठ । फल्गुन इत्यादि । चित्रा-

प्रयोजनम् । सिन्ध्वपकराभ्यां कन् । सिन्धुक इति । सिन्धौ जात इत्यर्थ । कच्छादीति ।
'कच्छादिभ्यश्च' इत्यणि 'मनुष्यतत्स्थयोर्वुञ्' इति वुञि च प्राप्ते अयं कन्विधिरित्यर्थ ।
अपरक इति । अपकरे जात इत्यर्थ । अणि प्राप्त इति । कन्विधिरिति शेष । अणञौ
च क्रमात् स्त इति । सिन्ध्वपकराभ्यामिति शेष । श्रविष्ठा । एभ्य इति । श्रविष्ठा,
फल्गुनी, अनुराधा, स्वाति, तिष्य, पुनर्वसु, हस्त, विशाखा, अषाढा, बहुला एतेभ्य इत्यर्थ ।
जातार्थेति । प्रकरणलभ्यमिदम् । स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तौ । दीर्घान्त
इति 'अत सातत्यगमने' इति धातौ माधव । कृत्तिकावाचिबहुलाशब्दष्टाबन्त । समाहार-
द्वन्द्वे ह्रस्वनिर्देश । लुक् तद्धितलुकि । प्रथमस्य द्वितीये इद सूत्रम् । उप
सर्जनस्त्रीप्रत्ययस्येति । 'गोस्त्रियोरुपसर्जनस्य' इत्यतस्तदनुवृत्तेरिति भाव ।
श्रविष्ठ इति । अत्वणा लुकि स्त्रीप्रत्ययस्य निवृत्ति । 'लुक् तद्धितलुकि' इत्यत्र
अप्रधानमेवोपसर्जनम्, ननु शास्त्रीयम्, असम्भवादिति भाव । फल्गुन इति ।
फल्गुन्या जात इत्यर्थ । अणो लुकि स्त्रीप्रत्ययनिवृत्ति । इत्यादीति । अनुराधासु

सन्धिवेलाद्यणीयवाद । 'अमावस्यदन्यतरस्याम्' इति सूत्रेणामापूर्वाद्वमेष्यति वृद्धौ पक्षे
ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यस्याप्यमावस्याशब्दस्येह ग्रहणम्, प्रकृतिग्रहणे
विकृतेरपि ग्रहणात् । अमावस्यक । अमावस्य । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपध
पठन्ति, तेषां तु दीर्घोपधस्य न स्याद् विकृतिग्रहणेन प्रकृतेरग्रहणादिति हरदत्तादय । वस्तु
तस्तु वृद्धिप्रकृतिभूतस्यानुकरणमिद मित्याश्रित्य ह्रस्वोपधपाठोऽपि समर्थयितुं शक्यत
इत्यन्ये । अ च । अमावास्याशब्दादकारप्रत्यय स्यात् । अयमपि पूर्ववदुभाभ्या
बोध्य । अमावास्य इति । ह्रस्वमध्यात्तु अमावस्य । अणञौ च । यथासङ्ख्यार्थो
योगविभाग । श्रविष्ठा । इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्ता
दय । माधवस्तु 'दीर्घान्त' इति 'अत सातत्यगमने' इति धातावाह ।
एवं चात्र स्वातीतिष्येति ङीपन्तग्रहणाद्ङीपन्तस्य सौवात इति रूपं भवाय इत्र
जातार्थेऽपि माधवमते सिध्यत्येव । कैयटादिमते तु जातार्थे न सिध्यति । लुविधा
यकेऽस्मिन् डापन्तग्रहणेऽपि लिङ्गविशिष्टपरिभाषया ङीपन्तादपि अणो लुक् प्रवृत्ते ।
ननु 'गोस्त्रियो-
रुपसर्जनेति । अप्रधानमिहोपसर्जन गृह्यते, न शास्त्रीयमसम्भवात् । ननु 'गोस्त्रियो-
इति सूत्रेऽप्यप्रधानलक्षणमेवोपसर्जन गृह्यताम्, 'एकविभक्ति च—' इति शास्त्रीयं न
गृह्यताम् । मैवम्, हरीतक्या फलानि हरीतक्य इत्यत्र ह्रस्वप्रसङ्गात् । उपसर्जनस्य

रेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' (वा २८५७)। चित्रायां जाता चित्रा। रेवती रोहिणी आभ्यां 'लुक्तद्धितलुकि' इति लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष्। 'फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ' (वा २८५८)। स्त्रियामित्येव। फाल्गुनी। अषाढा। 'श्रविष्ठाषाढाभ्यां छण्वक्तव्यः'। (वा २८५९)। अस्त्रियामपि। श्राविष्ठीयः। आषाढीयः। १४०९ जे प्रोष्ठपदानाम्। (७-३-१८) प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धि स्याज्जातार्थे ञिति णिति किति च। प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः। 'ज' इति किम्—प्रोष्ठपदासु भवः प्रौष्ठपदः। बहुवचननिर्देशात्पर्यायोऽपि गृह्यते।

---

जातः अनुराधः। नक्षत्राणो लुकि स्त्रीप्रत्ययनिवृत्तिः एवमग्रेऽपि। 'अनुराधान् हविषा वर्धयन्तः" इत्यादौ छान्दसं पुंस्त्वम्। स्वात्यां जातः स्वातिः। तिष्ये जातः तिष्यः। पुनर्वस्वोर्जातः पुनर्वसुः। हस्ते जातो हस्तः। विशाखयोर्जातो विशाखः। अषाढासु जातः अषाढः। बहुलासु जातः बहुलः। **चित्रेति**। चित्रादिभ्यः परस्य स्त्रीरूपजातार्थकप्रत्ययस्य लुगित्यर्थः। **रेवतीरोहिणीति**। जातायां नक्षत्राणां लुकि सति प्रकृतेर्गौरादिस्त्रीप्रत्ययनिवृत्तौ जातार्थगतस्त्रीत्वे पुनर्ङीष्। ननु रेवती नक्षत्रे रोहिणी नक्षत्रे इति गौरादौ पाठादिह जातार्थवृत्तिभ्यां कथं ङीषित्यत आह—**आभ्यामिति**। रेवतीरोहिणीशब्दाभ्यामित्यर्थः। परस्य स्त्रीत्वविशिष्टजातार्थप्रत्ययस्येति शेषः। **आकृतिगणत्वादिति**। स्त्रीत्वविशिष्टजातार्थवृत्त्योरनयोः पिप्पल्यादौ निवेशे भाष्योदाहरणमेव प्रमाणम्। **स्त्रियामित्येवेति**। तथा भाष्यादिति भावः। फल्गुनी, अषाढा इत्याभ्यां क्रमात् टः अन् च स्त्रीत्वविशिष्टजातार्थे वक्तव्यावित्यर्थः। **फल्गुनीति**। फल्गुन्योर्जातेत्यर्थः। नक्षत्राणोऽपवादः टप्रत्ययः। 'यस्येति च' इति इकारलोपः। जातार्थस्त्रीत्वे टित्वाद् ङीप्। **अषाढेति**। अषाढासु जातेत्यर्थः। नक्षत्राणोऽपवादः अन, 'यस्येति च' इत्याकारलोपः। जातार्थे स्त्रीत्वे टाप्। 'श्रविष्ठाफल्गुनी—' इत्यादिना टानोर्लुक् तु न, विधानसामर्थ्यात्। **छण्वक्तव्य इति**। नक्षत्राणोऽपवादः। विधिसामर्थ्यादस्यापि न लुक्। **अस्त्रियामपीति**। अत्र स्त्रियामिति न संबध्यते, भाष्ये तथोदाहरणादिति भावः। **श्राविष्ठीय इति**। श्रविष्ठासु जात इत्यर्थः। छण्, ईयः, 'यस्येति च' इत्याकारलोपः णित्त्वादादिवृद्धिः। **आषाढीय इति**। अषाढासु जात इत्यर्थः। **जे प्रोष्ठपदानाम्**। आदिवृद्धिप्रकरण उत्तरपदस्येत्यधिकारे इदं सूत्रम्, तदाह—**प्रोष्ठपदानामिति**। जशब्देन जातार्थप्रत्ययो विवक्षितः, तदाह—**जातार्थ इति**। प्रोष्ठपदानामिति बहुवचनस्य प्रयोजनमाह—**बहुवचनेति**। **भद्रपाद इति**। भद्रपदासु जात इत्यर्थः **स्थानान्तगोशाल**। **एभ्य इति**। स्थानान्त,

---

किम्, अवन्ती, कुन्ती, कुरुः। **श्रविष्ठास्विति**। श्रविष्ठा, धनिष्ठा। **इत्यादीति**। आदिशब्दादनुराधः, स्वातिः, तिष्यः, पुनर्वसुः, हस्तः, विशाखः, अषाढः, बहुलः। कृत्तिकावाची बहुलाशब्दाष्टान्तः, तस्य समाहारद्वन्द्वेन ह्रस्वनिर्देशः सूत्रे। **उपसंख्यानमिति**। लुक इति शेषः। **चित्रेति**। 'लुक्तद्धित—' इति लुकि पुनष्टाप्।

भद्रपादः । १४१० स्थानान्तगोशालखरशालाच्च । ( ४-३-३५ ) एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थाने जातो गोस्थानः । गोशालः । खरशालः । 'विभाषा सेना-' (सू ८२८) इति नपुंसकत्वे ह्रस्वत्वम् । १४११ वत्सशालाभिजिदश्वयुक्छतभिषजो वा । (४-३-३६) एभ्यो जातार्थस्य लुग्वा स्यात् । वत्सशाले जातो वत्सशालः, वात्सशालः इत्यादि । 'जातार्थे प्रतिप्रसूतोऽण्वा डिद्वक्तव्यः' ( वा २६९० ) । शातभिषजः, शातभिषः, शतभिषक् । १४१२ नक्षत्रेभ्यो बहुलम् ( ४—३—३७ ) जातार्थप्रत्ययस्य बहुलं लुक् स्यात् । रोहिणः, रौहिणः । १४१३ कृतलब्धक्रीतकुशलाः । ( ४—३—३८ ) 'तत्र' इत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः । १४१४ प्रायभवः ।

---

गोशाल, खरशाल एतेभ्य इत्यर्थः । गोस्थान इति । गोस्थाने जात इत्यर्थः । गोशाल इति । गोशाले जात इत्यर्थः । एवं खरशालः । सर्वत्र अणो लुकि नादिवृद्धिः । ननु शाला-शब्दस्य स्त्रीलिङ्गत्वाद् ह्रस्वनिर्देशोऽनुपपन्न इत्यत आह—विभाषा सेनेति । लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि लुक् । वत्सशालाभिजित् । एभ्य इति । वत्सशाल, अभिजित्, अश्वयुज् इत्येभ्य इत्यर्थः । परस्येति शेषः । इत्यादीति । अभिजिति जात आभिजितः, अभिजित् । अश्वयुजि जात आश्वयुजः, अश्वयुक् । शतभिषजि जातः शात-भिषजः, शतभिषक् । जातार्थ इति । 'कालाट्ठञ्' इति ठञा निवर्तित औत्सर्गिकोऽण् संधि-वेलादिसूत्रेण पुनरुत्थितः डिद्वा वक्तव्य इत्यर्थः । 'दृष्टं साम' इति सूत्रभाष्ये इदं वार्तिकं दृष्टम् । शातभिष इति । अणि डित्वपक्षे टिलोपः । नक्षत्रेभ्यो बहुलम् । रोहिण इति । रोहिण्यां जात इत्यर्थः । नक्षत्राणो लुकि आदिवृद्धिनिवृत्तौ 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययनिवृत्तिः । न च तथा सति तकारस्य नकारोऽपि निवर्तेतेति वाच्यम्, न हि रोहितशब्दोऽयं वर्णविशेषवाचकः, येन 'वर्णादनुदात्तात्-' इति ङीपा निवृत्तौ तकारोऽपि निवर्तेत । किंतु रोहिणीशब्दोऽयमव्युत्पन्नो नक्षत्रविशेषे रूढः । 'रोहिणी नक्षत्रे' इति गौरादिपाठाद् ङीष् । अत एव 'रोहिणी नक्षत्रं प्रजापतिर्देवता' इत्यादौ अन्तोदात्तत्वं श्रूयमाणं न विरुध्यते । अन्यथा 'वर्णानां तणतिनितान्तानाम्' इति आद्युदात्तत्वं स्यादित्यलम् । कृतलब्ध । तत्रेत्येवेति । 'तत्र जातः' इत्यनन्तरस्यैवानुवर्तते । जात इति तु निवृत्तमित्यर्थः । तथा च कृतो लब्धः क्रीतः कुशलो वेत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः । स्रौघ्न इति । औत्स

---

टानाविति । विधानसामर्थ्यादेतयोर्न लुक् । स्थानान्त । गोशालेत्यत्र 'विभाषा सेना-' इति नपुंसकत्वे ह्रस्वत्वं तस्मात् खरशालेऽप्येवमेव । न चैवं स्त्रीत्वपक्षे लुङ् न स्यादिति शङ्क्यम्, लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेरित्याहुः । यद्यपि टाबन्ततया पाठेऽप्येकदेशविकृतन्यायेन क्लीबेऽपीष्टं सिध्यति, तथापि लाघवार्थं ह्रस्व पाठः । नपुंसकत्वे ह्रस्वत्वमिति । सूत्र इति शेषः । वत्सशाले जात इति । वत्सशालायामित्यपि बोध्यम् । इत्यादीति । आदिशब्दादभिजित्, आभिजितः, अश्वयुक्, आश्वयुजः । प्रतिप्रसूत इति । कालाट्ठञा निवर्त्यमानो य औत्सर्गिकोऽण्

( ४—३—३९ ) 'तत्र' इत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः । १४१५ उपजानूपकर्णोपनीवेष्ठक् । ( ४—३—४० ) औपजानुकः । औपकर्णिकः । औपनीविकः । १४१६ संभूते । ( ४—३—४१ ) स्रुघ्ने संभवति स्रौघ्नः । १४१७ कोशाड्ढञ् । ( ४—३—४२ ) कौशेयं वस्त्रम् । १४१८ कालात्साधुपुष्प्यत्पच्यमानेषु । ( ४—३—४३ ) हेमन्ते साधुर्हैमनः प्रावारः । वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः । शरदि पच्यन्ते शारदाः शालयः । १४१९ उप्ते च ( ४—३—४४ ) हेमन्ते उप्यन्ते हैमन्ता यवाः । १४२० आश्वयुज्या

---

गिकोऽण् । राष्ट्रे कृतो राष्ट्रिय इत्याद्यप्युदाहार्यम् । प्रायभवः । तत्रेत्येवेति । प्रायभव इत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः । प्रायशब्दस्य व्याख्यानम्—बाहुल्येनेति । तत्र भव इत्येव सिद्धत्वात् प्रत्याख्यातमिदं भाष्ये । उपजानूपकर्ण । प्रायभव इत्यर्थे उपजानु उपकर्ण उपनीवि इत्येभ्यः ठगित्यर्थः । उपजान्वादिषु समीपेऽव्ययीभावः । औपजानुक इति । जानुनः समीपमुपजानु । तत्र प्रायभव इत्यर्थः । उगन्तात्परत्वात् ठस्य कः । औपकर्णिक इति । कर्णस्य समीपमुपकर्णम्, तत्र प्रायभव इत्यर्थः । औपनीविक इति । नीवेः समीपमुपनीवि, तत्र प्रायभव इत्यर्थः । संभूते । तत्रेत्येव । सप्तम्यन्तात्सम्भूतेऽर्थे अणादयो घादयश्च यथायथं स्युरित्यर्थः । संभवः संभावना । कोशाड्ढञ् । कौशेयं वस्त्रमिति । कृमिविशेषकोशस्य विकार इत्यर्थः, 'विकारे कोशाड्ढञ्' इति वार्तिकात् । कालात्साधुपुष्प्यत् । तत्रेत्येव । साधुः, पुष्प्यत् पच्यमानम्, इत्यर्थेषु सप्तम्यन्ताद्यथाविहितप्रत्ययाः स्युरित्यर्थः 'पुष्प विकसने' इति दैवादिकाल् लटः शतरि पुष्प्यदिति भवति । हैमनःप्रावार इति । 'सर्वत्राण् च तलोपश्च' इत्यणि तलोपः । वासन्त्य इति । 'टिड्ढ—' इति ङीप् । शारदा इत्यत्र ऋत्वण् । 'तत्र भवः' इति यावत् कालादित्यनुवर्तते । उप्ते च । तत्रेत्येव । कालवाचिनः सप्तम्यन्तादुप्तेऽर्थे यथाविहितं प्रत्ययाः स्युः । उप्यन्त इति । 'डुवप् बीजसन्ताने' भूत-

---

'सन्धिवेलादि—' सूत्रेण पुनरभ्यनुज्ञात इत्यर्थः । कृतलब्ध । ननु कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोर्ग्रहणेन । सत्यम्, कृतत्वक्रीतत्वप्रकारकबोधेऽपि प्रत्ययार्थं तद्ग्रहणम् । अतएव जाते लुग्भाजामपि कृते न लुक् । प्राय । कादाचित्कभवनाश्रयः प्रायभावः । तेन 'तत्र भवः' इत्यनेन न गतार्थतेत्याहुः । भाष्ये तु प्रत्याख्यातमेतत् । 'प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात्' इति । उपजानूप । त्रयोऽप्यमी सामीप्येऽव्ययीभावाः । तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । संभूते । इह तन्त्रादिना संभावना, आधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते । स्रौघ्न इति । स्रुघ्ने संभाव्यते तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः । कोशात् । कौशेयमिति । वस्त्रविशेषे योगरूढोऽयम् । कोशे संभवस्तु सत्कार्यवादाभिप्रायेण । मतान्तरे तु विकारप्रकरणे 'एण्या ढञ्' इत्यस्यानन्तरं 'कोशाच्च' इति पठितव्यम् । तथा च वार्तिकं 'विकारे कोशाड्ढञ् संभूते ह्यर्थानुपपत्तिः' इति । कालात् । पुष्प्यदिति दैवादिकः शत्रन्तस्तदाह—पुष्प्यन्तीति । उप्ते च ।

वुञ्। (४-३-४५) ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः। १४७१ ग्रीष्मवसन्तादन्यतरस्याम्। (४-३-४६) पक्षे ऋतवण्। ग्रैष्मकम्, ग्रैष्मम्। वासन्तकम्, वासन्तम्। १४७२ देयमृणे। (४-३-४७) 'कालात्' इत्येव। मासे देयमृणं मासिकम्। १४७३ कलाप्यश्वत्थयवबुसाद्वुन्। (४-३-४८) यस्मिन्काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी। तत्र देयमृणं कलापकम्। अश्वत्थस्य फलमश्वत्थः। तद्युक्तः कालोऽप्यश्वत्थः। यस्मिन्काले अश्वत्थाः फलन्ति, तत्र देयमृणमश्वत्थकम्। यस्मिन्यव-बुसमुत्पद्यते तत्र देयमृणं यवबुसकम्। १४७४ ग्रीष्मावरसमाद्वुञ्। (४-३-४९) ग्रीष्मे देयमृणं ग्रैष्मकम्। आवरसमकम्। १४७५ संवत्सराग्रहायणीभ्यां ठञ्च। (४—३—५०) चाद्वुञ्। सांवत्सरिकम्, सांवत्सरकम्। आग्रहायणिकम् आग्रहायणकम्। १४७६ व्याहरति मृगः (४—३—५१) कालवाचिन

---

कालस्त्वविवक्षित इति भावः। आश्वयुज्या वुञ्। तत्रोप्त इत्येव। सप्तम्यन्तादाश्वयुजीशब्दाद् उप्तेऽर्थे वुञ् स्यादित्यर्थः। ठञोऽपवाद इति। 'कालाट्ठञ्' इति विहितस्येत्यर्थः। आश्वयुजका माषा इति। अश्वयुग्भ्यां युक्ता पौर्णमासी आश्वयुजी, तत्रोप्ता इत्यर्थः। ग्रीष्मवसन्तात्। ग्रीष्माद् वसन्ताच्च सप्तम्यन्तादुप्ते वुञ् वाऽर्थः। देयमृणे। कालादित्येवेति। तत्रेत्यप्यनुवर्तते वुञिति निवृत्तम्। सप्तम्यन्तात्कालवाचिनो देयमित्यर्थे यथाविहितं प्रत्ययाः स्युः। तस्मिन् देयद्रव्ये ऋणे सतीत्यर्थः। मासिकमिति। 'कालाट्ठञ्'। कलाप्यश्वत्थ। कलापिन्, अश्वत्थ, यवबुस एभ्यः कालवाचिभ्यः सप्तम्यन्तेभ्यो देयमृणमित्यर्थे वुन् स्यादित्यर्थः। कलापकमिति। वुन्, अकादेशः, 'नस्तद्धिते' इति टिलोपः। अश्वत्थस्य फलमश्वत्थ इति। विकारप्रत्ययस्य फले लुगिति भावः। अश्वत्थशब्दस्य प्लक्षादित्वं तु तत्र 'प्लक्षादिभ्योऽण्' इति फले अणो विधानसामर्थ्याल्लुगभावे अश्वत्थशब्दः फले लाक्षणिक इति भावः। ग्रीष्मावरसमाद्वुञ्। समाशब्दो वत्सरे नित्यस्त्रीलिङ्गबहुवचनः। ग्रीष्मः अवरसमाः अनयोः समाहारद्वन्द्वात्पञ्चमी। तत्र देयमृणमित्यर्थे आभ्यां वुञित्यर्थः। आवरसमकमिति। अवरासु समासु देयमृणमित्यर्थः। 'तद्धितार्थ—' इति समासः। संवत्सराग्रहायणीभ्यां ठञ्च। देयमृणमित्यर्थे सप्तम्यन्तादिति शेषः। संधिवेलादिगणे 'संवत्सरात् फलपर्वणोः' इति पठितम्। तत्र फले देयत्वेन विवक्षिते प्राप्तं अण् अनेन ठञा बाध्यते।

---

कालादित्येव। योगविभाग उत्तरार्थः। उप्यन्त इति। सूत्रे भूतकालोऽर्थमिति भावः। आश्वयुज्या वुञ्। ञकारः स्वरार्थः उत्तरत्र वृद्ध्यर्थश्च। आश्वयुज्यामिति। अश्विनीनक्षत्रपर्यायः अश्वयुक्, तद्युक्ता पौर्णमासी आश्वयुजी तत्रेत्यर्थः। देयमृणे। ऋणे किम्, मासे देया भिक्षा। अश्वत्थ इति। 'फले लुक्'। इह पुल्लिङ्गनिर्देशो यद्यप्ययुक्तः, तथापि फले अश्वत्थशब्दः औपचारिक इत्याशयेन पुल्लिङ्गप्रयोग इत्याहुः। ठञ्चेति। 'संवत्सराग्रहायणीभ्यां वा' इत्येव सुवचम्। न च 'वा' इति वक्तव्ये ठञ्ग्रहणं व्यर्थम्, संधिवेलादिषु 'संवत्सरात्फलपर्वणोः' इति पठ्यते, तत्र

सप्तम्यन्ताच्छब्दायते इत्यर्थे अणादयः स्युः, यो व्याहरति स मृगश्चेत् । निशायां व्याहरति नैशो मृगः, नैशिकः । **१४२७ तदस्य सोढम्** ( ४–३—५२ ) 'कालात्' इत्येव । निशासहचरितमध्ययनं निशा, तत्सोढमस्य नैशिकः, नैशः । **१४२८ तत्र भवः** । (४–३–५३) स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः । **१४२९ दिगादिभ्यो यत्** । ( ४–३–५४ ) दिश्यम् । वर्ग्यम् । **१४३० शरीरावयवाच्च** । ( ४–३–५५ ) दन्त्यम् । कन्ठ्यम् । **१४३१ प्राचां नगरान्ते** ( ७–३–२४ ) प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञिति णिति किति च । सुह्मनगरे भवः सौह्मनागरः । पौण्ड्रनागरः । 'प्राचाम्' किम्–मद्रनगरम् उदक्षु, तत्र भवा माद्रनगरः । **१४३२ जङ्गलधेनुवलजा-**

---

**व्याहरति मृगः** । तत्र कालादित्येव । देयमृण इति निवृत्तम् । **तदस्य सोढम्** । अस्मिन्नर्थे प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युः । सोढमित्यस्य अभ्यस्तमित्यर्थः । **नैशिकः, नैश इति** । 'निशाप्रदोषाभ्यां च' इत्यण्ठञौ । **तत्र भवः** । कालादिति निवृत्तम् । अस्मिन्नर्थे सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । भवनं सत्ता, जननमुत्पत्तिरिति भेदः । **स्रौघ्न इति** । औत्सर्गिकोऽण् । **राष्ट्रिय इति** । 'राष्ट्रावार–' इति घः । **दिगादिभ्यो यत्** । भव इत्यर्थे सप्तम्यन्तेभ्य इति शेषः । **दिश्यमिति** । दिशि भवमित्यर्थः । **शरीरावयवाच्च** । भव इत्यर्थे सप्तम्यन्तेभ्य इति शेषः । **दन्त्यमिति** । दन्ते भवमित्यर्थः । 'यस्येति च' इत्यकारलोपः । एवं कण्ठ्यम् । **प्राचां नगरान्ते** । अङ्गस्येत्यधिकृतं नगरान्ते इति सप्तम्यनुरोधेन सप्तम्या विपरिणम्यते । 'उत्तरपदस्य' इत्यधिकृतम् । 'हृद्भगसिन्ध्वन्ते–' इति सूत्रात् 'पूर्वपदस्य' इत्यनुवर्तते । तदयमर्थः––प्राचां यन्नगरं तदन्ते अङ्गे पूर्वपदस्योत्तरपदस्य च अचामादेरचो वृद्धिः स्याद् ञिति णिति किति च तद्धित इति । सुह्मनगरमिति पुण्ड्रनगरमिति च प्राग्देशस्य [1]पूर्वान्तावधिः । । **मद्रनगरम्** । **उदक्ष्विति** । उदग्देशे मद्रनगरं नाम किञ्चिन्नगरमस्ती-

---

फले ऋणत्वेन विवक्षिते अणं बाधित्वा ठञेव यथा स्यादिति काशिकादावुक्तमिति वाच्यम्, तस्मै हितास्तद्धिता इत्यन्वर्थसंज्ञाकरणबलेनात्राण्प्रत्ययो न भवेदिति वक्तुं शक्यत्वादिति नव्याः । **नैशिक इति** । 'निशाप्रदोषाभ्यां च' इति वा ठञ् । **तत्र भवः** । 'कालात्' इति निवृत्तम् । कालसम्बद्धस्य 'तत्र' इत्यस्य निवृत्तये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य 'तत्' इत्यस्य व्यावृत्तये तत्रग्रहणमस्त्विति वाच्यम्, 'तदस्य–' इति सूत्रस्यैत उत्तरत्रापि सुपठत्वात् । यद्यपि भूधातुरुत्पत्तावपि वर्तते तथापीह सत्तार्थ एव वर्तते, 'तत्र जातः' इति पृथग्ग्रहणादिति बोध्यम् । **दिगादिभ्यो** । दिश्, वर्ग, पूग, पक्ष, रहस्, उखा, साक्षिन्, आदि, अन्त, मुख, जघन, मेघ, यूथ, 'उदकात्संज्ञायाम्' न्याय, वंश कालेत्यादिदिगादिः । मुखजघनयोः पाठोऽत्राशरीरावयवार्थः । सेनाया मुखे जघने च भवं मुख्यम्, जघन्यम् । **प्राचां नगरान्ते** । सप्तमीनिर्देशाद् 'अङ्गस्य' इत्यधिकृतमपि सप्तम्यन्तेन विपरिणम्यते,

---

१ 'पूर्वान्तावयवः' इति कः ।

न्तस्य विभाषितमुत्तरम् । ( ७-३-२५ ) जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य तु वा ञिति णिति किति च । कुरुजङ्गले भवं कौरजङ्गलम्, कौरुजाङ्गलम् । वैश्वधेनवम्, वैश्वधैनवम् । सौवर्णवलजम्, सौवर्णवालजम् । १४३३ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् । ( ४-३-५६ ) दार्तेयम् । कौक्षेयम् । कलशिर्घटः, तत्र भवं कालशेयम् । १४३४ ग्रीवाभ्योऽण् च । ( ४-३-५७ ) चाड्ढञ् । ग्रैवेयम्, ग्रैवम् । १४३५ गम्भीराञ्ञ्यः । ( ४-३-५८ ) गम्भीरे भवं गाम्भीर्यम् । 'पञ्चजनादुपसंख्यानम्' ( वा २८६८ ) पाञ्चजन्यम् । १४३६ अव्ययीभावाच्च । ( ४-३-५९ ) परिमुखं भवं पारिमुख्यम् । 'परिमुखादिभ्य एवेष्यते' ( वा २८६६ ) । नेह—औपकूलम् । १४३७

---

स्यर्थः । जङ्गलधेनु । जङ्गलाद्यन्तस्याङ्गस्येति । जङ्गल, धेनु, वलज इत्यन्तस्येत्यर्थः । कुरुजङ्गल इति । भवमिति शेषः । कुरुजङ्गलादिशब्दा देशविशेषेषु । दृतिकुक्षि । भव इत्यर्थे दृति, कुक्षि, कलशि, वस्ति, अस्ति, अहि इत्येतेभ्य इति शेषः । दार्तेयमिति । दृतौ भवमित्यर्थः । ढञ् एय, आदिवृद्धिः, रपरत्वम् दृतिश्चर्मभस्त्रिका । कौक्षेयमिति । धूमादित्वाद् वुञि प्राप्ते ढञ् । कलशिर्घट इति । 'कलशिर्मन्थनपात्रम्' इत्यमरव्याख्यातारः । 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः । तत्र भवो वास्तेयः । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । सत्ताया धनं चेति न्यासकारो हरदत्तश्च । तत्र भवं आस्तेयं । अहिः सर्पः, तत्र भवं आहेयं । ग्रीवाभ्योऽण् च । 'शरीरावयवाच्च' इति यतोऽपवादः । ग्रीवाशब्दाश्च धमनीसंघे वर्तते । तत्र उद्भूतावयवभेदसंघविवक्षायां बहुवचनान्तात्प्रत्यय इति सूचयितुं बहुवचनम् । तिरोहितावयवभेदविवक्षायां तु एकवचनान्तादप्यण्ढञौ स्त एव । गम्भीराञ्ञ्यः । गाम्भीर्यमिति । यञ्विधौ तु स्त्रियां 'प्राचां ष्फ तद्धितः' इति ष्फः स्यात् । अव्ययीभावाच्च । ञ्य इति शेषः । परिमुखादिभ्य इति । यद्यपीदं वार्तिकं भाष्ये न दृष्टम्, तथापि दिगादिगणपाठानन्तरं परिमुखादिगणपाठसामर्थ्यादिहाव्ययीभावपदं परिमुखादिपरमिति गम्यते । न

---

तदाह—नगरान्तेऽङ्ग इति । दृतिकुक्षि । दृतिश्चर्मविकारः, शरीरावयवविशेषश्च कुक्षिशब्दो धूमादिस्तेन। 'धूमादिभ्यश्च' इति वुञि प्राप्ते अनेन ढञ् । कलशिर्मन्थपात्रम् 'कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति' इति माघः । 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः । तत्र भवं वास्तेयम् । 'अस्ति' इति तिङन्तप्रतिरूपका निपातः । स च तिङन्तेन समानार्थो भिन्नार्थश्च । आद्यो यथा—अस्तिक्षीरा गौः । द्वितीयो यथा—अस्तिमान् ; धनवानित्यर्थः तदिहाविशेषाद्दुभयोरपि ग्रहणमास्तेयमिति हरदत्तः । अहौ भवमाहेयम् । 'त्रिष्वाहेय विषास्थ्यादि' इत्यमरः । ग्रीवाभ्योऽण् च । 'शरीरावयवाच्च' इति यतोऽपवादः । ग्रीवाशब्दो धमनीसङ्घाते वर्तते, तत्र उद्भूतावयवसङ्घातविवक्षया सूत्रे बहुवचनम् । तिरोहितावयवसंघातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ स्तः

---

१ आदिपदात् प्रतिशाखं भवं प्रातिशाख्यं व्याकरणम्, तच्च शौनकीयं तैत्तिरीयं कात्यायनीयम् आथर्वणिकं च तत्तच्छाखायां नियतं वर्तते ।

अन्तः पूर्वपदाट्ठञ्। (४-३-६०) 'अव्ययीभावात्' इत्येव। वेश्मनीत्यन्तर्वेश्मम्। तत्र भवमान्तर्वेश्मिकम्। आन्तर्गणिकम्। 'अध्यात्मादेष्ठञिष्यते' (वा २८६९) अध्यात्मं भवं आध्यात्मिकम्। **१४३८ अनुशतिकादीनां च** (७-३-२०) एषामुभयपदवृद्धिः स्याद् ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। अध्यात्मादिराकृतिगणः। **१४३९ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्।** (७-३-१) एषां पञ्चानां वृद्धिप्राप्तावादेरच आद् ञिति णिति किति च। दाविकम्। देविकाकूले भवा दाविकाकूलाः शालयः। शिंशपाया विकारः शांशपश्चमसः। 'पलाशादिभ्यो वा'

---

ह्यष्टाध्याय्यां परिमुखादिगणस्य कार्यान्तरमस्ति। **औपकूल इति।** उपकूलं भव इत्यर्थः। अव्ययीभावत्वेऽपि परिमुखाद्यनन्तर्भावाद् न ञ्यः। **अन्तःपूर्वपदाट्ठञ्।** **वेश्मनीत्यन्तर्वेश्समिति।** विभक्त्यर्थे अव्ययीभावः। 'अनश्च' इति टच्। **आन्तर्वेश्मिकमिति।** ठञ् इकः, सुब्लुक्, टिलोपः, आदिवृद्धिः। **आन्तर्गणिकमिति।** गणे इत्यन्तर्गणम्। तत्र भवमित्यर्थः। **आध्यात्मिकमिति।** आत्मनीत्यध्यात्मम्। तत्र भवमित्यर्थः। **अनुशतिकादीनां च।** आदिवृद्धिप्रकरणे उत्तरपदस्य, पूर्वपदस्य चेत्यधिकारे इदं सूत्रम्, तदाह—**एषामिति।** **आधिदैविकमिति।** देवेष्वित्यधिदेवम्, तत्र भवमित्यर्थः। ठञि उभयपदवृद्धिः। **आधिभौतिकमिति।** भूतेष्वित्यधिभूतम्। तत्र भवमित्यर्थः। **ऐहलौकिकमिति।** इह लोके भवमित्यर्थः। **पारलौकिकमिति।** परलोके भवमित्यर्थः। सर्वत्र ठञि उभयपदवृद्धिः। **देविका।** आदिवृद्धिप्रकरणे इदं सूत्रम्। **एषामिति।** देविका, शिंशपा, दित्यवाह्, दीर्घसूत्र, श्रेयस् इत्येषामित्यर्थः। **वृद्धिप्राप्ताविति।** आदिवृद्धिप्राप्तौ तदपवादत्वेन आदेरच आकारः स्यादित्यर्थः। **दाविकमिति।** देविका नाम नदी, तस्यां भवमित्यर्थः। **दाविकाकूला इति।**

---

एव। **ग्रैवेयमित्यादि।** ग्रीवासु भवं ग्रीवायामिति वा विग्रहः। **गम्भीराञ्ञ्यः।** **पञ्चजनादुपसंख्यानमिति।** पाञ्चजन्यम्। **परिमुखमिति।** यदि परिशब्दादिह वर्जनं गम्यते, तदा 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः। यदि तु सर्वतोभावः, तदा त्वस्मादेव निपातनादव्ययीभाव इत्याहुः। **परिमुखादिभ्य एवेति।** अयं भावः—दिगादिगणानन्तरं परिमुख, परिहनु, पर्योष्ठ, पर्युलूखलेत्यादि परिमुखादिगणः पठ्यते, तत्साहचर्यादिह सूत्रे अव्ययीभावशब्देन परिमुखादिरेव गृह्यते। तस्य गणस्य कार्यान्तराभावादिति। नन्वेवं 'परिमुखादेः' इति सूत्रे विशिष्यैव क्रियताम्, किमनेन प्रयासेन। उत्तरत्र 'अव्ययीभावात्' इत्यस्यापेक्षायामपि तत्रैव तत्करणौचित्यादिति चेत्। अत्राह हरदत्तः—'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवतीति। परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः। तथा च 'शाखृ व्याप्तौ' इति धातौ प्रतिशाखं भवं प्रातिशाख्यम्, 'अव्ययीभावाच्च' इति भवार्थे ञ इति माधवः। **अन्तर्वेश्ममिति।** 'नपुंसकादन्यतरस्याम्' इति समासान्तष्टच्। **अध्यात्ममिति।** 'अनश्च' इति टच्।

(सू १५२१) इत्यञ् । दित्यौह इद दात्यौहम् । दीघसत्रे भव दाघसत्रम् । श्रेयसि भव श्रायसम् । १४४० ग्रामात्पर्यनुपूर्वात् । (४-३-६१) ठञ् स्यात् । 'अव्ययीभावात्' इत्येव । पारिग्रामिक । आनुग्रामिक । १४४१ जिह्वामूलाङ्गुलेश्छ । (४-३-६२) जिह्वामूलीयम् । अङ्गुलीयम् । १४४२ वर्गान्ताच्च । (४-३-६३) कवर्गीयम् । १४४३ अशब्दे यत्खावन्यतरस्याम् । (४-३-६४) पक्षे पूर्वेण छ । मद्वर्ग्यं, मद्वर्गीण मद्वर्गीय । अशब्दे किम्-कवर्गीयो वर्णः । १४४४ कर्णललाटात्कनलङ्कारे । (४-३-६५) कर्णिका । ललाटिका । १४४५ तस्य व्याख्यान इति च व्याख्यातव्यनाम्न । (४-३-६६) सुपा व्याख्यान सौपो ग्रन्थ । तैङ । कार्त । सुप्सु भव सौपम् । १४४६

---

उत्तरपदवृद्धिभ्रमनिरासाय इदमुदाहरणम्, अस्य सूत्रस्य तदधिकारबहिर्भूतत्वादिति भाव । शाशप इति । इकारस्य आकार, आदि वृद्धि, शिशपाशब्दस्य पलाशादौ पाठात् पाक्षिकाञ् । तदभावेऽणित्यर्थ । दात्यौहमिति । दित्यवाह् शब्दात् 'तस्येदम्' इत्यणि 'वाह ऊठ्' इति सम्प्रसारणम्, पूर्वरूपम् । 'एत्येधत्यूठ्सु' इति वृद्धि । इकारस्य आदि वृद्ध्यपवाद आकार । दाघसत्रमिति । 'तस्येदम्' इत्यण्, आदेरीकारस्य आकार । श्रायसमिति । तत्र भव इत्यणि एकारस्य आकार । ग्रामात्पर्यनुपूर्वात् । ठञ् स्यादिति । 'अन्त पूर्वपदात्—' इत्यत तदनुवृत्तेरिति भाव । जिह्वामूलाङ्गुलेश्छ । 'शरीरावयवाच्च' इति यति यतोऽपवाद वर्गान्ताच्च । कवर्गीयमिति । कादिवर्गे भव मित्यर्थ । अशब्दे । वर्गान्तात् छ इति शेष । मद्वर्ग्यं, मद्वर्गीण इति । मत्पक्षे भव इत्यर्थ । कर्णललाटात् । 'शरीरावयवाच्च' इति यतोऽपवाद । कर्णिका ललाटिकेति । कर्णे ललाटे भवोऽलङ्कार इत्यर्थ । स्त्रीत्व लोकात् । टापि 'प्रत्ययस्थात्—'इति इत्वम् । तस्य व्याख्यान इति च । व्याख्यायते अनेनेति व्याख्यानो ग्रन्थ, करणे ल्युट् । तस्य व्याख्यान इति विग्रहे व्याख्यानव्यग्रन्थप्रतिपादकात् षष्ठ्यन्ताद् भव इत्यर्थे च सप्तम्यन्ताद्यथाविहित प्रत्यया स्युरित्यर्थ । चकार 'तत्र भव' इत्यस्य समुच्चयार्थ । सौप इति । औत्सर्गिकोऽण् । तैङ इति । तिङां व्याख्यानो ग्रन्थ इत्यर्थ । कार्त इति । कृता व्याख्यान इत्यर्थ । अणि आदि वृद्धौ रपरत्वम् । भवार्थे उदाहरति—सुप्सु भव सौपमिति । नच 'तस्येदम्' 'तत्र भव' इत्याभ्यामेव सिद्धत्वादिद सूत्र व्यर्थमिति वाच्यम्, अर्थद्वयनिर्देशस्या

---

कर्णललाटात् । यतोऽपवाद । अलङ्कारे किम्, कर्ण्यं ललाट्यम् । तस्य व्याख्यान इति च । व्याख्यायते येन स व्याख्यान । करणे ल्युट् । इतिशब्दो वाक्यार्थ परामृशति । तत्समीप श्रूयमाणश्चकार 'तत्र भव' इति वाक्यार्थमाक्षिपति । नाम प्रतिपादकम्, तच्च शक्त्या लक्षणया वेत्यत्र नाग्रह । तथा च 'षष्ठ्यन्ताद्व्याख्यान करणार्थे, सप्तम्यन्तात्तु भवार्थे, व्याख्यातव्यस्य ग्रन्थस्य प्रतिपादकात्प्रत्यया स्यु इति सूत्रार्थ । व्याख्यातव्यनाम्न किम्, पाटलीपुत्रस्य व्याख्यानी सुकोसला पाटलीपुत्रा हि तया व्याख्यायते 'ईदृक्सन्निवेशविशिष्टम्' इति । न त्विद व्याख्या

बह्वचोऽन्तोदात्ताट्ठञ् । ( ४-३-६७ ) षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम् । तस्य व्याख्यानस्तत्र भवो वा षात्वणत्विकः १४४७ क्रतुयज्ञेभ्यश्च । ( ४-३-६८ ) सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ । तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः । वाजपेयिकः । राजसूयिकः । पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । अनन्तोदात्तार्थ आरम्भः । १४४८

---

अपवादभूतवक्ष्यमाणठञादिविधानायावश्यकत्वादिति भाष्ये स्पष्टम् । बह्वचोऽन्तोदात्ताट्ठञ् । अन्तोदात्ताद्बह्वच उक्तविषये ठञ् स्यात् । अणोपवादः । क्रतुयज्ञेभ्यश्च । सोमेति । सोमलताद्रव्यकयागेषु क्रतुशब्दो यज्ञशब्दश्च प्रसिद्ध इत्यर्थः । तर्ह्यन्यतरग्रहणं व्यर्थम्, बहुवचनेन स्वरूपग्रहणनिवृत्तेरित्यत आह—तत्रेति । गृह्यन्त इति । ततश्च इह क्रतुशब्देन सोमयागाः, यज्ञशब्देन तदितरयागाः विवक्षिता इति भावः । एवं च सोमयागविशेषवाचिभ्यः, तदितरयागविशेषवाचिभ्यश्च उक्तविषये ठञित्यर्थः । पाकयज्ञिक इति । औपासनाग्निसाध्याः पार्वणस्थालीपाकादयः पाकयज्ञाः । तेषां व्याख्यानो ग्रन्थः, तेषु भव इति वार्थः । नावयज्ञिक इति । नूतनद्रव्यक आग्रयणाख्यो यज्ञो नवयज्ञः । ननु पूर्वसूत्रेण सिद्धे किमर्थमिदमित्यत आह—अनन्तोदात्तार्थ इति । वाजपेयशब्दो मध्योदात्तः तैत्तिरीयादौ प्रसिद्धः । यद्यपि अग्निष्टोमशब्दः अन्तोदात्त एव तैत्तिरीये दृष्टः नवयज्ञशब्दोऽपि षष्ठीसमासत्वात् समासस्वरेणान्तोदात्त एव । तथापि अन्यार्थमिदमन्तोदात्तेष्वपि परत्वात्

---

तव्यस्य नाम । ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात्, नामग्रहणं हि प्रसिद्ध्युपसंग्रहार्थमेव सूत्रे कृतम् । बह्वचो । अणोऽपवादः । बह्वचः किम्, द्व्यचष्ठक वक्ष्यतीत्येकाच् प्रत्युदाहार्यः । सौपम् । तैङम् । अन्तोदात्तात्किम्, संहितायाः संहितम् । 'गतिरनन्तरः' इत्याद्युदात्तोऽयम् । अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणाद् 'वर्णादनुदात्तात्—' इत्यत्र यथा । क्रतुयज्ञेभ्यश्च अग्निष्टोमस्य व्याख्यान इति । अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम्, ग्रन्थानामेव व्याख्येयताया उक्तत्वादित्याहुः । स्तुतिः स्तोमः । अग्नेः स्तोमोऽस्मिन्निति बहुव्रीहिः 'परादिश्च परान्तश्च' इत्यन्तोदात्तोऽयम् । पीयतेऽस्मिन्निति पेयः । 'कृत्यल्युटो बहुलम्' इत्यधिकरणे यत् । वाजो नाम यवागूभेदस्तस्य पेयो वाजपेयः । अयं हि कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । पेयशब्दस्य 'यतो नावः' इत्युदात्तत्वात् । राज्ञा क्षत्रियेण सूयते, राजा सोमः सूयते अत्रेति वा राजसूयः । 'राजसूयसूर्य—' इति क्यप् । तत एव निपातनात्समासः षष्ठीसमासो वा । अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव, धातुस्वरेण सूयशब्दस्याद्युदात्तत्वात् । असोमकेभ्य उदाहरति—पाकेति । अल्पपर्यायः पाकशब्दः पाकश्चासौ यज्ञश्चेति कर्मधारयः । स च समासस्वरेणान्तोदात्तः । नवैर्व्रीहिभिर्यजनं नवयज्ञः आग्रयणम् । 'यजयाचविच्छ—' इति नङ् । 'कर्तृकरणे कृता—' इति समासः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । अनन्तोदात्तार्थ इति । वाजपेयराजसूयार्थतया

अध्यायेष्वेवर्षेः । ( ४-३-६९ ) ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भव व्याख्यान चाध्याये ठञ् स्यात् । वसिष्ठेन दृष्टा मन्त्रा वसिष्ठः, तस्य व्याख्यान तत्र भवो वा वासिष्ठिकोऽध्याय । 'अध्यायेषु' किम् वासिष्ठी ऋक् । १४४६ पौरोडाशपुरोडाशात्ष्ठन् । (४-३-७० ) पुरोडाशसहचरितो मन्त्र पुरोडाश, स एव पौरोडाश, तत ष्ठन् । पौरोडाशिक । पुरोडाशिक । १४५० छन्दसो यदणौ । (४-३-७१ ) छन्दस्य, छान्दस । १४५१ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् । (४-३-७२ ) द्व्यच —ऐष्टिक ( शैषिक ) पाशुक । ऋत —चातुर्होतृक । ब्राह्मणिक । आर्चिक इत्यादि । १४५२ अणृगयनादिभ्य

---

प्रवचन इति न दोष । अध्यायेष्वेवर्षेः । वसिष्ठेन दृष्टो मन्त्रो वसिष्ठ इति । लक्षणयेति भाव । वासिष्ठिकोऽध्याय इति । कश्चिद् ग्रन्थविशेषोऽयम् । वासिष्ठी ऋगिति । ऋच अध्यायसमाख्याभावाद् न ठञिति भाव । पौरोडाश । उक्तविषय इति शेष । पुरोडाशेति । पुरोडाशशब्दसहिता मन्त्रो लक्षणया पुरोडाश इत्युच्यत इत्यर्थ । स एव पौरोडाश इति । प्रज्ञादित्वात्स्वार्थेऽणिति भाव । पौरोडाशिक इति । पौरोडाशात् ष्ठनि रूपम् । पुरोडाशिक इति । पुरोडाशशब्दात् ष्ठनि रूपम् । षित्वाद् ङीष् । पौरोडाशिकी, पुरोडाशिकी । छन्दसो यदणौ । तस्य व्याख्यान तत्र भव चेति शेष । छन्दस्य, छान्दस इति । छन्दसा व्याख्यान, तत्र भवा वेत्यर्थ । द्व्यज लक्षणस्य वक्ष्यमाणस्य ठकोऽपवाद । द्व्यजृद्ब्राह्मण । द्व्यच्, ऋत्, ब्राह्मण, ऋक्, प्रथम, अध्वर, पुरश्चरण, नामन्, आख्यात एभ्यष्ठक् स्यात् तस्य व्याख्यान तत्र भवे च । शैषिक इति । शेषस्य व्याख्यान तत्र भवा वेत्यर्थ । पाशुक इति । पशुयागप्रतिपादकग्रन्थ पशु, तस्य व्याख्यान तत्र भवा वेत्यर्थ । उक परत्वात् ठस्य क । ऋत इति । उदाहियत इत्यर्थ । चातुर्होतृक इति । 'चित्ति स्रुक्' इत्यादयो मन्त्राश्चतुर्होतारस्तैत्तिरीये प्रसिद्धा । तेषा व्याख्यान तत्र भवा वेत्यर्थ । ब्राह्मणिक आर्चिक इति । ब्राह्मणानि । मन्त्रव्यतिरिक्तवेदभागा, तेषामृचा वा व्याख्यान तत्र भवो वेत्यर्थ । इत्यादीति । प्राथमिक, आध्वरिक, पौरश्चरणिक, नामिक, आख्यातिक । अणृगयनादिभ्य । तस्य

---

अस्मिन्नारब्धे मध्यन्तोदात्तादपि यज्ञाभिधायिन परत्वादणेव भाव्यमित्याग्निष्टोमिक इत्याद्युदाहृतमिति भाव । अध्यायेष्वेवर्षेः । एवकार स्पष्टप्रतिपत्त्यर्थ । वासिष्ठीति । भवार्थेऽण् । पौरोडाश । षित्वाद् ङीष् । पौरोडाशिकी, पुरोडाशिकी । पुरोदाश्यते इति पुरोडाश । 'दाशृ दाने' कर्मणि घञ् । इहैव निपातनाद्डत्वम् । छन्दसो । छन्दशब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ स्त, द्व्यज्लक्षणस्य ठकोऽपवाद । छ दस्य इत्यादि । इहार्थयोर्यदणभ्या यथासख्य भवत्यस्वरितत्वादिति वाच्यम् । द्व्यजृत् । अणोऽपवाद । चातुर्होतृक इति । 'पृथिवी होता द्यौरध्वर्यु' इत्यादिमन्त्रस्य चतुर्होतेति नामधेयम् । इत्यादीति । आदिशब्दा त्प्राथमिक । आध्वरिक । पौरश्चरणिक । 'नामाख्यातग्रहण सङ्घातविगृही

(४-३-७३) ठञादेरपवादः। आर्गयनः। औपनिषदः। वैयाकरणः। **१४५३ तत आगतः** (४-३-७४) स्रुघ्नादागतः स्रौघ्नः। **१४५४ ठगायस्थानेभ्यः।** (४-३-७५) शुल्कशालाया आगतः शौल्कालिकः। **१४५५ शुण्डिकादिभ्योऽण्।** ( ४-३-७६ ) आयस्थानठकश्छादीनां चापवादः। शुण्डिकादागतः शौण्डिकः। कार्कणः। तैर्थः। औदपानः। **१४५६ विद्यायोनिसंवन्धेभ्यो वुञ्।** (४-३-७७) औपाध्यायकः पैतामहकः,। **१४५७ ऋतष्ठञ्।** ( ४-३-७८ ) वुञोऽपवादः। हौतृकम्। भ्रातृकम्। **१४५८ पितुर्यच्च।**

---

व्याख्याने तत्र भवे चेति शेषः। **आर्गयन इति**। ऋगयनम् ऋक्संहिता, तस्य व्याख्यानः तत्र भवो वेत्यर्थः। वह्वृचोऽन्तोदात्तात्' इति ठञि प्राप्ते अण्। **औपनिषद इति**। उपनिषदो व्याख्यानस्तत्र भवो वेत्यर्थः। एवं वैयाकरणः। 'न य्वाभ्याम्—' इत्यैच्। अण्ग्रहणं तु छवाधनार्थम्। अन्यथा अणा मुक्ते छो दुर्वारः स्यादित्याहुः। **तत आगतः**। अस्मिन्नर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। **स्रौघ्न इति**। औत्सर्गिकोऽण्। **ठगायस्थानेभ्यः**। तत आगत इत्यर्थे इति शेषः। हट्टादिषु स्वामिग्राह्यो भाग आयः। स यस्मिन् गृह्यते तदायस्थानम्, तद्वाचिभ्य इत्यर्थः। **शुण्डिकादिभ्योऽण्**। तत आगत इत्येव। शुण्डिकमायस्थानविशेषः पूर्वसूत्रविहितठगपवादः। **कार्कण इति**। कृकणादागत इति शेषः। 'कृकणपर्णाद्भारद्वाजे' इति छस्यापवादः। **तैर्थ इति**। धूमादिवुञोऽपवादः। **औदपान इति**। अत्र उत्सादित्वादञ् प्राप्तो भवति, पुनरण्ग्रहणात्। अन्यथा यथाप्राप्तविधाने आयस्थानठकं वाधित्वा अञेव स्यात्। **विद्यायोनि**। तत आगत इत्येव। **औपाध्यायकः, पैतामहक इति**। उपाध्यायात्पितामहाच्च आगत इत्यर्थः। **ऋतष्ठञ्**। ऋदन्ताद्विद्यायोनिसम्बन्धवाचिन इत्यर्थः। तत आगत इत्येव। **हौतृकम्, भ्रातृकमिति**। उकः परत्वात् ठस्य कः। **पितुर्यच्च**। यति

---

**तार्थम्**' इति वार्तिकम्। तत्र नामशब्दाद् द्व्यच्त्वादेव सिद्धे विगृहीतग्रहणमाख्यातार्थमिति ज्ञेयम्। नामिकः। आख्यातिकः। नामाख्यातिकः। **अणृगयन**। ऋगयनादिभ्यो भवव्याख्यानयोरर्थयोरण् स्यात्। **ठञादेरिति**। आदिशब्दाट्ठक्छयोः। **आर्गयन इति**। अयनशब्दो भावसाधनः, तेन समासे 'अनो भावकर्मवचनः' इत्यन्तोदात्तः, अभेदोपचाराद्भाववचनोऽपि ग्रन्थे वर्तते। इह 'वह्वचोऽन्तोदात्तात्' इति ठञ् प्राप्तः औपनिषद इत्यत्राप्येवम्। विद्यान्यायशिक्षाशब्देभ्यो 'द्व्यजृद्ब्राह्मण—' इति ठक् प्राप्तः व्याकरणशब्दात्तु 'वृद्धाच्छः' **ठगाय**। एत्येनं स्वामी, स्वामिनमयमेतीति वाऽऽयः स्वामिग्राह्यो भागः। स यस्मिन्नुत्पद्यते तदायस्थानम्। वहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः। वृद्धाच्छं परत्वादयं वाधते। आपणिकः। आकरिकः। **छादीनां चेति**। कार्कण इत्यत्र 'कृकणपर्णाद्भारद्वाज' इति छः प्राप्तः। तीर्थशब्दात्तु धूमादित्वाद् वुञ् प्राप्तः। उदपानशब्दस्योत्सादित्वादञ् प्राप्त इत्यर्थः। **विद्यायोनि**। विद्यायोनिकृतः सम्बन्धो येषां तेभ्यो वुञ् स्यादणोऽपवादः। छं तु परत्वाद्वाधते। आचार्यकः। मातामहकः। मातुलकः। **ऋतष्ठञ्**। 'विद्यायोनि-

१४६२ मयट् च। (४-३-८२) सममयम्। विषममयम्। देवदत्तमयम्। १४६३ प्रभवति। (४-३-८३) तत इत्येव। हिमवतः प्रभवति हैमवती गङ्गा। १४६४ विदूराञ्ञ्यः। (४-३-८४) विदूरात्प्रभवति वैदूर्यो मणिः। १४६५ तद्गच्छति पथिदूतयोः। (४-३-८५) स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा। १४६६ अभिनिष्क्रामति द्वारम्। (४-३-८६) तद् इत्येव। स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्। १४६७ अधिकृत्य कृते ग्रन्थे। (४-३-८७) तद् इत्येव। शारीरकमधिकृत्य कृतो ग्रन्थः

---

तत इत्येवेति। आगत इति तु निवृत्तम्। प्रभवतीत्यर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। प्रभवः प्रथमप्रकाशः। हिमवतः प्रभवतीति। हिमवति प्रथमं प्रकाशत इत्यर्थः। 'भुवः प्रभवः' इत्यपादानत्वम्। विदूराञ्ञ्यः। ततः प्रभवतीत्येव। विदूरशब्दो दन्त्यमध्यः वालवायाख्यदेशपर्यायो विदूरशब्द इति भाष्ये स्पष्टम्। तद् गच्छति पथिदूतयोः। गच्छतीत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युः, स चेद् गन्ता पन्था दूतो वा इत्यर्थः। अभिनिष्क्रामति द्वारम्। कान्येति।

---

इतीहाप्यञ्यन्तादण्। औपगवकमिति। 'गोत्रचरणात्–' इति वुञ्। अङ्के दृष्ट इतीहाप्यणन्ताद् वुञ्। हेतुमनुष्येभ्यो। मनुष्यग्रहणमहेत्वर्थम्, बहुवचनं तु स्वरूपविधिनिरासार्थम्। समरूप्यमिति। 'विभाषा गुणे–' इत्यत्र 'विभाषा' इति योगविभागादगुणवचनादपि पञ्चमी। योगविभागे तु 'बाहुलकं प्रकृतेस्तदनुदृष्टे' इति लिङ्गम्। मयट् च। योगविभागो यथासंख्यनिरासार्थः। टो ङीवर्थः। हैमवतीति। हिमवतः प्रकाशते। तत्र प्रथमं दृश्यत इत्यर्थः। उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते, 'तत्र जातः' इत्यतो भेदेन निर्देशात्, वैदूर्य इति। दन्त्यमध्योऽयं शाद्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः। नन्वत्रार्थासंगतिः। वालवायपर्वतादसौ प्रभवति, विदूरनगरे तु संस्क्रियते। सत्यम्, अतएव समाहितं भाष्ये—'वालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत्' इति। अस्यार्थः—वालवायशब्दः प्रत्ययं लभते विदूरादेशं च, सूत्रे पठितेनादेशेनानुरूपः स्थानी वालवायशब्द आक्षिप्यते। यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी विश्रवश्शब्द आक्षिप्यते, यथा वा 'पद्दन्–' इत्यादौ पदाद्यादेशानुरूपः स्थानी पाददन्तादिराक्षिप्यते, तद्वत्। प्रकृत्यन्तरमेवेति। विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकोऽस्तीत्यर्थः। एवं चास्मिन्पक्षे 'वालवायात्प्रभवति' इति विग्रहे विदूरशब्दात्प्रत्यय इति व्याख्यानक्लेशो नेति भावः। न वा इति। वैशब्दोऽक्षमां द्योतयति। तत्र पर्वते विदूरशब्दोऽप्रसिद्ध इति चेद् ब्रूयाज्जित्वरीवद्व्यवहरेत्। नियतपुरुषापेक्षो हि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति एवं वैयाकरणा एवाद्रिं विदूर इति। तद्गच्छति। द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था वेत्यर्थः। तत्र साध्वसिश्छिनत्ति, काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्ता। अभिनिष्क्रामति। द्वितीया-

शारीरकीय। 'शारीरकं भाष्यम्' इति त्वभेदोपचारात्। १४६८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः। (४-३-८८) शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम्। क्लीबत्वं निपातनात्। यमसभीयम्। किरातार्जुनीयम्। इन्द्रजननादिराकृतिगणः। इन्द्रजननीयम्। विरुद्धभोजनीयम्। १४६९ सोऽस्य निवासः। (४-३-८९) स्रुघ्नो निवासोऽस्य स्रौघ्नः। १४७० अभिजनश्च। (४-३-९०) स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः। यत्र स्वयं वसति स निवासः। यत्र पूर्वैरुषितं सोऽभिजन इति

---

कान्यकुब्जाख्यजनपदस्य द्वारमित्यर्थः। अधिकृत्य। तदित्येवेति। अधिकृत्य कृतो ग्रन्थ इत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युरित्यर्थः। शारीरकमिति। शरीरस्यायं शारीरो जीवात्मा, तमित्यर्थः। 'तस्येदम्' इत्यणन्तात् स्वार्थे कः। शारीरकीय इति। वृद्धत्वाच्छः। शिशुक्रन्द। शिशुक्रन्द, यमसभ, द्वन्द्व, इन्द्रजननादि एभ्यश्छः स्यादधिकृत्य कृते ग्रन्थ इत्यर्थः। निपातनादिति। 'सभा राजा' इति तु नपुंसकत्वं न भवति। तत्र अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह इत्युक्तेरिति भावः। सोऽस्य निवासः। अस्मिन्नर्थे प्रथमान्तात्प्रत्ययाः स्युरित्यर्थः। 'यत्र संप्रत्युष्यते स निवासः' इति भाष्यम्। अभिजनश्च। स इत्यनुवर्त्य पूर्ववद्व्याख्येयम्। 'यत्र पूर्वैरुषितं सोऽभिजनः' इति भाष्यम्। यत्र स्वयमिति।

---

न्तात्प्रत्ययः स्यात्निष्क्रामति तच्चेद् द्वारमित्यर्थः। स्रौघ्नं कान्यकुब्जद्वारमिति। स्रुघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितार्थः। पूर्ववत्करणस्य कर्तृत्वम्। तदित्येवेति। 'अधिकृत्य' इत्येतदपेक्षमत्र द्वितीया। शारीरकीय इति। कुत्सितं शरीरं शरीरकं तत्सम्बन्धी शारीरको जीवात्मा तमधिकृत्य प्रवृत्तस्य कृतो ग्रन्थः शारीरकीयः चतुर्लक्षणीमूत्रसन्दर्भः। वृद्धाच्छः। अत्र वार्तिकम्— 'लुबाख्यायिकाभ्यो बहुलम्' इति। तादर्थ्ये एषा चतुर्थी। आख्यायिका नाम गद्यरूपो ग्रन्थविशेषः। अतएवाख्यानाख्यायिकयोस्तत्र तत्र भेदेनोपादानम्। आख्यायिकाभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुगित्यर्थः। वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता। सुमनोहरा। क्वचिन्न, भैमरथी। अभेदोपचारेण गतार्थत्वान्नेदं वार्तिकमावश्यकमिति मूत्रे नोक्तम्। शिशुक्रन्द। अत्र वार्तिकम्—'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः'। दैवासुरम्। राक्षोसुरम्। निपातनादिति। 'सभा राजा-' इति सूत्रे 'अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह' इत्युक्तत्वात्तेन सूत्रेण क्लीबत्वं न सिध्यतीति भावः। सोऽस्य निवासः। स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् प्रथमान्तार्थं स निवासश्चेत्। स्रुघ्नो निवास इति। निवासाधिकरणमित्यर्थः। नन्वस्येति कृद्योगे कर्तरि षष्ठी। तथा च विशेषणविशेष्यभावव्यत्यासात् स्रुघ्नाधिकरणवासकर्तेह वृत्त्यर्थः, तथा च 'तत्र भवः' इत्येव सिद्धे किमनेनेति चेत्। अत्राह—वासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात्प्रकारकृतो भेदोऽस्तीति नास्ति वैयर्थ्यम्। 'वसन्ति हि प्रेम्णि गुणा न वस्तुनि' इत्यादौ तूपचारो बोध्य इति। अभिजनश्च। योगविभाग उत्तरार्थः। 'अभिजनाः पूर्वबान्धवाः' इति वृत्तिः।

विवेकः। १४७१ आयुधजीविभ्यश्छः पर्वते। (४-३-९१) पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात्। हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः। 'आयुध' इति किम्—ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदा द्विजाः। १४७२ शण्डिकादिभ्यो ञ्यः। (४-३-९२) शण्डिकोऽभिजनोऽस्य। शाण्डिक्यः। १४७३ सिन्धुतक्षशिलादिभ्योऽणञौ। (४-३-९६) सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे। सैन्धवः। तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः। १४७४ तुदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः। (४-३-९४) तुदी अभिजनोऽस्य तौदेयः। सालातुरीयः। वार्मतेयः। कौचवार्यः। १४७५ भक्तिः। (४-३-९५) 'सोऽस्य' इत्यनुवर्तते। भज्यते सेव्यत इति भक्तिः, स्रुघ्नो भक्तिरस्य स्रौघ्नः। १४७६ अचित्ताददेशकालाट्ठक्। (४-३-९६) अपूपा भक्तिरस्य आपूपिकः। पायसिकः। 'अचित्तात्' किम्-दैवदत्तः। 'अदेशात्' किम्—स्रौघ्नः। 'अकालात्' किम्—ग्रैष्मः। १४७७ महाराजाट्ठञ्। (४-३-९७) माहाराजिकः। १४७८ वासुदेवार्जुनाभ्यां वुन्। (४-३-९८) वासुदेवकः। अर्जुनकः।

---

उदाहृतभाष्यस्यायमर्थ इति भावः। आयुधजीविभ्यः। पर्वतादिति पाठान्तरम्। अभिजनशब्दादिति। अभिजनदेशवाचिन इत्यर्थः। आयुधवाचिनोऽभिधातुमिति शेषः। सूत्रे 'क्रियार्थोपपदस्य—' इति चतुर्थी। हृद्गोल इति। पर्वतविशेषोऽयम्। ऋक्षोद इति। अयमपि पर्वतविशेषः। शण्डिकादिभ्यो ञ्यः। सोऽभिजन इत्यर्थे प्रथमान्तेभ्य इति शेषः। सिन्धुतक्ष। सैन्धव इति। सिन्धुर्देशविशेषः, अभिजनोऽस्येति विग्रहः। तुदीसलातुर। तुदी, सलातुर, वर्मति, कूचवार एभ्यः प्रथमान्तेभ्यो ढक्, छण् ढञ्, यक्, एते स्युः अस्याभिजन इत्यर्थ। भक्तिः। अनुवर्तत इति। सोऽस्य भक्तिरित्यर्थे प्रथमान्तात्प्रत्ययाः स्युरित्यर्थः। अचित्ताददेश। देशकालव्यतिरिक्तादप्राणिवाचिनः ठक् स्यादुक्तविषये। अपूपा भक्तिरिति। सामान्याभिप्रायं भक्तिरित्येकवचनं वेदाः प्रमाणमितिवत्। पायसिक इति। पयो भक्तिरस्येति विग्रहः। महाराजाट्ठञ्। सोऽस्य भक्तिरित्यर्थ इति शेषः। माहाराजिक इति। महाराजो भक्तिरस्येति विग्रहः। वासुदेव। सोऽस्य भक्तिरित्येव। वासुदेवक इति। वासुदेवो भक्तिरस्येति विग्रहः। एवमर्जुनकः। ननु

---

अभिजायते येभ्य इति व्युत्पत्तेरिति भावः। पूर्वबान्धवाः पित्रादयः। प्रज्ञादिः बन्धुशब्दः। पूर्वसूत्रादिह 'निवासः' इत्यनुवृत्तम्। तत्सामानाधिकरण्यादभिजनशब्दस्य तत्सम्बन्धिनि लक्षणा। एवं स्थिते फलितमाह—यत्र पूर्वैरिति। आयुधजिविभ्यः। तादर्थ्ये एषा चतुर्थी। आयुधजीविभ्य आयुधजीव्यर्थम्, आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः। 'सोस्याभिजनः' इत्यनुवर्तते, पर्वत इति प्रकृतिविशेषणं तदाह—पर्वतवाचिन इत्यादि। पर्वत इति किम्,. सांकाश्यकाः आयुधजीविनः। 'योपधात्—' इति वुञ्। शण्डिकादिभ्यो ञ्यः। शण्डिक। सर्वसेनशकेत्यादि। सिन्धुतक्ष। सिन्धु वर्ण गन्धार कम्बोजादयः सिन्ध्वादयः, ते तु प्रायेण कच्छादिष्वपि पठ्यन्ते। तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं

१४७९ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् । (४-३-९९) अणोऽपवादः । परत्वाद् वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणादिह । पाणिनो भक्तिरस्य पाणिनीयः । १४८० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने । (४-३-१००) जनपदस्वामिवाचिनां बहुवचने जनपदवाचिना समानश्रुतीनां जनपदवत्सर्वं

---

वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति वार्ष्णेयत्वादणि वासुदेवशब्दाद् 'गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्' इति वुञैव सिद्धत्वाद्वासुदेवग्रहणं व्यर्थमिति चेत्, सत्यम्-अणन्तो वासुदेवशब्दोऽत्र न गृह्यते । किंतु यस्मिन् समस्तं वसति यो वा समस्ते वसति स वासुः, वासौ देवश्चेति व्युत्पत्त्या वासुदेवशब्दोऽस्य भगवति यौगरूढ एवेति न दोषः । उक्तं च भाष्ये-'नैषा क्षत्रियाख्या संज्ञैषा तत्रभवतः' इति । गोत्रक्षत्रिय । गोत्रप्रत्ययान्तेभ्यः क्षत्रियवाचिभ्यश्च उक्तविषये बहुलं वुञ् स्यादित्यर्थः । इह न पारिभाषिकं गोत्रम् । छं बाधत इति । औपगवक इत्यादावित्ति शेषः । ग्लुचुकायनिरिति । 'प्राचामवृद्धात्-' इति फिनि ग्लुचुकायनिशब्दः । नाकुलक इति । क्षत्रियाख्योदाहरणम् । जनपदिनाम् । बहुवचने परे ये जनपदेन समानशब्दाः-जनपदादिशब्देन समानः शब्दः श्रवणं येषां तथाविधास्तेषां जनपदिनाम्-जनपदस्वामिवाचिनाम्, जनपदवद्-जनपदे इव सर्वं स्यादित्यर्थः । 'जनपदतदवध्योश्च' इति प्रकरणे ये प्रत्यया विहिताः, ते भवन्ति । प्रकृतयोऽपि तथैव भवन्तीति तु सर्वशब्दाल्लभ्यते । तदाह—जनपदस्वामिवाचिनामित्यादिना । अङ्गा जनपद इति । दृष्टान्तार्थमिदम् । अङ्गनाम्ना राज्ञा निवासो जनपदः अङ्गाः, 'तस्य

---

वचनम् । तक्षशिला वत्सोद्धरणा ववेरित्यादयस्तक्षशिलादयः । वासुदेवार्जुनाभ्यां वुन् । छाणोरपवादः । 'अजाद्यदन्तम्' 'अल्पाच्तरम्' इति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याकरणं 'सर्वतोऽभ्यर्हितं पूर्वं निपतति' इति ज्ञापनार्थम् । ननु वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धक-' इत्यणि वासुदेवशब्दो निष्पन्नः । तथा च तत्र 'गोत्रक्षत्रियाख्येभ्यः-' इत्युत्तरसूत्रेण वुञेवास्तु, किमनेन वुना । न ह्यत्र वृद्धौ विशेषः, प्रागेव वृद्धत्वात् । न च 'वृद्धिनिमित्तस्य-' इति पुंवद्भावनिषेधो दोषः स्यादिति वाच्यम्, वुन्यपि 'न कोपधायाः' इति निषेधस्येष्यमाणत्वात् । न वा स्वरे विशेषः, 'ञ्नित्यादिर्नित्यम्' इति तुल्यस्वरत्वात् । नापि 'अभ्यर्हितं पूर्वम्' इति ज्ञापनमेव तत्फलमिति वाच्यम्, तथात्वे हि पूर्वनिपातप्रकरणे 'अभ्यर्हितम्' इत्येव लाघवात्कुर्यादिति चेत् । अत्र भाष्यम्—'संज्ञैषा तत्र भगवतः' इति । अयं भावः—'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः, ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ॥' इति स्मृतेः परमात्मा इह वासुदेवः । सर्वत्रासौ वसति, सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः, बाहुलकादुण्, वासुश्चासौ देवश्चेति विग्रहः । तथा च नेयं गोत्राख्या नापि क्षत्रियाख्येति युक्त एव वुन्विधिः । 'अभ्यर्हितं पूर्वम्' इति तु प्रसङ्गाज्ज्ञापितं तदप्यनित्यम्, 'श्वयुवमघोनाम्-' इत्यादिलिङ्गादित्यवधेयम् । वृद्धाच्छं बाधत इति । औपगवो भक्तिरस्य औपगवकः । जनपदिनाम् । स्वस्वामिभावसम्बन्धे मत्वर्थी

स्यात्प्रत्ययः प्रकृतिश्च । 'जनपदतदवध्योश्च' (सू १३४८) इति प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते । अङ्गा जनपदो भक्तिरस्य आङ्गः । अङ्गाः क्षत्रियाः भक्तिरस्य आङ्गकः । 'जनपदिनाम्' किम्—पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः । 'जनपदेन' इति किम्—पौरवो राजा भक्तिरस्य पौरवीयः । १४८१ तेन प्रोक्तम् । (४-३-१०१) पाणिनिना प्रोक्तं पाणिनीयम् । १४८२ तित्तिरिवरतन्तुखण्डिकोखाच्छण् । (४-३-१०२) 'छन्दोब्राह्मणानि-

लुप्' इति चातुरर्थिकस्य लुप् । स जनपदो भक्तिरस्येत्यर्थे 'जनपदतदवध्योश्च' इति वुञ्प्रत्यये आङ्गक इति यथा, तथा अङ्गदेशस्वामिनः क्षत्रिया अङ्गा भक्तिरस्येत्यर्थे क्षत्रियवाचकादङ्गशब्दाद् वुञि आङ्गक इति रूपमित्यर्थः । पञ्चाला ब्राह्मणा इति । अभेदोपचारादिह ब्राह्मणेषु पञ्चालशब्दः । तत्रातिदेशाभावादणेव भवति । पौरव इति । पौरवशब्दो न जनपदवृत्तिरिति भावः । 'बहुवचने' किम् ? एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो भवति । यथा आङ्गो वा आङ्गौ वा भक्तिरस्य आङ्गक इति 'प्रकृतिश्चेति' किम् ? मद्राणां राजा माद्रः, 'द्व्यञ्मगध-' इत्यण् । माद्रो भक्तिरस्येत्यर्थे अतिदेशान्माद्रस्य मद्रत्वे सति 'मद्रवृज्योः-' इति कनि माद्रक इति सिध्यति । तेन प्रोक्तम् । अस्मिन्नर्थे तृतीयान्ताद् यथाविहितं प्रत्ययाः स्युरित्यर्थः । पाणिनीयमिति । व्याकरणमिति शेषः । वृद्धाच्छः । प्रथमं प्रकाशितं प्रोक्तम् । नेह—देवदत्तेनाध्यापितम् । तित्तिरिवरतन्तु । तेन प्रोक्तमित्येव । तित्तिरि, वरतन्तु, खण्डिक, उख[1] एभ्य उक्तविषये छण् स्यादित्यर्थः । इत आरभ्य 'तेनैकदिक्' इतिपर्यन्तं प्रोक्ते वेदे भवन्ति, 'शौनकादिभ्यः छन्दसि' इति छन्दो-

दर्शयति—जनपदस्वामिवाचिनामिति । प्रत्ययः प्रकृतिश्चेति । अनेन सर्वशब्दस्यार्थो दर्शितः । असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यात, न तु प्रकृतेरिति हरदत्तः । अत्र वार्तिककारः सर्वशब्दस्य प्रयोजनमाह—सर्ववचनं प्रकृतिनिर्ह्रासार्थम्, तच्च मद्रवृज्यर्थमिति । अयं भावः—वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति विशेष्य तत्र दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः । सोप्यबहुत्व एवेति निर्ह्रासोपचयोल्पता । तथा हि, मद्राणां राजा 'द्व्यञ्मगध-' इत्यण् । माद्रः । वृजिशब्दाद् 'वृद्धेत्कोशला-' इति ञ्यङ् । वार्ज्यः । स भक्तिरस्येति प्रकृतिनिर्ह्रासे मद्रकः वृजिकः । 'मद्रवृज्योः कन्' । अन्यथा माद्रकः वार्ज्यक इति स्यात् । आङ्गक इति । 'जनपदतदवध्योश्च' । 'अवृद्धादपि-' इति वुञ् । अङ्गशब्दात्स्वामिवाचिनो बहुवचनान्तादणि प्राप्ते वुञतिदिश्यते । पञ्चाला ब्राह्मणा इति । अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः । बहुवचनग्रहणं किम्, एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो यथा स्यात् । आङ्गो आङ्गौ वा भक्तिरस्य आङ्गकः । इह वृद्धाच्छे प्राप्ते वुञ् । तेन प्रोक्तम् । प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतम्, 'कृते ग्रन्थे' इत्यनेन गतार्थत्वात् । पाणिनिना प्रोक्तमिति । प्रोक्तं स्वयमन्येन वा कृतं व्याकरणमध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः । प्रेति

[1] 'उखा' इति क,

(सू १२७८) इति तद्विषयता। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। १४८३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। (४-३-१०३) काश्यपेन प्रोक्तमधीयते काश्यपिनः। १४८४ कलापिवैशम्पायनान्तेवासिभ्यश्च। (४-३-१०४) कलाप्यन्तेवासिभ्यः—हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः। वैशम्पायनान्तेवासिभ्यः—आलम्बिनः। १४८५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु।

---

ग्रहणस्य ततः पूर्वं तत उत्तरं चाननुवृत्त्योरभ्युपगमात्। अत्र छणादिप्रत्ययान्तानामथ केवलानां न प्रयोगः। किन्त्वध्येतृवेदितृप्रत्ययशिरस्काणामेवेत्याह—छन्दोब्राह्मणानीति। तद्विषयतेति। अध्येतृवेदितृप्रत्ययशिरस्कत्वनियम इत्यर्थः। तैत्तिरीया इति। प्रोक्ते वेदे छण्, ईयः। तैत्तिरीयं शाखाभेदः, तमधीयते। विदन्ति वेत्यर्थे अण्। 'प्रोक्ताल्लुक्' इति तस्य लुगिति भावः। वारतन्तवीयाः, शाण्डिकीयाः। औखीयाः। तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र तु न, छन्दसीत्यनुवृत्तेः। छन्दःशब्देन च कल्पसूत्राणामपि ग्रहणम्, तेषां सर्वशाखागतविधिवाक्यसंग्राहकत्वात्। काश्यप। तेन प्रोक्तमित्येव। छस्यापवादः। काश्यपिन इति। काश्यपशब्दात् णिनिः। णकार इत्, नकारान्तिकार उच्चारणार्थः। काश्यपिन्शब्दात् 'प्रोक्ताल्लुक्' इत्यध्येतृप्रत्ययस्याणो लुगिति भावः। एवं कौशिकिनः। 'ऋषिभ्याम्' किम्? इदानीन्तनेन काश्यपेन प्रोक्तं काश्यपीयम्। कलापि। तेन प्रोक्तमित्येव। कलापिशिष्यवाचिभ्यो वैशम्पायनशिष्यवाचिभ्यश्च णिनिः स्यादित्यर्थः। कलाप्यन्तेवासिभ्य इति। उदाह्रियत इति शेषः। हारिद्रविण इति। हरिद्रुर्नाम कलापिनः शिष्यः। ततः प्रोक्ते णिनिः, आर्णः, आदिवृद्धिः। हारिद्रविन्शब्दादध्येत्रण 'प्रोक्ताल्लुक्' इति लुगिति भावः। हरिद्रु, छगली, तुम्बुरु, उलप इति चत्वारः कलापिशिष्याः। तुम्बुरुणा प्रोक्तमधीयते तौम्बुरविणः। छगलिनस्तु ढिनुग्वक्ष्यते, औलपिनः। वैशम्पायनान्तेवासिभ्य इति। उदाह्रियत इति शेषः। आलम्बिन इति। आलम्बिः कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी इति नव वैशम्पायनशिष्याः। तत्र आलम्बिशब्दात् अध्येत्रण प्रोक्ते णिनिः। आलम्बिशब्दादध्येत्रण 'प्रोक्ताल्लुक्' इति लुक्। आलम्बिनः, कालिङ्गिनः, कामलिनः, आर्चाभिनः, आरुणिनः

---

किम्, देवदत्तेनाध्यापितं प्रख्यातस्यैव ग्रन्थस्याध्यापनमिति नेहायं प्रत्ययः। तित्तिरिवर अणोऽपवादः। तद्विषयतेति। 'शौनकादिभ्यश्छन्दसि' इत्यत्रास्यानुवृत्तेस्तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र न भवतीति भावः। तैत्तिरीया इति। 'प्रोक्ताल्लुक्' इत्यध्येतृप्रत्ययस्य लुक्। एवमग्रेऽपि। काश्यप। छस्यापवादः। णकार उत्तरत्र वृद्ध्यर्थः। ननु 'वृद्धिनिमित्तस्य–' इति पुंवद्भावनिषेधोऽत्र फलमस्तीति चेत्। अत्राहुः—णिन्यन्तस्याध्येतृवेदितृविषयत्वे स्त्रियामप्रवृत्तेः। प्रवृत्तावपि 'जातेश्च' इति सिद्धत्वात्, चरणत्वेन जातित्वादिति। ऋषिभ्यामिति किम्, इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम्। कलापिवैशम्पायन अणोऽपवादः। छं तु परत्वाद्बाधते। कलाप्यन्तेवासिनश्चत्वारः। हरिद्रु, छगली, तुम्बुरु

( ४—३—१०५ ) तृतीयान्तात्प्रोक्तार्थे णिनिः स्याद् यत्प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति । पुराणेन चिरन्तनेन मुनिना प्रोक्ताः । भल्लु, भाल्लविनः । शाट्यायन—शाट्यायनिनः । कल्पे पिङ्ग—पैङ्गी कल्पः, 'पुराण' इति किम्—याज्ञवल्कानि ब्राह्मणानि । अश्मरथः कल्पः । अणि 'आपत्यस्य–' ( सू १०८२ ) इति यलोपः । १४८६ शौनकादिभ्यश्छन्दसि । ( ४—३—१०६ ) छन्दस्यभिधेये एभ्यो णिनिः । शौनकेन प्रोक्तमधीयते शौनकिनः । १४८७ कठचरकाल्लुक् । ( ४–३–१०७ ) आभ्यां प्रोक्तप्रत्ययस्य लुक्स्यात् । कठेन

---

ताण्डिनः । अत्र 'अपत्यस्य—' इति यलोपः । श्यामायनिनः । कटात्तु लुग्वक्ष्यते । कलापिनस्त्वण् वक्ष्यते । वैशम्पायनशिष्यः कलापी । तथा च कलाप्यन्तेवासिनां वैशम्पायनशिष्यत्वादेव सिद्धे पृथग्ग्रहणात् तच्छिष्यशिष्याणां न ग्रहणमिति भाष्ये स्पष्टम् । पुराणप्रोक्तेषु । 'तेन प्रोक्तम्' इति 'णिनिः' इति चानुवर्तते । मन्त्रव्यतिरिक्तवेदभागा ब्राह्मणानि । बोधायनादिकल्पसूत्राणि कल्पाः । तथाभूतेषु पुरातनमुनिप्रोक्तेषु ग्रन्थेषु वाच्येषु तृतीयान्ताण्णिनिः स्यादित्यर्थः । तदाह—तृतीयान्तादिति । यत्प्रोक्तमिति । सामान्याभिप्रायमेकवचनम् । प्रत्ययाभिधेयं यत्प्रोक्तं तत्पुरातनमुनिप्रोक्तब्राह्मणकल्पात्मकं चेदिति यावत् । पुराणप्रोक्तमित्येतद् व्याचष्टे । पुराणेनेति । ब्राह्मणे उदाहरति–भल्लु–भाल्लविन इति । भल्लु इति प्रकृतिनिर्देशः । भल्लुना पुरातन मुनिना प्रोक्तान् ब्राह्मणभागान् अधीयते इत्यर्थे प्रोक्तार्थेणिनिः । भाल्लविन्शब्दादध्येत्रणो लुकि भाल्लविन इति रूपमिति भावः । ब्राह्मणे उदाहरणान्तरमाह–शाट्यायन—शाट्यायनिन इति । शाट्यायनेति प्रकृतिनिर्देशः । शाट्यायनेन पुरातनमुनिना प्रोक्तान् ब्राह्मभागान् अधीयते इत्यर्थे प्रोक्तार्थेणिनिप्रत्यये शाट्यायनिन्शब्दादध्येत्रणो लुकि शाट्यायनिन इति रूपमित्यर्थः । कल्प इति । उदाह्रियत इति शेषः । पिङ्ग—पैङ्गी कल्प इति । पिङ्गेति प्रकृतिनिर्देशः । पिङ्गेन पुरातनमुनिना प्रोक्त इत्यर्थे णिनौ रूपम् । 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यध्येतृप्रत्ययान्तत्वनियमस्तु कल्पेषु न सर्वत्र प्रवर्तत इति 'छन्दोब्राह्मणानि–' इति सूत्रे भाष्ये स्पष्टम् । याज्ञवल्कानि ब्राह्मणानीति । याज्ञवल्क्येन प्रोक्तानीत्यर्थः । अश्मरथः कल्प इति । अश्मरथ्येन प्रोक्त इत्यर्थः । यलोप इति । याज्ञवल्काश्वरथशब्दौ कण्वादी । ताभ्यां यञन्ताभ्याम् अणि 'आपत्यस्य च–' इति यलोप इत्यर्थः । याज्ञवल्क्याश्मरथ्यावाधुनिकावित्यभिमानः । भाष्ये तु शाट्यायनादितुल्यकालत्वाद् याज्ञवल्क्यादिभ्यो णिनिप्रतिषेध इति तद्विषयता च नेति

---

उपल इति । वैशम्पायनान्तेवासिनस्तु नव । आलम्बिः, कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापि इति । हारिद्रविण इति । एवं तौम्बुरविणः, औलपिनः । छागलिनस्तु ढिनुकं वक्ष्यति । आलम्बिन इति । एवं कालिङ्गिनः, कामलिनः, आर्चाभिनः, आरुणिनः, ताण्डिनः, श्यामायनिनः । कठाल्लुकं वक्ष्यति कलापिनश्चाणम् याज्ञवल्क्याश्मरथ्याशब्दौ कण्वादी, तेन ताभ्यां यञन्ताभ्यां वृद्धाच्छो न भवतीत्याशयेनाह—अणि आपत्यस्येतीति । 'याज्ञवल्क्या-

प्रोक्तमधीयते कठाः । चरकाः । १४८८ कलापिनोऽण् । ( ४—३—१०८ ) कलापिना प्रोक्तमधीयते कालापाः । 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्' ( वा ४१८३ ) इत्युपसंख्यानाट्टिलोपः । १४८९ छगलिनो ढिनुक् । ( ४-३-१०९ ) छगलिना प्रोक्तमधीयते छागलेयिनः । १४९० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । (४-३-११०) णिनिः स्यात् । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । १४९१

---

वचनद्वयमारब्धमित्यास्तां तावत् । कठचरकाल्लुक् । प्रोक्तप्रत्ययस्येति । प्रकरणलभ्यम् । कठा इति । वैशम्पायनान्तेवासित्वलक्षणाणिनेर्लुक् अध्येत्रणस्तु । 'प्रोक्ताल्लुक्' इति लुक् । चरका इति । चरकेण प्रोक्तमधीयत इत्यर्थः । प्रोक्ताणोऽनेन लुकि अध्येत्रणः प्रोक्ताल्लुक् । कलापिनोऽण् । तेन प्रोक्तम् इत्येव वैशम्पायनशिष्यत्वात् प्राप्तस्य णिनेरपवादः । कालापा इति । कलापिन्शब्दादणि टिलोपे कालापशब्दादध्येतृप्रत्ययस्य तस्य लुगिति भावः । 'इनण्यनपत्ये' इति प्रकृतिभावमाशङ्क्याह—नान्तस्येति । छगलिनो ढिनुक् । छगलिन्शब्दादुक्तविषये ढिनुक्प्रत्ययः स्यादित्यर्थः । कठान्यन्तेवासित्वात् प्राप्तस्य णिनेरपवादः । छागलेयिन इति । ककार इत् उकार उच्चारणार्थः । इन् शिष्यते । ढस्य एय, टिलोपः । ततोऽध्येतृप्रत्ययस्य लुगिति भावः । पाराशर्य । णिनिः स्यादिति । उक्तविषय इति शेषः । मण्डूकप्लुत्या णिनिरेवानुवर्तत इति भावः । पाराशर्येण प्रोक्तं भिक्षुसूत्रमित्यर्थे, शिलालिना प्रोक्तं नटसूत्रमित्यर्थे च तृतीयान्ताभ्यां स्यादिति यावत् । भिक्षवः सन्यासिनः, तदधिकारिकं सूत्रं भिक्षुसूत्रं व्यासप्रणीतं प्रसिद्धम् । पाराशर्येणेति । पराशरशब्दाद्गर्गादित्वाद् गोत्रे यञि पाराशर्यो व्यासः । इह त्वनन्तरापत्ये गोत्रत्वारोपाद्यञ् । तेन प्रोक्ते भिक्षुसूत्रे णिनिः, ततोऽध्येतृप्रत्ययस्य तस्य लुक् । पाराशरिण इति । जसि रूपम् । शैलालिन इति । शिलालिशब्दात् नटसूत्रे प्रोक्ते णिनौ टिलोपे शैलालिन्शब्दादध्येतृप्रत्ययस्याणो लुकि शैलालिन इति जाद्

---

दया ह्यचिरकालाः इति भारतादिषु व्यवहारः, स एवानुसृतः सूत्रकृता । कठचरकाल्लुक् । कठशब्दस्य वैशम्पायनान्तेवासित्वाण्णिनिः । चरकादण् तयोर्लुक् । छन्दसीत्येव । काठाः चारकाः श्लोकाः । कलापिनोऽण् । वैशम्पायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः । 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्त आह—नान्तस्य टिलोप इति । 'कलापिनः' इत्युक्तेऽप्यौत्सर्गिकेऽणि सिद्धे पुनरण्ग्रहणमनिञ्विधानार्थं सद्यावक्यावग्नार्थं भवति । तेन माथुरेण प्रोक्ता माथुरी वृत्तिः । मौदाः पैप्पलादाः शाकलाः इति सिद्धम् । मुदः पिप्लादः शाकल्यः एभ्यः 'पुराणप्रोक्तेषु' इति णिनेरपवादोऽण् । छगलिनो ढिनुक् । कठान्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादोऽयम्[1] । पाराशर्य । मण्डूकप्लुत्या णिनिरिह सम्बध्यत इत्याह—णिनि

---

१ 'अयम्' इति पाठः क्वचिन्नास्ति ।

कर्मन्दकृशाश्वादिनिः। (४-३-१११) 'भिक्षुनटसूत्रयोः' इत्येव। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः। १४९२ तेनैकदिक्। (४-३-११२) सुदाम्ना अद्रिणा एकदिक् सौदामनी। १४९३ तसिश्च। (४-३-११३) स्वरादिपाठादव्ययत्वम्। पीलुमूलेन एकदिक् पीलुमूलतः। १४९४ उरसो यच्च। (४-३-११४) चात्तसिः। अणोऽपवादः। उरसा एकदिक् उरस्तः। १४९५ उपज्ञाते। (४-३-११५) तेन इत्येव। पाणिनिनोपज्ञातं पाणिनीयम्। १४९६ कृते ग्रन्थे। (४-३-११६) वररुचिना कृतो वाररुचो ग्रन्थः। १४९७ संज्ञायाम्। (४-३-११७) तेन इत्येव। अग्रन्थार्थमिदम्। मक्षिकाभिः कृतं माक्षिकं मधु। १४९८ कुलालादिभ्यो वुञ्। (४-३-११८) तेन कृते संज्ञायाम्। कुलालेन कृतं

---

रूपमिति भाव.। कर्मन्द। कर्मन्देन प्रोक्तं भिक्षुसूत्रमित्यर्थे कृशाश्वेन प्रोक्तं नटसूत्रमित्यर्थे च तृतीयान्तादिनिः स्यादिति यावत्। प्रत्यये अन्त्य इकार उच्चारणार्थः। कर्मन्दशब्दादिनि., ततोऽध्येत्रणो लुक्। एवं कृशाश्विनः। तेनैकदिक्। सहार्थे तृतीया। एका दिक् अधिकरणात्मिका यस्य तदेकदिक्। तेन सह एकस्या दिशि विद्यमानमित्यर्थे तृतीयान्ताद्यथा-विहितं प्रत्ययाः स्युरित्यर्थः। सौदामनीति। अणि 'अन्' इति प्रकृतिभावान्न टिलोपः। तसिश्च। 'तेनैकदिक्' इत्यर्थे तृतीयान्तात्तसिश्च स्यादित्यर्थः। इकार उच्चारणार्थः। स्वरादिपाठादिति। 'स्वरादिनिपातमव्ययम्' इति प्रकरणे 'तद्धितश्चासर्वविभक्तिः' इत्यत्र 'तसिलादयः–' इति परिगणने तसेः पाठादित्यर्थः। उरसो यच्च। उरसा एक-दिगित्यर्थे तृतीयान्तादित्यर्थः। उपज्ञाते। तेनोपज्ञातमित्यर्थे तृतीयान्ताद् यथाविहितं प्रत्ययाः स्युरित्यर्थः। उपज्ञातं प्रथमज्ञातम्। कृते ग्रन्थे। तेन कृतो ग्रन्थ इत्यर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। संज्ञायाम्। तेनेत्येवेति। तेन कृतमित्यर्थे संज्ञायां तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। ग्रन्थे इति नानु-वर्तते। तदाह—अग्रन्थार्थमिति। कुलालादिभ्यो वुञ्। तेन

---

स्यादिति। तद्विषयताऽत्रेष्यते। तदर्थं छन्दोग्रहणमनुवर्त्यम्। सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम्। भिक्षुसूत्रमिति। चतुर्लक्षणीरूपम्। पाराशरिण इति। पाराशर्यो व्यासः। अनन्तरापत्येऽपि गोत्रत्वेनोपचाराद् 'गर्गादिभ्यः–इति यञ्, 'अपत्यस्य च–' इति लोपः। अध्येत्रणस्तु 'प्रोक्तात्–' इति लुक्। भिक्षुनटसूत्रयोः। किम्, पराशरम्। शैलालम्। कर्मन्द। इहापि छन्दोनुवृत्त्यादि प्राग्वत्। भिक्षुनटसूत्रयोः किम्, कार्मन्दम्। कार्शाश्वम्। तेनैकदिक्। तृतीयान्तादेक-दिगित्यर्थे अणादयः स्युः। एका दिक् समाना दिगित्यर्थः। पुनस्तेनेत्युक्तिश्छन्दोऽ-विकारनिवृत्त्यर्था। सौदामनीति। 'अन्' इति प्रकृतिभावान्न टिलोपः। 'तडित्सौ-दामनी विद्युत्' इत्यमरः। तसिश्च। पूर्वोक्तविषये। उपज्ञाते। विनोपदेशं ज्ञातमुपज्ञातम्। कुलालादिभ्यो। कुलाल वरुड चण्डाल निषाद कुम्भकार

कौलालकम् । वारुडकम् । १४९९ क्षुद्राभ्रमरवटरपादपादञ् । ( ४-३-११९ ) तेन कृते संज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् । १५०० तस्येदम् । ( ४-३-१२० ) उपगोरिदमौपगवम् । 'वहेस्तुरणिट् च' ( वा २९१० )। संवोढुः स्वं सांवहित्रम् । 'अग्नीधः शरणे रण् भत्वं च' ( वा २९११ ) । अग्निमिन्धे अग्नीत्, तस्य स्थानमाग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः 'समिधामाधाने षेण्यण्' ( वा २९१२ ) । सामिधेन्यो मन्त्रः, सामिधेनी

---

कृते संज्ञायामिति शेषपूरणम् । वारुडकमिति । वरुडो जातिविशेषः । क्षुद्राभ्रमर । तेन कृते संज्ञायामिति शेषपूरणम् । क्षुद्रा मधुमक्षिकाः । तस्येदम् । इदमित्यर्थे षष्ठ्यन्तादणादयः साधारणप्रत्ययाः । राष्ट्रावारेत्यादिभिर्विशिष्य विहिता घादयश्च प्रत्ययाः यथाविहितं स्युरित्यर्थः । अत्र शेषे इत्यनुवृत्तम् । ततश्च अपत्यादिचतुरर्थ्यन्तार्थेभ्योऽन्येषां शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं लभ्यते । अपत्यादीनां तु न केनापि रूपेण इदंशब्दार्थत्वमिति 'तस्यापत्यम्' इत्यत्रोक्तम् । वहेस्तुरणिट् चेति । वार्तिकमिदम् । तुरिति तृन्तृचोः सामान्येन ग्रहणम् । वहधातोर्विहितो यः तृप्रत्ययः तस्मादण् स्यात् तृप्रत्ययस्य इडागमश्च । तत्र अण् पूर्वेण सिद्धं इड्विध्यर्थमनूद्यते । संवोढुः स्वमिति । विग्रहप्रदर्शनम् । वहस्तृच्, तृन् वा । वहेरनुदात्तत्वाद् 'एकाच उपदेशे–' इति नेट् । ढत्वधत्वष्टुत्वढलोपाः । 'सहिवहोरोदवर्णस्य' इत्योत्वम् । सांवहित्रमिति । ढत्वादीनामसिद्धत्वादलौकिक एव विग्रहवाक्ये पूर्वमिट् । ततो निमित्ताभावान्न ढत्वादि । अग्नीधः शरणे रण् भत्वं चेति । वार्तिकमिदम् । शरणमित्यर्थे अग्नीच्छब्दात् षष्ठ्यन्तादण्, तस्मिन्परे भत्वं च वक्तव्यमित्यर्थः । शरणं गृहम् । अग्निमिन्धे अग्नीदिति । ऋत्विग्विशेषोऽयम् । इन्धेः क्विप्, 'अनिदिताम्–' इति नलोपः । आग्नीध्रमिति । सोमे महावेदेरुत्तरार्धे पञ्चारत्निचतुरश्रस्थानविशेषसंज्ञेयम् । भत्वान्न जश्त्वम् । प्रत्ययस्वरेणान्तोदात्तोऽयं शब्दः । तैत्तिरीये 'एतद्वै यज्ञस्यापराजितं यदाग्नीध्रम्' इत्यादावाद्युदात्तत्वं तु 'आग्नीध्रसाधारणादञ् वक्तव्यः' इति स्वार्थिके अञि बोध्यम् । नन्वेवम् 'आग्नीध्र, प्रत्याश्रावय' इत्यादौ कथमृत्विग्विशेषे आग्नीध्रशब्दः । तत्राह—तात्स्थ्यादिति । आग्नीध्राख्यदेशस्थ-

---

स्वपाकादयः कुलालादयः । क्षुद्राभ्रमर । पादपशब्दाच्छे प्राप्ते, अन्येभ्योऽपि अणि अञ् विधीयते । तस्येदम् । अणादयः पञ्च महोत्सर्गाः, घादयश्च षष्ठ्यन्तात्सम्बन्धिनि स्युः । अनन्तरादिष्वनभिधानात्, देवदत्तस्यानन्तरामति । वहेस्त्विति । इडर्थमिदमुपसंख्यानम्, अण् तु सिद्ध एवानूद्यते । तुरिति तृन्तृचोः सामान्यग्रहणम् । ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ततो निमित्ताभावान्न ढत्वादीत्याशयेनोदाहरन्ति—सांवहित्रमिति अग्नीदिति । क्विप् । ऋत्विग्विशेषोऽयम् । 'त्वमग्निदृत्वायते' इत्यत्र तु छान्दसं ह्रस्वत्वम् । आग्नीध्रमिति । भत्वविधानाद्धस्य जश्त्वं नेति भावः । सोऽपीति । अग्नीदपीत्यर्थः ननु 'पिबाग्नीध्रात्तव' इत्यादावा-

---

१ क्वचित् पुस्तके 'मम' इति पाठः ।

ऋक् । १५०१ रथाद्यत् । ( ४-३-१२१ ) रथ्यं चक्रम् । १५०२ पत्त्रपूर्वादञ् । ( ४-३-१२२ ) पत्त्रं वाहनम् । अश्वरथस्येदमाश्वरथम् । १५०३ पत्त्राध्वर्युपरिषदश्च । ( ४-३-१२३ ) अञ् । 'पत्त्राद्वाह्ये' ( वा २९०८ ) । अश्वस्येदं वहनीयमाश्वम् । आध्वर्यवम् । पारिषदम् । १५०४ हलसीराट्ठक्

---

त्वाद् ऋत्विग्विशेषे आग्नीध्रशब्दो गौण इति भावः । समिधामिति । आधीयते अनेनेत्याधानो मन्त्रः । आधानो मन्त्रः इत्यर्थे षष्ठ्यन्तात् समिच्छब्दात् षेन्यण्प्रत्ययो वाच्य इत्यर्थः । षित्त्वं ङीषर्थमित्याह—सामिधेनी ऋगिति । सामिधेन्यशब्दाद् ङीष् 'हलस्तद्धितस्य' इति यलोपः । रथाद्यत् । 'तस्येदम्' इत्येव । रथ्यं चक्रमिति । 'रथाद्रथाङ्गे' इति वचनाच्चक्रमिति विशेष्यम् । पत्त्रपूर्वादञ् । रथादित्येव पत्त्रं वाहनमिति । 'पत्त्रं वाहनपक्षयोः' इति कोशः । पत्त्राध्वर्युपरिषदश्च । अञिति । शेषपूरणम् । पत्त्रादिति । पत्त्राद्वाह्य एवेति वक्तव्यमित्यर्थः । आश्वमिति । पत्त्रेत्यर्थग्रहणमिति भावः । आध्वर्यवं पारिषदमिति ।

---

द्युदात्तं प्रयुज्यते । वार्तिके 'तुरण्' इति पाठादयमन्तोदात्त इति चेत् । अत्राहुः—'आग्नीध्रसाधारणादञ्' इति वार्तिकेन विहितो यः स्वार्थेऽञ् तत्पक्षे तत्राद्युदात्तत्वं बोध्यमिति । समिधामिति । कर्मणि षष्ठीयम् । आधानमिति करणे ल्युट् । कर्मणि षष्ठ्यन्तादाधानकरणे षेन्यण् स्यात् । सामिधेन्य इति । यया अग्निः समिध्यते सा समित्, सम्पदादित्वात्करणे क्विप्, तस्या आधान इति विग्रहः । सामिधेनीति । षित्त्वान्ङीष्, 'हलस्तद्धितस्य' इति यलोपः । यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः । 'प्रवो वाजा अभिद्यवः' इत्याद्याः 'आजुहोता दुवस्यत' इत्यन्ताः सामिधेन्य इति व्यवह्रियन्ते । रथाद्यत् । अणोऽपवादः । 'रथाद्रथाङ्गे' इति वार्तिकमभिप्रेत्याह—रथ्यं चक्रमिति । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरुपसंख्यायते । परमरथ्यम् । उत्तमरथ्यम् । द्वयो रथयोरङ्गं द्विरथम् । इह 'द्विगोर्लुगनपत्ये' इति यतो लुक् । ननु यत्प्रत्ययोऽत्र रथाङ्ग एव यदीष्यते कथं तर्हि 'रथस्य वोढा रथ्यः' इति । 'तद्वहति–' इत्यनेनेति चेत् । एवं तर्हि अयमेव यद्रथाङ्ग इव वोढर्यपीष्यतां, 'तद्वहति रथयुगप्रासङ्गम्' इत्यत्र रथग्रहणं त्यज्यतामिति चेत् । मैवम् । द्वौ रथौ वहति द्विरथ्य इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयस्य लुक्प्रसङ्गात् 'तद्वहति–' इति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाभावान्न लुगिति द्विरथ्य इति सिध्यतीति । ननु 'द्विगोर्लुगनपत्ये' इत्यत्राचीत्यस्यापकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेत् । अत्राहुः—'तद्वहति–' इत्यत्र रथग्रहणमेव ज्ञापकमेतस्य यतो हलादेरपि लुग् भवतीति । अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात्, तथा च द्वयो रथयोरङ्गमिति विग्रहे द्विरथमिति प्रयोगःसुस्थ इति । पत्त्रपूर्वादिति । पूर्वस्य यतोऽपवादः । पत्त्रमिति । पतन्त्यनेनेति विग्रहे 'दाम्नी–' इत्यादिना ष्ट्रन् । रथादित्येव सम्बध्यत इत्याह—अश्वरथस्येदमिति । अश्वयुक्तो रथोऽश्वरथस्तस्याङ्गमित्यर्थः । पत्त्राध्वर्यु । अणोऽपवादः । वार्तिकमाह—पत्त्राद्वाह्य इति ।

(४—२—१२४) हालिकम् । सैरिकम् । १५०५ द्वन्द्वाद्वुन्वैरमैथुनिकयोः (४—३—१२५) काकोलूकिका । कुत्सकुशिकिका । 'वैरे देवासुरादिभ्यः प्रतिषेधः' (वा २९१४)। दैवासुरम् । १५०६ गोत्रचरणाद् वुञ् । (४–३–१२६) औपगवकम् । 'चरणाद्धर्माम्नाययोरिति वक्तव्यम्' (वा २९१३)। काठकम्। १५०७ सङ्घाङ्कलक्षणेष्वञ्यञिञामण्। (४—३—१२७) 'घोषग्रहणमपि कर्तव्यम्' (वा २९१५)। अञ् । बैदः, सङ्घोऽङ्को घोषो वा । बैदं लक्षणम्। यञ्—गार्गः, गार्गम् । इञ्—दाक्षः, दाक्षम् । परम्परासम्बन्धोऽङ्कः । साक्षात्

---

अध्वर्योरिदम्, परिषद इदमिति विग्रहः । हलसीराट्ठक् । तस्येदमित्यस्येव । हालिकम्। सैरिकमिति । हलस्येदम्, सीरस्येदमिति विग्रहः । द्वन्द्वाद् वुन् । वैरे मैथुनिकायां च इदन्त्वेन विवक्षिते द्वन्द्वात् षष्ठ्यन्ताद् वुन् स्यादित्यर्थः । काकोलूकिकेति । काकोलूकस्य वैरमित्यर्थः । वुनि स्त्रीत्वं लोकात् । कुत्सकुशिकिकेति । कुत्सकुशिकयोर्विवाह इत्यर्थः वुनि स्त्रीत्वं लोकात् । मिथुनं दम्पती । तस्य कर्म मैथुनिका । मनोज्ञादित्वाद् वुञ् । स्त्रीत्वं लोकात् । वैरे देवासुरेति । वार्तिकमिदम् । दैवासुरमिति । देवासुरयोर्वैरमित्यर्थः । वुनभावे अण् । मैथुनिकायां तु दैवासुरिकेत्येव । 'द्वन्द्वे देवासुर—' इति क्वचित्पाठः, अत्र भाष्ये वैरे इत्येव वार्तिकपाठात् । 'शिशुक्रन्द—' इति सूत्रभाष्ये तु 'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' इति पठितम्, दैवासुरम् राक्षोऽसुरमित्युदाहृतं च । देवासुरावधिकृत्य कृतमाख्यानमित्यर्थः । गोत्रचरणाद्वुञ् । गोत्रप्रत्ययान्तात् शाखाध्येतृवाचिनश्च षष्ठ्यन्तादिदमित्यर्थे वुञित्यर्थः । प्रवराध्यायप्रसिद्धमिह गोत्रमित्यभिप्रेत्योदाहरति—औपगवकमिति । औपगवस्येदमित्यर्थः । वस्तुतस्तु औपगवः प्रवरसूत्रेषु न दृष्टः । ग्लौचुकायनकमिति वृत्त्यादौ उदाहृतम् । चरणादिति । चरणाद्या वुञ् विहितः स धर्मे आम्नाये च वाच्ये भवति, नान्यत्रेत्यर्थः । काठकमिति । कठेन प्रोक्तमधीयते कठाः, तेषां धर्म आम्नायो वेत्यर्थः । आम्नायो वेदाभ्यासः । सङ्घाङ्क । अञन्तात्, यञन्तात्, इञन्ताच्च सङ्घे अङ्के लक्षणे च इदन्त्वेन विवक्षिते अणित्यर्थः छस्यापवादः । घोषेति । 'सङ्घाङ्कलक्षणघोषेषु' इति सूत्रं कर्तव्यमित्यर्थः । तथा च लिङ्ग प्रकृतय प्रत्ययार्थाश्च चत्वार इति न यथासंख्यम् । गार्ग इति सङ्घः अङ्को घोषो वेति शेषः । गार्गमिति । लक्षणमिति शेषः । एवं दाक्षः दाक्षमित्यत्रापि ।

---

इह पञ्चेत्यर्थग्रहणं, इतरयोस्तु स्वरूपग्रहणं व्याख्यानमेव शरणम् । द्वन्द्वाद् वुन् । अणोऽपवादः छं तु परत्वाद्बाधते । काकोलूकिकेति । काकोलूकस्य वैरमित्यर्थः । वुनन्तं स्त्रियाम् । 'मैथुनिकाविवुन्' इति स्त्र्यधिकारे अमरः । कुत्सकुशिकिकेति । कुत्सकुशिकयोर्मैथुनिका विवाहरूपः सम्बन्ध इत्यर्थः । मिथुनं हि दम्पती तस्य कर्म क्रियानिष्पादनम्, मनोज्ञादित्वाद् वुञ् । वुञन्तं चेद स्त्रियाम्, स्वभावात् । अत्र वदन्ति—कुत्साश्च कुशिकाश्च कुत्सकुशिकास्तेषां मैथुनिकेत्यपि विग्रहः । इह कुत्सश्च कुशिका चेति द्वयोरेव मैथुनिकायां वुनिति नाग्रहः कार्यः । 'वुनि लुक्' इति सूत्रे कैयटः अत्रिभरद्वाजिकेत्यादिकं प्रसङ्गादुदाहृत्य बहुवचनान्तद्वन्द्वाद् वुनो व्याख्या-

लक्षणम् । १५०८ शाकलाद्वा । (४-३-१२८) अण्वोक्तेऽर्थे । पक्षे चरणत्वाद् वुञ् । शकलेन प्रोक्तमधीयते शाकलाः, तेषां सङ्घोऽङ्को घोषो वा शाकलः, शाकलकः । लक्षणे क्लीवता । १५०९ छन्दोगौक्थिकयाज्ञिकवह्वृचनटाञ्ञ्यः । (४-३-१२९) छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । 'चरणाद्धर्माम्नाययोः' (वा २६१३) इत्युक्तम् । तत्साहचर्यान्नटशब्दादपि तयोरेव । १५१० न दण्डमाणवान्तेवासिषु । (४-३-१३०) दण्डप्रधाना माणवा दण्ड-माणवाः, तेषु शिष्येषु च वुञ् न स्यात् । दाक्षा दण्डमाणवाः शिष्या वा । १५११ रैवतिकादिभ्यश्छः । (४-३-१३१) तस्येदमित्यर्थे । वुञोऽपवादः । रैवतिकीयम् ।

---

नन्वङ्कलक्षणशब्दयोः पर्यायत्वात् पृथग्ग्रहणं व्यर्थमित्यत आह—परम्परेति । यथा गवादि-निष्ठस्तप्तमुद्राविशेषः अङ्कः । तस्य हि गोद्वारा स्वामिसम्बन्धः । साक्षादिति । विद्या-विशेषस्तु देवदत्ते साक्षाद्विद्यमानत्वात्तस्य लक्षणमित्यर्थः । वैदी विद्या । 'घोष आभीरपल्ली स्यात्' इत्यमरः । शाकलाद्वा । शकलेनेति । शकलशब्दात्प्रोक्ताणन्तादध्येतृप्रत्ययस्य लुकि शाकलशब्दाद् 'गोत्रचरणात्–' इति धर्माम्नाययोर्वुञोऽपवादः अण् । तदभावे वुञ् । छन्दोगौक्थिक । संघादयो निवृत्ताः । छन्दोगादीनां चरणत्वाद् धर्माम्नाययोरिति संबध्यते । छन्दोग, औक्थिक, याज्ञिक, बह्वृच, नट एभ्यो धर्मे आम्नाये च इदंत्वेन विवक्षिते ञ्यः स्यादित्यर्थः । ननु नटस्य अचरणत्वात्तत्र धर्माम्नाययोः कथमन्वय इत्याशङ्क्ते—चरणाद्ध-र्माम्नाययोरित्युक्तमिति । यद्यपीति शेषः । परिहरति—तत्साहचर्यादिति । तथापि छन्दोगादिसाहचर्यान्नटशब्दादपि धर्माम्नाययोरेव प्रत्यय इत्यर्थः । न दण्ड । दण्डमाणवाश्च अन्तेवासिनश्च तेष्विति द्वन्द्वः । दाक्षा इति । दक्षस्यापत्यं दाक्षिः, तस्येमे दण्डमाणवाः शिष्या वेत्यर्थे गोत्रत्वलक्षण वुञ् न भवति, किन्त्वौत्सर्गिकोऽणेव । रैवतिकादिभ्यश्छः । तस्येदमित्यर्थ इति । शेषपूरणम् । वुञ इति । गोत्रत्वलक्षणवुञोऽपवाद इत्यर्थः । रैवतिकीयमिति । रेवत्या अपत्यं रैवतिकः ।

---

तत्वादिति । सङ्घाङ्क । पूर्वस्य वुञोपवादः । घोषग्रहणमिति । एवं च प्रकृतयस्तिस्रः प्रत्ययार्थविशेषणानि चत्वारीति वैषम्याद्यथासंख्यमपि न प्रवर्तते । गार्ग इति । 'आपत्यस्य-' इति यलोपः यद्यप्यङ्कलक्षणयोः पर्यायत्वं प्रसिद्धं 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः, तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेत्याह—परम्परासम्बन्ध इति । यथा गवादिनिष्ठः स्वामिना गोद्वारा सम्बन्धः । साक्षादिति । यथा विदानां विद्या । घोष अभीरस्थानम् । णित्त्वं ङीबर्थं पुंवद्भावविनिषेधार्थं च । वैदी विद्या यस्य वैदिविद्यः । विदानाम साधारणी या विद्या तद्वानित्यर्थः । छन्दोगौक्थिक । सङ्घादयो निवृत्ताः, एभ्यो ञ्यः स्यात्तस्येदमित्यर्थे । चरणशब्देभ्यो वुञोऽपवादः न त्वौत्सर्गिकस्याणः । धर्माम्नाययोरित्य-नुवर्तनेनेह । छन्दोगं कुलमित्यादि । न दण्ड । 'तस्येदम्' इत्यनुवर्तते तेषु शिष्येषु चेति प्रत्ययार्थविशेषणेष्विति शेषः । दाक्षा इति । 'इञश्च' इत्यण् । रैवतिकादिभ्यश्छः ।

वैजवापीयम्। १५१२ कौपिञ्जलहास्तिपदादण् (४-३-१३२) (वा २९१८)। कुपिञ्जलस्यापत्यम्। इहैव निपातनादण्। तदन्तात्पुनरण कौपिञ्जल गोत्रवुञोऽपवाद। हस्तिपादस्यापत्यं हास्तिपद तस्याय हास्तिपद। १५१३ आथर्वणिकस्येकलोपश्च। (४-३-१३३) अण्स्यात्। आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा। चरणाद् वुञोऽपवाद।

इति तद्धितेषु शैषिकप्रकरणम्।

---

रेवत्यादिभ्यष्ठक्। रैवतिकस्येदमिति विग्रह। वैजवापीयमिति। बीजवापस्यापत्य वैजवापि, तस्येदमिति विग्रह। कौपिञ्जलहास्तिपदादण्। कुपिञ्जलस्यापत्यमित्यन्त तस्य 'इत्यर्थे इति शेष। इहेति। अस्मिन् वार्तिके कौपिञ्जलेति निर्देशाद् अत इञ् बाधित्वा अणित्यर्थ। तदन्तादिति। अणन्ताद् 'तस्येदम् इत्यर्थे अनेन वार्तिकेन पुनरणित्यर्थ। हस्तिपादस्येति। हस्तिन इव पादौ अस्येति विग्रह, 'पादस्य लोप-' इति न भवति, अहस्त्यादिभ्य इति प्रतिषेधात्। हस्तिपादस्यापत्य हास्तिपद। इञ बाधित्वा अत एव निपातनादण् पद्भावश्च। हास्तिपदस्यापत्यमित्यर्थे अनेन अणीति भाव। गोत्रवुञोऽपवाद। आथर्वणिकस्येकलोपश्च। इद सूत्रमिति कैयट। वार्तिकमित्यन्ये। अण् स्यादिति। आथर्वणिकशब्दात्तस्येदमित्यर्थे अण् स्यात्। प्रकृतेरिकस्य लोपश्चेत्यर्थ। आथर्वणिकस्येति। अथर्वणा प्रोक्तो वेद अथर्वेत्युपचर्यते, तमधीते आथर्वणिक। वसन्तादित्वाट्ठक्। आथर्वणिकस्यायमित्यर्थे अनेन अणि, इको लोपे 'दाण्डिनायन-' इति टिलोपाभावे, आथर्वण इति रूपमित्यर्थ। धर्म आम्नायो वेति। 'चरणाद्धर्माम्नाययो' इत्युक्तेरिति भाव। ननु तस्येदमित्येव सिद्धे अण्विधिव्यर्थ इत्यत आह—चरणाद् वुञोऽपवाद इति। आथर्वणिकशब्दस्य अथर्वणवेदाध्येतृवाचित्वादिति भाव।

इति तद्धितेषु शैषिकप्रकरणम्।

---

रैवतिकशब्दो 'रेवत्यादिभ्यष्ठक्' इति ठगन्त। रैवतिक, औदमेघि, वैजवापीत्यादिरैवतिकादयोऽमी गोत्रप्रत्ययान्ता, तत पूर्वेण वुञि प्राप्ते छविधानार्थमिदमित्याह—वुञोऽपवाद इति। अत इञमाशङ्क्याह—इहैव निपातनादिति। हस्तिन पाद इव पादौ यस्य हस्तिपाद। पादस्य लोपो न भवति अहस्त्यादिभ्य इति वचनात्तदाह—हस्तिपादस्येति। हास्तिपद इति। अस्मादेव निपातनादण् पद्भावश्चेति भाव। आथर्वणिकस्य। अथर्वणा प्रोक्तो वेदोऽथर्वा, अभेदोपचारात् 'तमधीते वसन्तादित्वाट्ठक्' 'दाण्डिनायन-' आदिसूत्रे निपातनाट्टिलोपाभाव। अथ रूपाह—आथर्वणिक। इह प्रोक्ताण् तत 'छन्दो ब्राह्मणानि-' इति तद्विषयतयाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्ताल्लुङ् नेति।

इति तत्त्वबोधिन्यां शैषिकप्रकरणम्।

# अथ तद्धितेषु प्राग्दीव्यतीयप्रकरणम् ॥२६॥

१५१४ तस्य विकारः । ( ४-३-१३४ ) 'अश्मनो विकारे टिलोपो वक्तव्यः' ( वा ४१८५ ) । अश्मनो विकार आश्मः । भास्मनः । मार्त्तिकः । १५१५ अवयवे च प्राण्योषधिवृक्षेभ्यः । ( ४-३-१३५ ) चाद्विकारे । मयूरस्यावयव विकारो वा मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् । १५१६

---

अथ विकारार्थप्रत्यया निरूप्यन्ते । तस्य विकारः । विक्रियते इति विकारः, कर्मणि घञ् । प्रकृतेरवस्थान्तरात्मिकां विक्रियां प्राप्त इत्यर्थः । विकार इत्यर्थे षष्ठ्यन्तादणादयः साधारणा वक्ष्यमाणाश्च वैशेषिका यथाविहितं स्युरित्यर्थः । अश्मनो विकार इति । विकारार्थकप्रत्यये परे अश्मन्शब्दस्य टिलोपो वक्तव्य इत्यर्थः । अनिति प्रकृतिभावापवादः । आश्म इति । अणि टिलोपो रूपम् । एवं चर्मणो विकारः चार्मः कोशः । 'चर्मणः कोशे' इत्युपसंख्यानाट्टिलोपः । भास्मन इति । भस्मनो विकार इत्यर्थः । अणि 'अन्' इति प्रकृतिभावान्न टिलोपः । मार्त्तिक इति । मृत्तिकाया विकार इत्यर्थः । अत्र 'प्राणिरजतादिभ्योऽञ्' 'ओरञ्' 'अनुदात्तादेश्च' इत्यादिवक्ष्यमाणापवादविषयभिन्नमुदाहरणम्, तत्र अश्मन्, भस्मन्, चर्मन् इति त्रयं मनिन्प्रत्ययान्तं नित्स्वरेणाद्युदात्तम् । मृत्तिकाशब्दोऽपि 'मृदस्तिकन्' इति तिकन्नन्तः । नित्स्वरेणाद्युदात्तः । अवयवे च प्राण्योषधि । प्राणिवाचिन ओषधिवाचिनो वृक्षवाचिनश्च षष्ठ्यन्तेभ्यः अवयवे विकारे च अणादयः साधारणा उक्ता वक्ष्यमाणाश्च प्रत्यया यथाविहितं स्युः । अन्येभ्यस्तु विकारमात्र इत्यर्थः । प्राणिन उदाहरति— मायूर इति । 'लघावन्ते—' इति मयूरशब्दो मध्योदात्तः । ततः 'प्राणिरजतादिभ्यः—' इत्यञ् । ओषधेरुदाहरति—मौर्वमिति । मूर्वा ओषधिविशेषः । तस्या अवयवो विकारो वेत्यर्थः । औत्सर्गिकोऽण् । 'अनुदात्तादेश्च' इत्यञ् तु वक्ष्यमाणो न भवति, 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तत्वात् । वृक्षस्योदाहरति—पैप्पलमिति । पिप्पलः अश्वत्थः, तस्यावयवो विकारो वेत्यर्थः । 'लघावन्ते—' इति मध्योदात्तः पिप्पलशब्दः । 'अनुदात्तादेश्च' इति वक्ष्यमाणाञोऽभावे

---

तस्य विकारः । षष्ठ्यन्ताद्विकारे अणादयः स्युः । घादिसम्बद्धस्य तस्य ग्रहणस्य निवृत्तये पुनस्तस्येत्युक्तम् । अणादयस्तु न निवर्तन्ते 'प्राग्दीव्यतः—' 'प्राग्भवनात्' इति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । इह प्राणिरजतादिभ्योऽञ्, ओरञ्, अनुदात्तादेश्च, मयड्वैतयोः, नित्यं वृद्धशरीरादिभ्यः, पिष्टाच्च, इत्यादिभिरपवादानां वक्ष्यमाणत्वादणि आद्युदात्तं अवृद्धं प्रतिपदमवक्ष्यमाणप्रत्ययं चोदाहरणमिति पर्यालोच्य तथैवोदाहरति—आश्म इत्यादि । अश्मन्—भस्मन्शब्दौ मनिन्प्रत्ययान्तौ, 'मृदस्तिकन्' नित्स्वरेण त्रयोऽप्याद्युदात्ताः । प्राचीनस्य तस्येत्यस्य निवृत्तत्वादधिकारोक्तप्रत्यया न प्रवर्तन्त इति नेह ठक् । हालः, सैरः । चाद्विकार इति । तेन वक्ष्यमाणप्रत्ययाः प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये भवन्त्यन्येभ्यस्तु विकार

बिल्वादिभ्योऽण् । ( ४-३-१३६ ) बैल्वम् । १५१७ क्रोपधाच्च । ( ४-३-१३७ ) अण् । अञोऽपवादः । तर्कु—तार्कवम् । तैत्तिडीकम् । १५१८ त्रपुजतुनोः षुक् । ( ४-३-१३८ ) आभ्यामण् स्याद्विकारे, एतयोः षुगागमश्च । त्रापुषम् । १५१९ ओरञ् । ( ४-३-१३९ ) दैवदारवम् । भाद्रदारवम् । १५२० अनुदात्तादेश्च । ( ४-३-१४० ) दाधित्थम् । कापित्थम् । १५२१ पलाशादिभ्यो वा । ( ४-३-१४१ ) पालाशम् । खादिरम् ।

---

औत्सर्गिकोऽण् । बिल्वादिभ्योऽण् । एषु प्राण्योषधिवृक्षेभ्यः अवयवे विकारे च, इतरेभ्यस्तु विकारे अण् स्यादित्यर्थः । बैल्वमिति । बिल्वस्यावयवो विकारो वेत्यर्थः । बिल्व, व्रीहि, काण्ड, मुद्ग, मसूर, गोधूम, इक्षु, वेणु, गवेधुका, कार्पासी, पाटली, कर्कन्धू, कुटीर इति बिल्वादयः । तत्र गवेधुकस्य 'कोपधाच्च' इत्यणि सिद्धे मयटो बाधनार्थमिह पाठः । इतरेषां तु 'अनुदात्तादेश्च' इत्यञ् बाधनार्थमिति कौस्तुभे विस्तरः । क्रोपधाच्च । अणिति शेषः । तत्र प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च, इतरेभ्यस्तु विकारे एव । तर्कु—तार्कवमिति । तर्कु इति प्रकृतिनिर्देशः । तर्कुर्नाम वृक्षविशेषः, तस्यावयवो विकारो वेत्यर्थः । 'ओरञ्' इत्यस्यापवादः अण् । तित्तिडीकशब्दो 'लघावन्ते—' इति मध्योदात्तः । 'अनुदात्तादेश्च' इत्यञोऽपवादः अण् । त्रपुजतुनोः षुक् । त्रापुषम् । जातुषमिति । त्रपुणो जतुनश्च विकार इत्यर्थः । ओरञ् । उवर्णान्तादञ् स्यादित्यर्थः । प्राण्योषधिवृक्षेभ्यः अवयवे विकारे च, इतरेभ्यस्तु विकारे । दैवदारवम् । भाद्रदारवमिति । देवदारोर्भद्रदारोश्चावयवो विकारो वेत्यर्थः । 'पीतद्रुवर्थानाम्' इत्याद्युदात्तावेतौ । ततश्च 'अनुदात्तादेश्च' इत्यनेन गतार्थता न । अनुदात्तादेश्च । विकारे अञिति शेषः । 'अवयवे च' इति सूत्रमप्यत्र सम्बध्यते । दाधित्थमिति । दधित्थस्यावयवो विकारो वेत्यर्थः । एवं कापित्थम् । 'दधित्थे तु दधित्थग्राहिमन्मथाः' इत्यमरः । अव्युत्पन्नप्रातिपदिकत्वात् फिट्स्वरेणान्तोदात्तावेतौ । पलाशादिभ्यो वा । अञिति शेषः । अवयवे चेत्येव । पलाशखदिरशिंशपास्पन्दनानामनुदात्तादित्वाद् नित्ये प्राप्ते इतरेषाम् अप्राप्ते विकल्पोऽयम् ।

---

भवति पलितम् । मायूर इति । 'प्राणिरजतादिभ्यः—' इत्यञ् । अनुदात्तादेरञ् सिद्धत्वादुदात्तादिषु वृद्धेषु मयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते । ओषधिभ्य उदाहरति—मौर्वमिति । मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तः । पिप्पलशब्दस्तु 'लघावन्ते—' इत्यनेनाद्युदात्तः । बिल्वादिभ्योऽण् । अञ्मयटोरपवादः । बिल्व, व्रीहि, काण्ड, मुद्ग, मसूर, गोधूम, इक्षु, कार्पासी, वेण्वादयो बिल्वादयः । त्रपुजतुनोः । 'बिल्वादिभ्योऽण्' इत्यतोऽनुवर्तनादाह—अण् स्यादिति । 'ओरञ्' इत्यस्यायमपवादः । अप्राण्यादित्वादवयवे न भवतीत्याशयेनाह—विकार इति । त्रापुषमिति । त्रपुणो विकारः । एवं जतुनो विकारः जातुषम् । ओरञ् । अनुदात्तादेरन्यदिहोदाहरणम् । दैवदारवमिति । देवदारु—भद्रदारुशब्दौ 'पीतद्रुवर्थानाम्' इत्याद्युदात्तौ । दाधित्थमिति । दधति

कारीरम् । १५२२ शम्याः ष्लञ् । ( ४-३-१४२ ) शामीलं भस्म । पित्त्वा-न्ङीप् । शामीली स्रुक् । १५२३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । ( ४-३-१४३ ) प्रकृतिमात्रान्मयड् वा स्याद्विकारावयवयोः । अश्ममयम्, आश्म-नम् । 'अभक्ष्य-' इत्यादि किम्—मौद्गः सूपः । कार्पासमाच्छादनम् । १५२४

---

शम्याः ष्लञ् । शमीशब्दो गौरादिङीषन्तः । तस्मात्पष्ठयन्तादवयवे विकारे च ष्लञ् स्या-दित्यर्थः । पकारलकारावितौ । 'अनुदात्तादेश्च' इत्यञोऽपवादः । शामीलं भस्मेति । शम्या विकार इत्यर्थः । शामीली स्रुगिति । शम्या विकार इत्यर्थः । वरुणप्रघासेषु शमीमय्यः स्रुचः प्रसिद्धाः । अवयवे तु शामीली शाखा । मयड्वैतयोः । 'अविकारादेव विकारावयवयो-रिति सिद्धयोरिति वचनम् उक्तवक्ष्यमाणापवादविषयेष्वपि पक्षे मयडर्थम्' इति भाष्ये स्पष्टम् । तेन बिल्वमयं बैल्वमित्यादि सिध्यतीत्यभिप्रेत्य आह—प्रकृतिमात्रादिति । सर्वस्याः प्रकृतेरित्यर्थः । अश्ममयमिति । मयटि अन्तर्वर्तिनी विभक्तिमाश्रित्य पदत्वम्, नलोपः । आश्मनमिति । कल्माषांघ्रिर्नाम कश्चिद्राजा तत्पत्न्यां वसिष्ठेनोत्पा-

---

तिष्ठतीति 'सुपि स्थ.' इति कः । उपपदसमासः । पृषोदरादित्वात्सकारस्य तकारः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । एवं कपित्थेऽपि बोध्यम् । पलाशादिभ्यो वा । उभयत्र विभाषेयम् । पलाशखदिरशिंशपास्यन्दनानामनुदात्तादित्वान्नित्यं प्राप्ते, करीरशिरीषविकङ्कत-पूलाकयवासशब्दानामप्राप्ते विधानात् । पालाशमिति । पलाशशब्दो घृतादित्वादन्तोदात्तः । खदिरशब्दः 'अजिरशिशिर-' इत्यादौ किरच्प्रत्ययान्तो निपातितः । शिंशपाशब्दः 'अथ द्वितीयं प्रागीषात्' इति वर्तमाने 'पान्तानां गुर्वादीनाम्' इति मध्योदात्तः । 'स्यदि किंचिच्चलने' 'अनुदात्तेतश्च हलादेः' इति युच् । कारीरमिति । 'किरतेरीरन्' । नित्स्वरेण करीरशब्दोऽ-यमाद्युदात्तः । 'कृदृभ्यामीषन्' 'शृद्भ्यां किच्च' पूर्ववच्छिरीषशब्दोऽप्याद्युदात्तः । विकङ्कत-पूलाकयवासशब्दाः 'ग्रामादीनां च' इत्याद्युदात्ताः । पित्त्वान्ङीषिति । टित्त्वान्ङीविति तु माधवः । मयड्वैतयोः । भाषायां किम्, खादिरो यूप इति वृत्तिकारः । ननु मयटो वैकल्पिकत्वात्सिद्धमिदमिति चेत् । अत्राहुः—वेदे बह्वचः परस्य मयटोऽर्यान्तर-परत्वमेवेति तात्पर्यग्रहणार्थमेवेदम् । 'द्व्यचश्छन्दसि' इति सूत्रस्य 'द्व्यच एव' इति नियमार्थत्वे यद्यपीदं गतार्थम्, तथापि 'द्व्यचश्छन्दस्येव' इति विपरीतनियमशङ्का-निवृत्त्यर्थं भाषाग्रहणं कृतमिति । अधिकारादेव विकारावयवयोर्लाभे एतयोरिति वचनं ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्' इत्येवमादयस्तद्विषयेऽपि यथा स्यादित्येवमर्थम् । कपोतमयम्, लोहमयम् समासनिर्देशादतो यथासंख्यं न । आश्मन-मिति । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपे अश्मन्निति नान्तमवशिष्यते, तथा कल्माषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः सुतोऽश्मको नाम, तत्र संज्ञात्वद्योतकस्य कप्रत्ययस्याभावे अश्मन्निति नाम भवति, तस्यावयवे आश्मनं विकारेऽप्याश्मनमित्येव भवति । न च

नित्यं वृद्धशरादिभ्यः । ( ४-३-१४४ ) आम्रमयम् । शरमयम् । 'एकाचो नित्यम्' ( ५०५२ ) त्वङ्मयम् । वाङ्मयम् । कथं तर्हि 'आप्यम्, अम्मयम्' इति—'तस्येदम्' ( १५०० ) इत्यण्णन्तात्स्वार्थे ष्यञ् । १५२५ गोश्च पुरीषे । ( ४-३-१४५ ) गोः पुरीषं गोमयम् । १५२६ पिष्टाच्च । ( ४-३-१४६ ) मयट् स्याद्विकारे । पिष्टमयम् भस्म । कथं पैष्टी सुरेति । 'सामान्यविवक्षायां तस्येदम्' ( सू १५०० ) इत्यण् । १५२७ सञ्ज्ञायां कन् । ( ४-३-१४७ ) 'पिष्टात्' इत्येव । पिष्टस्य विकारविशेषः पिष्टकः । 'पूपोऽपूपः पिष्टकः स्यात्' ।

---

दिति अश्मक इति । अश्मशब्दात् स्वार्थे कप्रत्ययः, तदभावे अश्मेत्यपि नाम, तस्य विकारो अवयवो वेत्यर्थः । 'अन्' इति प्रकृतिभावान्न टिलोपः । नच विकारार्थकत्वे 'अश्मनो विकारे-' इति टिलोपः शङ्क्यः, तत्र पाषाणवाचकत्वेन प्रसिद्धस्याश्मन्शब्दस्यैव ग्रहणादिति भावः । नित्यं वृद्धशर । मयडिति शेषः । उक्तविकल्पस्यापवादः । एकाचो नित्यमिति । नित्यमिति योगविभागाल्लभ्यमिदम् । अण्णन्तादिति । अपामिदमापम्, 'तस्येदम्' इत्यण् । ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञि आप्यमिति रूपमित्यर्थः । गोश्च पुरीषे । नित्यं मयडि त्यनुवर्तते । गोमयमिति । यद्यपि पुरीषं न गोर्विकारो नाप्यवयवः । तथापि तस्येदमित्यर्थेऽयं प्रत्ययः । पिष्टाच्च । शेषपूरणेन सूत्रं व्याचष्टे—मयट् स्याद्विकार इति । सञ्ज्ञायां कन् । विकारविशेष इति । अपूप इत्यर्थः ।

---

'अश्मनो विकारे-' इति टिलोपः स्यादिति वाच्यम्, प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात् । वस्तुतस्तु 'तस्येदम्' इति सामान्यविवक्षायां पाषाणवाचकस्याप्यश्मन्शब्दस्याश्मनमिति भविष्यति, पैष्टी सुरेतिवत् । मौद्गः सूपः । कार्पासमिति । मुद्गशब्दो घृतादित्वादन्तोदात्तः । 'वृञः पासः' इति पासप्रत्यये गुणे रपरे च कर्पासीशब्दो जातिलक्षणङीषन्तस्ताभ्यां अनुदात्तादेश्च इत्यञं बाधित्वा बिल्वादित्वादण् । नित्यं वृद्ध । इह 'भाषायामभक्ष्याच्छादनयोः' इत्यनुवर्तत इति वृत्तिः । नन्वेवमानन्दमयाधिकरणे शङ्कराचार्यैः 'अयोन्तर आत्मानन्दमयः' इति श्रुतौ 'आनन्दमय इति विकारे मयट्' इत्युक्तं तत्कथं सगच्छताम्, 'प्राचुर्ये मयट्' इति तु वक्तुमुचितमिति चेत् । अत्राहुः—प्राचुर्ये मयस्त्वपि प्रकृत्यर्थविरोधिनो दुःखस्य लेशतोऽनुवृत्तिलाभात्प्रकृते विकाराय पर्यवस्यतीति तेषामाशयः । यद्वा 'नित्यं वृद्ध-' इत्यत्र भाषाग्रहणं नानुवृत्तावपि 'भाषायां नित्यम्, अन्यत्र क्वाचित्क' इत्याश्रित्य मयट् सुसाधः । अथवा 'हेतुमनुष्येभ्यः—' इत्यनुवर्तमानं 'मयट् च' इति सूत्रेण आगतार्थो मयट् । विकार इति स्वार्थिकार्थकथनमेवात शङ्करभगवत्पादोक्तिरनवद्यैवेति । शरमयमिति । शर दर्भ मृत् कुटी तृण सोम बिल्वज इति शरादिः । एकाचो नित्यमिति । आरम्भसामर्थ्यादेव सिद्धे 'नित्यं वृद्ध-' इति नित्यग्रहणम् योगविभागेनान्यत्रापि क्वचिद्विधानार्थम्, तेनैतल्लभ्यत इति भावः । एकाच्त्वादेव सिद्धे शरादिषु मृच्छब्दपठनं विस्पष्टार्थमित्याहुः । गोश्च पुरीषे । पुरीषं न विकारो, नाप्यवयवः तथापि 'तस्येदम्' इत्यर्थेऽयं प्रत्ययः । विकारावयवयोस्तु

१५२८ व्रीहेः पुरोडाशे । ( ४-३-१४८ ) मयट् स्यात् । विल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् । १५२९ असंज्ञायां तिलयवाभ्याम् । ( ४-३-१४९ ) तिलमयम् । यवमयम् । संज्ञायां तु तैलम् । यावकः । १५३० तालादिभ्योऽण् । ( ४-३-१५२ ) अञ्मयटोरपवादः । 'तालाद्धनुषि' ( ग सू १९४ ) तालं धनुः । अन्यत्तालमयम् । ऐन्द्रायुधम् । १५३१ जातरूपेभ्यः परिमाणे । ( ४-३-१५३ ) अण् । बहुवचनात्पर्यायग्रहणम् । हाटकः तापनीयः सौवर्णो वा निष्कः । 'परिमाणे' किम्—हाटकमयी यष्टिः । १५३२ प्राणिरजतादिभ्योऽञ् । ( ४-३-१५४ ) शौकम् । बाकम् । राजतम् । १५३३ ञितश्च तत्प्रत्ययात् । ( ४-३-१५५ ) ञितो विकारा-

---

तदाह—पूपोऽपूपः पिष्टकः स्यादिति । अमरकोशोऽयम् । पुरोडाशस्तु न पिष्टकः, तस्यानपूपत्वात् । 'अतुङ्गमनपूपाकृतिमश्वशफमात्रं पुरोडाशं करोति' इति श्रुतेः । व्रीहेः पुरोडाशे । पुरोडाशात्मके विकारे नित्यं मयट् स्यादित्यर्थः । तर्हि विल्वादिगणे पाठः किमर्थमित्यत आह—व्रैहमन्यदिति । असंज्ञायां तिलयवाभ्याम् । नित्यं मयडिति शेषः । यावक इति । यवशब्दाद्विकारे अण् । ततः 'यावादिभ्य–' इति स्वार्थे कन् । तालादिभ्योऽण् । तालाद्धनुषीति । गणसूत्रमिदम् । तालं धनुरिति । 'नित्यं वृद्ध–' इति मयटोऽपवादः । ऐन्द्रायुधमिति । 'अनुदात्तादेश्च' इत्यञोऽपवादः, समासस्वरेणान्तोदात्तत्वात् । जातरूपेभ्यः । अणिति । शेषपूरणम् । जातरूपं सुवर्णम्, तद्वाचिभ्योऽण् स्यात्परिमाणे विकारे गम्य इत्यर्थः । ननु जातरूपशब्दस्यैव कुतो न ग्रहणमित्यत आह—बहुवचनादिति । हाटक इत्यादि । हाटकस्य तपनीयस्य सुवर्णस्य वा निष्कपरिमाणको विकार इत्यर्थः । तापनीय इति । 'नित्यं वृद्धशरादिभ्यः' इति मयटोऽपवादः । इतरत्र तु 'अनुदात्तादेश्च' इत्यञोऽपवादः । 'गुञ्जाः पञ्चाद्यमापकः । ते षोडशाक्षः' इत्यमरः । 'सुवर्णविस्तौ हेम्नोऽक्षे' इति च । प्राणिरजतादिभ्योऽञ् । शौकम् । बाकमिति । शुकस्य बकस्य वा अवयवो विकारो वेत्यर्थः । 'प्राणिनां कुपूर्वम्' इत्याद्युदात्तत्वाद् 'अनुदात्तादेश्च' इत्यञो न प्राप्तिः । राजतमिति । अनुदात्तादित्वादञि सिद्धे मयड्बाधनार्थमञ्विधिः । ञितश्च

---

'गोपयसोर्यत्' वक्ष्यति । पुरीषे किम्, गव्यं पयः । यावक इति । यवशब्दाद्विकारेऽण् तदन्ताद् 'यवादिभ्यः' इति स्वार्थे कन् । तालादिभ्योऽण् । अञ्मयटोरिति । तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः । बर्हिणां विकारो बार्हिणम् । 'प्राणिरजतादिभ्योऽञ्' ततो 'ञितश्च तत्प्रत्ययात्' इत्यञ् प्राप्तः, शेषेभ्यस्त्वनुदात्तादित्वाञ् प्राप्तः । तथाहि विशिदृशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः । 'अन्येषामपि–' इति दीर्घः । इन्द्राविशः, इन्द्रादृशः । 'चप सान्त्वने' पचाद्यच् । चपापीयूक्षाशब्दो 'लघावन्ते–' इति मध्योदात्तः 'फिषः' इत्यधिकारादापः प्रागेव स्वरप्रवृत्तेः । इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । अण्ग्रहणं बाधकबाधनार्थम् । यथाविहितप्रत्ययविधौ बर्हिणशब्दाद् वृद्धलक्षणो मयट् स्याद्, 'ञितश्च तत्प्रत्ययात्' इत्यञो बाधनेन वचनस्य

वयवप्रत्ययः तदन्तादञ् स्यात्तयोरेवार्थयोः । मयटोऽपवादः । शामीलस्य शामीलम् । दाधित्थस्य दाधित्थम् । कापित्थम् । जिनः किम्—बैल्वमयम् । १५३४ क्रीतवत्परिमाणात् । ( ४-४-१५६ ) 'प्राग्वहतेष्ठक्' ( सू १५४८ ) इत्यारभ्य क्रीतार्थे ये प्रत्यया यस्माद् यस्मात् परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते । अणादीनामपवादः । निष्केण क्रीतं नैष्किकम् । एवं निष्कस्य विकारोऽपि नैष्किकः । शतस्य विकारः शत्यः, शतिकः । १५३५ उष्ट्राद् वुञ् । ( ४-३-१५७ ) प्राण्यञोपवादः । औष्ट्रकः । १५३६ उमोर्णयोर्वा । ( ४-३-१५८ ) औमकम्, औमम् । और्णकम्, और्णम् । वुञभावे यथाक्रममणञौ । १५३७ एण्या ढञ् । ( ४—३—१५९ ) ऐणेयम् । एणस्य तु ऐणम् । १५३८

---

तत्प्रत्ययात् । तयोर्विकारावयवयोः प्रत्ययः तत्प्रत्ययः । तदाह—त्रिधा इति । तयोरेवेति । विकारावयवयोरेवेत्यर्थः । शामीलस्येति । शम्या विकारः अवयवो वा शामीलम् । 'शम्या ष्लञ्' । शामीलस्य विकारः अवयवो वेत्यर्थे अञि शामीलमिति भवतीत्यर्थः । 'नित्यं वृद्ध-' इति मयटोऽपवादः । दाधित्थमिति । दधित्थस्य विकारोऽवयवो वा दाधित्थम् । अनुदात्तादित्वादञ् । दाधित्थस्य विकारो दाधित्थम्, मयटपवादोऽञ् । बैल्वमयमिति । 'बिल्वादिभ्योऽण्' इति बिल्वशब्दादणि बैल्वः, तस्य विकार इत्यर्थे मयडेव न त्वञ् । अणो ञित्त्वाभावादिति भावः । भाष्ये तु 'विकारावयवप्रत्ययान्तात् पुनस्तत्प्रत्यया अनभिधानाद् न' इत्याश्रित्य सूत्रमिदं प्रत्याख्यातम् । क्रीतवत्परिमाणात् । उपाधिनेति । प्रकृत्यादिविशेषणेनेत्यर्थः । नैष्किक इति । 'असमासे निष्कादिभ्यः' इति क्रीते ठक् । शत्य-शतिक इति । 'शताच्च ठन्यतौ-'इति क्रीते ठन्यतौ । उष्ट्राद्वुञ् । प्राण्यञ इति । 'प्राणिरजतादिभ्योऽञ्' इत्यस्यापवाद इत्यर्थः । उमोर्णयोर्वा । वुञिति शेषः । औमकमिति । उमा सस्यविशेषः । 'उमा स्यादतसी क्षुमा' इत्यमरः । उमाया विकारः अवयवो वेत्यर्थः । औममिति । 'तृणधान्यानां च' इत्युमाशब्द आद्युदात्तः, ततो वुञभावे 'अनुदात्तादेश्च' इत्यञभावादौत्सर्गिकोऽण् । ऊर्णाशब्दस्तु फिट्स्वरेणान्तोदात्तः । ततो वुञभावे अनुदात्तादित्वादञित्यर्थः । 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः । 'स्थूणोर्णे नपुंसके च' इति लिङ्गानुशासनसूत्रम् । एण्या ढञ् । एण्या अवयवो विकारो वा ऐणेयम् । ढस्य एयादेशः । 'यस्येति च' इति ईकारलोपः ।

---

चरितार्थत्वादित्याहुः । तालाद्धनुषीति । गणसूत्रमिदम् । हाटक इति । इह वृद्धत्वान्मयट् प्राप्तः, तपनीयादेः 'अनुदात्तादेश्च' इत्यञ् प्राप्तः । प्राणि । अनुदात्तादेरञ सिद्धत्वात्परिशिष्टमिहोदाहरणं तदाह—शौकम् । बाकमिति । शुकबकशब्दौ 'प्राणिनां कुपूर्वम्' इत्याद्युदात्तौ । राजतमिति । रजत सीस लोह उदुम्बर कण्टकारेत्यादयो रजतादयस्तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनार्थः । अन्यथा हि परत्वान्मयट् स्यादेव । शामीलमिति । शामीलशब्दः 'शम्या ष्लञ्' इति ष्लञन्तः । दधित्थाद् 'अनुदात्तादेश्च' इत्यञ् । दाधित्थस्य दाधित्थम् । बैल्वमयमिति । बिल्वशब्दोऽणन्तः । नैष्किकमिति । 'तेन क्रीतम्' इति ठक् ।

गोपयसोर्यत् । (४-३-१६०) गव्यम् । पयस्यम् । १५३९ द्रोश्च । (४-३-१६१) द्रुर्वृक्षः, तस्य विकारोऽवयवो वा द्रव्यम् । १५४० माने वयः । (४—३—१६२) द्रोः इत्येव । द्रुवयम् । 'यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्' इत्यमरः । १५४१ फले लुक् । (४—३—१६३) विकारावयवप्रत्ययस्य लुक्स्यात्फले । आमलक्याः फलमामलकम् । १५४२ प्लक्षादिभ्योऽण् । (४—३—१६४) विधानसामर्थ्यान्न लुक् । प्लाक्षम् । १५४३ न्यग्रोधस्य च केवलस्य । (७—३—५) अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । १५४४ जम्ब्वा वा ।

---

स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह—एणस्य त्विति । गोपयसोर्यत् । गव्यमिति । गोर्विकारोऽवयवो वेत्यर्थः । 'वान्तो यि—' इत्यवादेशः । पयस्यमिति । पयसो विकार इत्यर्थः । 'सर्वत्र गोरजादिप्रसङ्गे यत्' इत्येव सिद्धे यद्विधानं 'मयड्वैतयोः—' इति पाक्षिकमयटो बाधनार्थम् । द्रोश्च । यदिति शेषः । 'एकाचो नित्यम्' इति मयटः 'ओरञ्' इत्यस्य चापवादः । माने वयः । द्रोरित्येवेति । माने विकारे गम्ये द्रुशब्दाद्वयप्रत्ययः स्यादित्यर्थः । फले लुक् । आमलकमिति । फलितस्य वृक्षस्य फलमवयवो विकारश्च, तस्मिन्मयटो लुकि 'लुक्तद्धितलुकि' इति ङीषो लुक् । प्लक्षादिभ्योऽण् । विकारे अवयवे चेति शेषः । तत्र शिग्रुकर्कन्धूशब्दयोरुवर्णान्तत्वादञि प्राप्ते प्लक्षन्यग्रोधादीनाम् अनुदात्तादित्वादञि प्राप्ते अण्विधिः । नन्वस्य फले अणो लुक् कुतो नेत्यत आह—विधानेति । न्यग्रोधस्य च केवलस्य । 'न य्वाभ्याम्—' इत्युत्तरसूत्रमिदम् । अस्येति । केवलस्य न्यग्रोधस्ये-

---

शत्यः । शतिक इति । 'शताच्च ठन्यतौ—' अणन्वाविति । उमाशब्दः 'तृणधान्यानां च' इत्याद्युदात्तः । ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणान्तोदात्त इति भावः । एण्या ढञ् । प्राण्यञोऽपवादः । स्त्रीलिङ्गनिर्देशादाह—एणस्य त्विति । गोपयसोः । यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथापि 'मयड्वैतयोः—' इति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः । द्रोश्च । ओरञः, 'एकाचो नित्यम्' इति मयटश्चापवादोऽयम् । द्रव्यमिति । 'ओर्गुणः' 'वान्तो यि प्रत्यये' 'द्रव्यगुणकर्म—' इत्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते—आश्रीयते इति द्रुधातोः 'अचो यत्' इति यत्प्रत्ययान्तः । माने वयः । यतोऽपवादः । द्रुवयमिति । द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः । फले लुक् । विकारावयवेति । फलितस्य वृक्षस्य फलमवयवो विकारश्च, तेनान्यतरस्मिन् प्रत्ययः । आमलकमिति । मयटो लुक्, 'लुक्तद्धितलुकि' इति ङीपो लुक् । न चात्र स्थानिवद्भावेन 'यस्येति च' इति लोपः शङ्क्यः । 'लुका लुप्तं न स्थानिवत्' इत्यभ्युपगमात् । अतएव पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्यत्र 'अध्यर्धपूर्व—' इति ठनो लुकि कृते 'लुक्तद्धि—' इति ङीपो लुका लुप्तत्वेन स्थानिवत्त्वाभावादुकारस्य यणादेशो न भवति । प्लक्षादिभ्योण् । अञोऽपवादः । शिग्रुकर्कन्धूशब्दाभ्याम् 'ओरञ्' इति, अन्येभ्यस्त्वनुदात्तादित्वादञः प्राप्तिः प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु कर्कन्धू बृहती । तत्र प्लक्षशब्दः 'फिषः' इत्यन्तोदात्तः । न्यग्रोधशब्दो 'लघावन्ते—' इति मध्योदात्तः । अश्वत्थशब्दस्तु घृतादि-

( ४—३—१६५ ) जम्बूशब्दात्फलेऽण्वा स्यात् । जाम्बवम् । पक्षे ओरञ्, तस्य लुक्, जम्बु । १५४५ लुप् च । ( ४—३—१६६ ) जम्ब्वा फलप्रत्ययस्य लुब्वा स्यात् । 'लुपि युक्तवत्—' ( सू १२९४ ) जम्ब्वाः फलं जम्बूः । 'फलपाकशुषामुपसङ्ख्यानम्' ( वा २९४९ ) । व्रीहयः । मुद्गाः । 'पुष्पमूलेषु बहुलम्' ( वा २९५० ) मल्लिकायाः पुष्पं मल्लिका । जात्याः पुष्पं जाती । विदार्या मूलं विदारी । बहुलग्रहणान्नेह । पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक् । अशो-

---

त्यर्थः । केवलस्य पदान्तरविहीनत्वम् । न्यग् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे यद्यपि 'न य्वाभ्याम्–' इत्येव सिद्धम्, यकारस्य पदान्तत्वात् । तथापि केवलस्यैव इति नियमार्थं सूत्रम् । अव्युत्पत्तिपक्षे तु यकारस्य अपदान्तत्वाद् विध्यर्थमेव । 'केवलस्य' किम् ? न्याग्रोधमूला शालयः । जम्ब्वा वा । जाम्बवमिति । जम्ब्वाः फलमित्यर्थः । अत्र लुकि विशेष्यानुसारेण नपुंसकत्वाद् ह्रस्व इति भावः । लुप् च । लुकैव सिद्धे लुब्विधेः फलमाह—लुपि युक्तवदिति । जम्बूरिति । जम्ब्वाः फलमित्यर्थः । फलप्रत्ययस्य लुपि युक्तवत्त्वेन विशेष्यलिङ्गवचने बाधित्वा स्त्रीत्वमेकवचनं चेत्यर्थः । तथा च जम्ब्वाः फलान्यपि जम्बूरेव । फलपाकेति । फलपाकेन शुष्यन्तीति फलपाकशुषः ओषधयः, तद्वाचिभ्यः परस्य फलप्रत्ययस्य लुप् उपसङ्ख्यानमित्यर्थः । 'फले लुक्' इत्यस्यापवादः । व्रीहय इति । व्रीह्याख्यानामोषधीनां फलानीत्यर्थः । एवं मुद्गाः । बिल्वाद्यणो लुप् । युक्तवद्भावात्पुंस्त्वम्, न विशेष्यनिघ्नत्वम् । पुष्पमूलेषु बहुलमिति । वार्तिकमिदम् । विकारावयवप्रत्ययस्य लुप् स्यादिति शेषः । पुष्पं मल्लिकेति । 'अथ द्वितीयं प्रागीषात्' इत्यनुवृत्तौ 'मादीनां च' इति फिट्सूत्रेण मध्योदात्तो मल्लिकाशब्दः । ततः 'अनुदात्तादेश्च' इत्यञो लुप् । युक्तवत्त्वात्स्त्रीत्वम् । जातीति । 'लघावन्ते–' इत्यन्तोदात्तो जातिशब्दः । ततः 'अनुदात्तादेश्च' इत्यनाऽनेन लुप् । युक्तवत्त्वात्स्त्रीत्वम् । विदारीति जातिङीषन्तमिदं प्रत्ययस्वरेणान्तोदात्तम् । अनुदात्तादित्वादञि तस्य लुप्, युक्तवत्त्वात्स्त्रीत्वम् । पाटलानीति । बिल्वादित्वादण् । एवं साल्वानि । ननु अशोकस्य पुष्पम् अशोकम्, करवीरस्य पुष्पं करवीरम्, इत्यत्रापि 'पुष्पमूलेषु बहुलम्' इति लुपि युक्तवत्त्वात् पुंस्त्वे अशोकः पुष्पं करवीरः पुष्पमिति स्यादित्यत आह—बहुलग्रहणात् क्वचिल्लुगिति । तथा च युक्तवत्त्वस्य प्रवृत्तेः विशेष्यनिघ्नत्व-

---

त्वादन्तोदात्तः इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । 'अश्वत्थवैणवप्लक्षनैयग्रोधैङ्गुदं फले' इत्यमरः । न्यग्रोधस्य च । केवलस्येति किम्, न्यग्रोधमूले भवा न्याग्रोधमूला शालयः । न्यग् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे तु विध्यर्थम् । जम्ब्वेति । नपुंसकह्रस्वः । 'फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्' । फलपाकेति । फलपाकेन शुष्यन्तीति फलपाकशुषः । व्रीहयः मुद्गा इति । बिल्वाद्यणो लुक् । मल्लिकेति । अनुदात्तलक्षणस्याञो लुप् 'मालादीनां च' इति फिट्सूत्रान्मल्लिकाशब्दे द्वितीयमुदात्तम् । जातीविदारी श

कम्। करवीरम्। १५४६ हरीतक्यादिभ्यश्च। ( ४-३-१६७ ) एभ्यः फलप्रत्ययस्य लुप्स्यात्। हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्। हरीतक्याः फलानि हरीतक्यः। १५४७ कंसीयपरशव्ययोर्यञञौ लुक्च। ( ४-३-१६८ ) कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च लुक्। कंसाय हितं कंसीयम्, तस्य विकारः कांस्यम्। परशवे हितं परशव्यम्, तस्य विकारः पारशवः।

इति तद्धितेषु चतुर्थस्य तृतीयपादे प्राग्दीव्यतीयप्रकरणम्।

---

मेवेति भावः। हरीतक्यादिभ्यश्च। हरीतक्यादीनामिति। वार्तिकमिदम्। एषां प्रकृतिलिङ्गमेव लुप्तप्रत्ययार्थे अतिदिश्यते, नतु प्रकृतिवचनमपीत्यर्थः। हरीतक्य इति। जातिङीषन्तः प्रत्ययस्वरेणान्तोदात्तो हरीतकीशब्दः। ततोऽनुदात्तादित्वादञि तस्य 'फले लुक्' इति लुकि प्राप्ते लुपि युक्तवत्त्वात्स्त्रीत्वे विशेष्यानुरोधाद्बहुवचनम्। कंसीयपरशव्य। अत्र यञञोर्न लुक्, विधिवैयर्थ्यात्। नापि प्रकृत्योः, प्रत्ययादर्शनस्यैव लुक्त्वात्। अतः परिशेषात् प्रकृत्येकदशयोः छयतोरिति लभ्यते। तदाह—छयतोरिति। कंसीयमिति। कंसो नाम धातुर्लोहविशेषः। तस्मै हितमिति छः। कांस्यमिति। कंसीयशब्दाद् यञि छस्य लुकि आदिवृद्धौ 'यस्येति च' इत्यकारलोपः। परशव्यमिति। 'तस्मै हितम्' इत्यधिकारे 'उगवादिभ्यो यत्' इति यति, ओर्गुणे 'वान्तो यि—' इत्यवादेशः। पारशव इति। परशव्यशब्दादञि यतो लुकि ओर्गुणे पारशवः। 'हलस्तद्धितस्य' इति तु न, ईतीत्यनुवृत्तेः। अनापत्यत्वाद् 'आपत्यस्य च' इत्यपि लोपो न प्रसज्यत इति भावः।

इति तद्धितेषु चतुर्थस्य तृतीयपादे प्राग्दीव्यतीयप्रकरणम्।

---

गौरादिङीषन्तौ। पाटलानीति। बिल्वादित्वादण्। साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। हरीतक्यादिभ्यश्च। इह द्राक्षाप्रभृतिभ्यो 'नित्यं वृद्ध—' इति प्राप्तस्य मयटो लुप्, अनुदात्तादिभ्योऽञः, इतरेभ्यस्त्वणः। लिङ्गमेवेति। वचनं तु विशेष्यवदेव। 'हरीतक्यादिषु व्यक्तिः' इत्युक्तत्वादिति भावः। कंसीयमिति। 'प्राक्क्रीताच्छः' इत्यधिकारे 'तस्मै हितम्' इति छः। तस्यैव छस्यापवादतया 'उगवादिभ्यो यत्' परशव्यं दारु। परशव्यशब्दस्यानुदात्तादित्वादञि सिद्धे तत्संनियोगेन यतो लुगर्थं वचनम्। न च 'यस्येति—' यलोपे कृते 'हलस्तद्धितस्य' इति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम्। ईतीत्यनुवृत्तेः।

इति तत्त्वबोधिन्यां प्राग्दीव्यतीयप्रकरणम्।

## अथ तद्धितेषु प्राग्वहतीयप्रकरणम् । ३० ।

**१५४८ प्राग्वहतेष्ठक् ।** (४-४-१) तद्वहतीत्यतः प्राक् ठगधिक्रियते । 'तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्' (वा २९५१) मा शब्दं कार्षीः इति य आह स माशब्दिकः । **१५४९ स्वागतादीनां च ।** (७-३-७) ऐज्न स्यात् । स्वागतमित्याह स्वागतिकः । स्वाध्वरिकः । स्वङ्गस्यापत्यं स्वाङ्गिः । व्यङ्गस्यापत्यं व्याङ्गिः । व्यवहारेण व्यडस्यापत्यं व्याडिः । चरति व्यावहारिकः । स्वपतौ साधु स्वापतेयम् । 'आहौ प्रभूतादिभ्यः' (वा २९५२) । प्रभूतमाह

---

अथ चतुर्थस्य चतुर्थः पादः प्रारभ्यते—प्राग्वहतेष्ठक् । वहतीत्येकदेशेन 'तद्वहति रथयुगप्रासङ्गम्' इति सूत्रं परामृश्यते इत्यभिप्रेत्याह—तद्वहतीत्यत इति । तदाहेति । इतिशब्दो व्युत्क्रमेण तच्छब्दानन्तरं द्रष्टव्यः । तदित्याहेत्यर्थे माशब्दस्यागतइत्यादिशब्देभ्यः ठक उपसंख्यानमित्यन्वयः । तदित्यनेन वाक्यार्थो विवक्षितः । इतिशब्दस्तस्य वाक्यार्थस्य कर्मत्वं गमयति । 'मा शब्दं कार्षीः' इत्याहेत्यर्थे तद्वाक्यावयवाद् 'माशब्द' इत्यादिशब्दात् ठगिति यावत् । मा शब्दं कार्षीः इति य आह स माशब्दिक इति । शब्दं मा कार्षीरित्यन्वयः । 'माङि लुङ्' इति लाडर्थे लुङ् । 'न माङ्योगे' इत्यडागमनिषेधः । शब्दं न कुरु इत्यर्थः । अत्र आहेति ब्रूञ्धात्वर्थव्यक्तवचनक्रिया प्रति मा शब्दं कार्षीरिति वाक्यार्थः कर्म । तद्वाक्यैकदेशो माशब्देति समुदायः । तस्मान्निर्विभक्तिकादयं प्रत्ययः । न हि माशब्देति समुदायाद्विभक्तिरस्ति । एवं च माशब्देति समुदायाट्ठकि माशब्दिक इति रूपम् । 'मा शब्दः कारि' इति पाठे तु कारीति कर्मणि लुङ् । शब्दो न कार्य इत्यर्थः । नच तदाहेत्यर्थे माशब्दादिभ्यः ठगिति यथाश्रुतम् अभ्युपगम्य माशब्दमाहेत्याद्यर्थे माशब्देत्यादिशब्देभ्यो द्वितीयान्तेभ्यः ठगित्येव कुतो न व्याख्यायत इति वाच्यम्, एवं सति 'आहौ प्रभूतादिभ्यः' इत्युत्तरवार्तिकारम्भवैयर्थ्यापत्तेरिति भावः । स्वागतादिगणे स्वागत, स्वध्वर इति पठितम्, तत्र विशेषमाह—स्वागतादीनां च । 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति प्रकरणे 'कमध्यनिहारे' इत्यस्मादुत्तरं सूत्रमिदम् । ऐज्न स्यादिति । शेषपूरणमिदम् । 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति प्राप्त ऐज् न स्यादित्यर्थः । स्वाध्वरिक इति । स्वध्वर इत्याहेत्यर्थः । अथ स्वागतादिगणशेषमुदाहरति—स्वङ्गस्येति । व्याङ्गिरिति । व्यङ्गस्यापत्यमिति विग्रहः । व्यडस्येति । न विद्यते डो यस्य स अडः, विगतः अडः व्यडः । स्वापतेयमिति । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । द्वारादित्वादैच् प्राप्तो निषिध्यते । आहाविति । 'आह' इति पदैकदेशादिकारस्य उच्चारणार्थो निर्देशः । 'तत्'

---

तदाहेतीति । वाक्यादयं प्रत्ययविधिः शब्दो माकारीति यो निषेधति स माशब्दिक इत्युच्यते । तथा नित्यः शब्द इति य आह स नैत्यशब्दिकः । कार्यशब्दिकः । इह वाक्याद् द्वितीया न सम्भवत्यप्रातिपदिकत्वात् । तेन तच्छब्देन

प्राभूतिकः। पार्याप्तिकः । 'पृच्छतौ सुस्नातादिभ्यः' ( वा २९५३ )। सुस्नातं पृच्छति सौस्नातिकः। सौखशायनिकः। अनुशतिकादिः। 'गच्छतौ परदारादिभ्यः' ( वा २९५४ )। पारदारिकः। गौरुतल्पिकः। **१५५० तेन दीव्यति खनति जयति जितम्।** (४-४-२) अक्षैर्दीव्यति आक्षिकः। अभ्र्या खनति आभ्रिकः। अक्षैर्जयति आक्षिकः। अक्षैर्जितमाक्षिकम्। **१५५१ संस्कृतम्।** ( ४-४-३ ) दध्ना संस्कृतं दाधिकम्। मारीचिकम्। **१५५२ कुलत्थकोपधादण्।** ( ४-४-४ ) ठकोऽपवादः। कुलत्थैः संस्कृतं कौलत्थम्। तैन्तिणीकम्। **१५५३ तरति।** ( ४—४—५ ) उडुपेन तरति औडुपिकः। **१५५४ गोपुच्छाट्ठञ्।** ( ४—४—६ ) गौपुच्छिकः। **१५५५ नौद्व्यचष्ठन्।** ( ४—४—७ ) नाविकः। घटिकः। बाहुभ्यां तरति बाहुका स्त्री। **१५५६ चरति।** ( ४—४—८ ) तृतीयान्ताद्गच्छतिभक्षयतीत्यर्थयोष्ठक्स्यात्। हस्तिना चरति हास्तिकः। शाकटिकः

---

इति पूर्ववार्तिकादनुवर्तते। आदेत्यर्थे द्वितीयान्तेभ्यः प्रभूतादिभ्यःठग्वाच्य इत्यर्थः। **पार्याप्तिक इति।** पर्याप्तमाहेत्यर्थः। **पृच्छताविति।**। 'तत्' इत्यनुवर्तते। पृच्छतीत्यर्थे द्वितीयान्तेभ्यः सुस्नातादिभ्यः ठग्वाच्य इत्यर्थः। **सौखशायनिक इति।** सुखशयनं पृच्छतीत्यर्थः। **अनुशतिकादिरिति।** सुखशयनशब्द इति शेषः। ततश्च 'अनुशतिकादीनां च' इति पूर्वोत्तरपदयोरादिवृद्धिरिति भावः। **गच्छताविति।** 'तत्' इत्यनुवर्तते। गच्छतीत्यर्थे परदारादिभ्यो द्वितीयान्तेभ्यः ठगित्यर्थः। **पारदारिक इति।** परदारान्गच्छतीत्यर्थः। **गौरुतल्पिक इति।** गुरुतल्पं गच्छतीत्यर्थः। गुरुतल्पो गुरुस्त्री। **तेन दीव्यति खनति जयति जितम्।** तेन दीव्यति, तेन खनति, तेन जयति, तेन जितम् इति विग्रहेषु तृतीयान्ताट्ठगित्यर्थः। अभ्रिः कुद्दालः। देवदत्तेन जितमित्यत्र तु न ठक्। करणतृतीयान्तादेव तद्विधेः। **संस्कृतम्।** तेनेत्येव। संस्कृतमित्यर्थे तृतीयान्ताट्ठगित्यर्थः। 'संस्कृतं भक्षाः' इत्यत्र तु सप्तम्यन्तादणादिविधिः। **मारीचिकमिति।** मरीचिभिः संस्कृतमित्यर्थः। **कुलत्थकोपधादण्।** संस्कृतमित्यर्थे तृतीयान्तादिति शेषः। **तैन्तिणीकमिति।** तिन्तिणीकेन संस्कृतमित्यर्थः। **तरति।** तरतीत्यर्थे तृतीयान्ताट्ठगित्यर्थः। **गोपुच्छाट्ठञ्।** तरतीत्यर्थे तृतीयान्तादिति शेषः। **नौद्व्यचष्ठन्।** ठनिति च्छेदः। ष्टुत्वकृतः सस्य षकारः॥ तरतीत्यर्थे नौशब्दाद् द्व्यचश्च तृतीयान्तात् ठनित्यर्थः। **नाविक इति।** नावा तरतीत्यर्थः। **घटिक इति।**

---

कर्ममात्रं निर्दिश्यते, तच्च वाक्यार्थरूपमित्याहुः। **ऐज् न स्यादिति।** 'न य्वाभ्याम्-' इति प्राप्त ऐजागमोऽनेन निषिध्यते। 'न कर्म-' इत्यतो नञनुवर्तनादिति भावः। **स्वापतेयमिति।** 'पथ्यतिथिवसतिस्वपतेर्ढञ्' । स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः। द्वारादिफलं तु स्वस्येदं सौवमिति ज्ञेयम्। **अहाविति।** उपसंख्यानमित्यनुपज्यते। आहेतिपदे एकदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण आहावित्यनुकरणम्। **प्राभूतिक इति।** क्रियाविशेषणाद्वक्तरि। **तेन दीव्यति।** इह कालपुरुषसंख्या न विवक्षिताः। तेनाक्षैरदेवीद् देविष्यति वा आक्षिक इति भवति। एवमक्षै-

दध्ना भक्षयति दाधिकः । १५५७ आकर्षात्ष्ठल् । ( ४—४—९ ) आकर्षो निकषोपलः । 'आकषात्' इति पाठान्तरम् । तेन चरति आकर्षिकः । पित्त्वाड्डीष् आकर्षिकी । १५५८ पर्पादिभ्यः ष्ठन् । ( ४—४—१० ) पर्पेण चरति पर्पिकः, पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः । रथिकः । १५५९ श्वगणाट्ठञ् च । ( ४—४—११ ) चात्ष्ठन् । १५६० श्वादेरिञि । ( ७—३—८ ) ऐज्न । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । तदादिविधौ चेदमेव ज्ञापकम् । 'इकारादाविति वाच्यम्' ( वा ४५१२ ) श्वगणेन चरति श्वागणिकः, श्वागणिकी

---

घटेन तरतीत्यर्थः । बाहुका स्त्रीति । उकः परत्वात्, ठस्य कः । अदन्तात्टाप् । चरति । गच्छति भक्षयतीति । 'चर गतिभक्षणयोः' इति चरधातोरर्थद्वये वृत्तेरिति भावः । हास्तिक इति । ठनि इके 'नस्तद्धिते' इति टिलोपः । आकर्षात्ष्ठल् । तेन चरतीत्यर्थे तृतीयान्तादाकर्षशब्दात् ष्ठलित्यर्थः । पर्पादिभ्यः ष्ठन् । ष्ठन् इति च्छेदः । चरतीत्यर्थे तृतीयान्तेभ्य इति शेषः । पित्त्वं ङीषर्थमित्याह—पर्पिकीति । अश्विक इति । अश्वेन चरतीत्यर्थः । श्वगणाट्ठञ् च । उक्तविषय इति शेषः । श्वगणशब्दात्तृतीयान्ताच्चरत्यर्थे ठञ् ष्ठन् च स्यादित्यर्थः । श्वागणिक इत्युदाहरणं वक्ष्यति । तत्र श्वशब्दस्य द्वारादित्वादैजागमे प्राप्ते । *श्वादेरिञि । 'न कर्मव्यतिहारे' इत्यतो 'न' इत्यनुवर्तते । अङ्गस्य* इत्यधिकृतम् । श्वशब्द आदिर्यस्येति विग्रहः । श्वशब्दपूर्वपदस्याङ्गस्य इञि परे नैजागम इत्यर्थः । श्वाभस्त्रिरिति । अत इञ् । श्वादंष्ट्रिरिति । श्वदंष्ट्रस्यापत्यमित्यर्थः । ननु श्वशब्द एव द्वारादौ पठ्यते नतु श्वभस्त्रशब्दः । ततश्च तस्य द्वारादित्वाभावादैजागमप्रसक्तिरेव नेत्यत आह—तदादिविधाविति । द्वारादिगणे श्वन्शब्दस्य पाठेऽपि अस्मादेव प्रतिषेधात् श्वशब्दपूर्वकस्याङ्गस्य द्वारादिगणे ग्रहणं विज्ञायत इत्यर्थः । तत्फलं तु श्ववहनस्येदं शौववहनं नाम नगरम् । ननु प्रकृते श्वागणिके इञभावात्कथमयं निषेध इत्यत आह—इकारादाविति वाच्य

---

देविष्यसि देविष्यामि वा आक्षिकः, दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । कारकं तु विवक्षितमेव 'जयति, जितम्' इति कर्तृकर्मणोः पृथगुपादानात् । तेनाक्षैर्द्यूतं, अक्षैः खादं, इति कर्माद्यर्थे आक्षिक इति न भवति । अभ्रयेति । 'अभ्रिः स्त्री काष्ठकुद्दालः' इत्यमरः । संस्कृतम् । योगविभाग उत्तरार्थः । दाहुकेति । सूत्रे षकारः साहिनिकः, न स्वनुबन्ध इति न ङीप् । तथा च 'आकर्षात् पर्पादे' इत्यादि दलाकवार्तिकं पित्त्वविवेचनाय प्रकरणान्ते पठिष्यति । निकषोपल इति । सुवर्णपरीक्षार्थः । पाठान्तरमिति । एतच्च भ्वादौ 'कषखष—' इत्यादिदण्डके 'आकर्षात्ष्ठल्' इति माधवेनोपन्यस्तम् । किंतु 'आकर्षात्पर्पादेः' इति वार्तिकस्याननुगुणम् । तत्र हि नीरेफपाठे वृत्तासङ्गतिप्रसङ्गात् । पर्प इति । 'पर्प गतौ । 'हलश्च' इति करणे घञ् । इहान्तगणसूत्रं 'पाद पच्च' इति पादाभ्यां चरति पदिकः । यत्तु वार्तिकं 'पद्भाव इके चरतावुपसंख्यानम्' । इति सोऽस्यैव प्रपञ्चः । पर्प, अश्व, अश्वत्थ, रथ, जाल, न्यास, व्याल, 'पादः पच्च' श्वगणाट्ठञ्च । ठकोऽपवादः । इदमेव ज्ञापकं

श्वगणिकः, श्वगणिकी । १५६१ पदान्तस्यान्यतरस्याम् । (७-३-९) श्वादेरङ्गस्य-पदशब्दान्तस्यैज् वा । श्वापदस्येदं श्वापदम्, शौवापदम् । १५६२ वेतनादिभ्यो जीवति । (४-४-१२) वेतनेन जीवति वैतनिकः । धानुष्कः । १५६३ वस्नक्रयविक्रयाट्ठन् । (४-४-१३) वस्नेन मूल्येन जीवति वास्निकः । १५६४ आयुधाच्छ च । (४-४-१४) चाट्ठन् । आयुधेन जीवति आयुधीयः, आयुधिकः । १५६५ हरत्युत्सङ्गादिभ्यः । (४-४-१५) उत्सङ्गेन हरत्यौत्सङ्गिकः । १५६६ भस्त्रादिभ्यः ष्ठन् । (४-४-१६)

---

मिति । इञीति परित्यज्य इकारादाविति वाच्यमित्यर्थः । इञि तु व्यपदेशिवत्त्वेन इकारादित्वम् । श्वागणिक इति । ठञि आदिवृद्धिः । श्वागणिकीति । ठञन्तात् 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' इति ङीप् । श्वगणिक इति । ष्ठनि रूपम् । श्वगणिकीति । षित्त्वाद् ङीष् । प्रसङ्गादाह—पदान्तस्यान्यतरस्याम् । 'श्वादेरिञि' इत्यस्मादुत्तरं सूत्रमिदम् । पदं पदशब्दः अन्तो यस्येति विग्रहः । तदाह—पदशब्दान्तस्येति । ऐज्वेति । निषेधविकल्पे सति विधिविकल्पः फलित इति भावः । श्वापदस्येति । शुनः पदमिव पदं यस्येति विग्रहः । 'शुनो दन्तदंष्ट्रा—' इत्यादिना दीर्घः । शौवापदमिति । 'तस्येदम्' इत्यण् । 'वृद्धाच्छः' इति तु न, अनभिधानादित्याहुः । अन्ये तु श्वपुच्छवद्दीर्घाभावे अणमाहुः । वेतनादिभ्यो जीवति । जीवतीत्यर्थे तृतीयान्तेभ्यः ठगिति शेषः । वैतनिक इति । वेतनेन जीवतीत्यर्थः । धानुष्क इति । धनुषा जीवतीत्यर्थः । उसन्तात्परत्वाट्ठस्य कः । 'इणः ष' इति षत्वम् । वस्नक्रयविक्रयाट्ठन् । जीवतीत्यर्थे तृतीयान्तेभ्यो वस्नादिभ्यः ठन् स्यादित्यर्थः । संघातविगृहीतार्थमिति । व्याख्यानादिति भावः । आयुधाच्छ च । जीवतीत्यर्थे तृतीयान्ताद् आयुधशब्दात् छः स्यात् ठन् चेत्यर्थः । हरत्युत्सङ्गादिभ्यः । हरतीत्यर्थे तृतीयान्तेभ्यः उत्सङ्गादिभ्य ठक् स्यादित्यर्थः । भस्त्रादिभ्यः ष्ठन् ।

---

मिति । द्वारादिगणे श्वन्शब्दः पठ्यते, नतु श्वभस्त्रः श्वदंष्ट्रेत्यादिस्तथा च 'श्वादेरिञि' इति निषेधसूत्रमेव व्यर्थं सद् द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः । फलं तु द्वारपालस्यायं दौवारपाल इत्यादावैजागमस्य प्रवृत्तिः । इकारादाविति । सूत्रे इञीत्यपनीय इकारादाविति पठनीयमित्यर्थः । अन्ये तु इञीति स्थाने इतीति पठनीयम् । तथा चाङ्गाक्षिप्तप्रत्ययस्य विशेष्यत्वाद् 'यस्मिन्विधिस्तदादौ—' इत्यनेन इकारादिर्लभ्यत इत्याह—श्वगणिकीति । ष्ठनः षित्त्वान्ङीष् । श्वापदस्येति । 'अन्येषामपि दृश्यते' इति दीर्घः । धानुष्क इति । वेतनादिगणे धनुर्दण्डेति पठ्यते, तच्च सङ्घातविगृहीतार्थम् । तथा च धानुर्दण्डिकः, दाण्डिक इत्यप्युदाहार्यम् । आयुधाच्छ च । आयुध्यन्ते अनेनेति आयुधम्, 'घनर्थे कविधानम्' इति कः । हरत्युत्सङ्गादिभ्यः । एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे । उत्सङ्ग, उडुप, उत्थित, पिटक, पिटाक । भस्त्रादिभ्यः ष्ठन् । भस्त्रा चर्मविकारः । शीर्षभारशब्दोऽत्र पठ्यते

भस्त्रया हरति भस्त्रिकः । पित्त्वाद् भस्त्रिकी । १५६७ विभाषा विवधात् । (४-४-१७) विवधेन हरति विवधिकः । पक्षे ठञ् । वैवधिकः । एकदेशविकृतस्यानन्यत्वाद्वीवधादपि ष्ठन् । वीवधिकः, वीवधिकी । विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते । १५६८ अण् कुटिलिकायाः । (४-४-१८) कुटिलिका व्याधानां गतिविशेषः, कर्मारोपकरणभूतं लोहं च । कुटिलिकया हरति मृगानङ्गारान्वा कौटिलिको व्याधः कर्मारश्च । १५६९ निर्वृत्तेऽक्षद्यूतादिभ्यः । (४-४-१९) अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम् । १५७० त्रेर्मम्नित्यम् । (४-४-२०) त्रिप्रत्ययान्तप्रकृतिकात् तृतीयान्तान्निर्वृत्तेऽर्थे मप् स्यान्नित्यम् । कृत्या निर्वृत्तं कृत्रिमम् । पक्त्रिमम् । 'भावप्रत्ययान्तादिमब्वक्तव्यः'

---

ष्ठनिति च्छेदः । हरतीत्यर्थे तृतीयान्तेभ्यो भस्त्रादिभ्यः ष्ठन् स्यादित्यर्थः । पित्त्वादिति । ङीप् इति शेषः । विभाषा विवधात् । हरतीत्यर्थे तृतीयान्तात् ष्ठनिति शेषः । अण् कुटिलिकायाः । हरतीत्यर्थे तृतीयान्तात् कुटिलिकाशब्दादण् स्यादित्यर्थः । कर्मारो लोहकारः तस्य यद् अङ्गारतप्तलोहादिग्रहणसाधनं लोहविकारभूतं सन्दंशापरनामधेयम्, तदपि कुटिलिकेत्यर्थः । निर्वृत्तेऽक्षद्यूतादिभ्यः । निर्वृत्तमित्यर्थे तृतीयान्तेभ्योऽक्षद्यूतादिभ्यः ठगित्यर्थः । त्रेर्मम्नित्यम् । तेन निर्वृत्तमित्यर्थे 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययान्तान्नित्यं मप्प्रत्ययः स्यादित्यर्थः 'समर्थानां प्रथमाद्वा' इति महाविकल्पनिवृत्त्यर्थं नित्यग्रहणम् । ततश्च अस्मिन्नर्थे मप्प्रत्ययं विना क्त्रिप्रत्ययान्तस्य प्रयोगो नास्ति भाष्ये स्पष्टम् । एवं चात्र अस्वपदविग्रहं दर्शयति—कृत्या निर्वृत्तमिति । अत्र विग्रहवाक्ये 'क्रिया कृतिः' इति क्तिन्नन्तात् कृतिशब्दः । कृत्रिममिति । 'डुकृञ् करणे' इति धातोः 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययान्तान्मप् । पक्त्रिममिति । पक्त्या निर्वृत्तमित्यस्वपदविग्रहः । 'डुपचष् पाके' इत्यस्मात् क्त्रिप्रत्ययान्तान्मप् । इमब्वक्तव्य इति । निर्वृत्तमित्यर्थे तृतीयान्तादिति शेषः । अत्र नित्यमिति न सम्बध्यते इत्यभिप्रेत्य

---

निपातनाच्छीर्षभावः सप्तमीसमासश्च, 'तत्पुरुषे कृति—' इति वा अलुक् । पक्षे शीर्षभारः । एकदेशविकृतस्येति । 'वीवधाच्चेति वक्तव्यम्' इति वार्तिकं न्यायसिद्धार्थकथनपरमिति भावः । वृत्तिकृत्तु सूत्रे वीवधशब्दं प्रक्षिप्य 'विभाषा विवधवीवधात्' इति पपाठ । त्रेर्मम्नित्यम् । नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम् । अतएव लौकिके विग्रहवाक्ये क्त्र्यन्तादीनां प्रयोगः, न तु क्त्रेः, तदाह—कृत्या निर्वृत्तमिति । एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः । सत्याविधौ त्रिशब्दो नेह गृह्यते, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणात्, 'त्रिंशत्—' इति लिङ्गाच्च । ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां मपं विना त्रिप्रत्ययान्तस्य प्रयोगनिवारणेऽपि तदविवक्षायां तस्य स्वातन्त्र्येण प्रयोगो दुर्वार इति चेत्, न नित्यमिति योगं विभज्य तत्सामर्थ्यादयविरोधानादरेणैव स्वातन्त्र्यवारणात् । इमबिति । एवं च मप् न कर्तव्यः । तथा हि 'भावप्रत्ययान्तादिमप्' । तत्र 'त्रेः' पूर्वेण सिद्धे नियमार्थमिदं त्रिप्रत्ययान्त इमब्विषय एवेति । तेन त्रिप्रत्ययान्तप्रयोगः

( वा २९५९ ) पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् । **१५७१ अपमित्ययाचिताभ्यां कक्कनौ ।** ( ४—४—२१ ) अपमित्येति ल्यबन्तम् । अपमित्य निर्वृत्तमापमित्यकम् । याचितेन निर्वृत्तं याचितकम् । **१५७२ संसृष्टे ।** ( ४—४—२२ ) दध्ना संसृष्टं दाधिकम् । **१५७३ चूर्णादिनिः ।** ( ४—४—२३ ) चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः । **१५७४ लवणाल्लुक् ।** ( ४—४—२४ ) लवणेन संसृष्टो लवणः सूपः । लवणं शाकम् । **१५७५ मुद्गादण् ।** ( ४—४—२५ ) मौद्ग ओदनः । **१५७६ व्यञ्जनैरुपसिक्ते ।** ( ४—४—२६ ) ठक् । दध्ना उपसिक्तं दाधिकम् । **१५७७ ओजःसहोऽम्भसा वर्तते** ( ४—४—२७ ) ओजसा वर्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः । **१५७८ तत्प्रत्यनुपूर्वमीपलोमकूलम् ।** (४—४—२८) द्वितीयान्तादस्माद्वर्तते इत्यस्मिन्नर्थे

लौकिकस्वपदविग्रहं दर्शयति—**पाकेन निर्वृत्तमिति । अपमित्ययाचिताभ्याम् । ल्यबन्तमिति ।** 'मेङ् प्राणिदाने' इत्यस्माद् विनिमयार्थकाद् 'उदीचां माङो व्यतिहारे' इति क्त्वाप्रत्यये गतिसमासे ल्यपि 'मयतेरिदन्यतरस्याम्' इति इत्वे 'ह्रस्वस्य पिति—' इति तुगागमे अपमित्येत्यव्ययम्, 'क्त्वातोसुन्कसुनः' इत्युक्तेरित्यर्थः । निर्वृत्तमित्यर्थे अपमित्येत्यव्ययात्प्रथमान्ताद्याचितशब्दाच्च तृतीयान्तात् कक् कन् च यथासंख्यं स्यातामित्यर्थः । अपमित्येत्यंशे तृतीयान्तत्वासंभवात् प्रथमान्तादिति लभ्यते । **संसृष्टे ।** संसृष्टमित्यर्थे तृतीयान्तात् ठग् इत्यर्थः । **चूर्णादिनिः ।** संसृष्टमित्यर्थे तृतीयान्तादिति शेषः । **लवणाल्लुक् ।** पूर्वसूत्रविहितस्येति शेषः । **मुद्गादण् ।** तेन संसृष्टमित्यर्थे शेषः । **मौद्ग ओदन इति ।** मुद्गैः संसृष्ट इत्यर्थः । **व्यञ्जनैरुपसिक्ते ।** उपसिक्तमित्यर्थे तृतीयान्तेभ्यो व्यञ्जनवाचिभ्यः ठगित्यर्थः । सेचनेन मृदूकरणमुपसेकः । संसृष्ट इत्येव सिद्धे नियमार्थं सूत्रम्—व्यञ्जनवाचिभ्य उपसिक्त एवेति । तेनेह न—सूपेन संसृष्टा स्थाली । **ओजःसहो ।** वर्तते व्याप्रियते इत्यर्थे ओजस्, सहस्, अम्भस् एभ्यः तृतीयान्तेभ्यः ठक् स्यादित्यर्थः । **औजसिक इति ।** ओजसा बलेन वर्तते, युद्धे व्याप्रियत इत्यर्थः । **साहसिक इति ।** सहसा प्राणवियोगाभ्युपगमेन स्तेये व्याप्रियत इत्यर्थः । **आम्भसिक इति ।** अम्भसा हेतुना संचारे व्याप्रियत इत्यर्थः । **तत्प्रत्यनुपूर्व ।** तदिति द्वितीयान्तानुकरणम् । प्रत्यनुपूर्वेभ्यो द्वितीयान्तेभ्य ईपलोमकूलशब्देभ्यो वर्तते इत्यर्थे ठक् स्यादित्यर्थः । ननु प्रतीपं वर्तते इत्यादि-

---

निवर्तते । ततो 'नित्यम्' अनेन निर्वृत्तार्थाविवक्षायामपि मन्तस्य स्वातन्त्र्यं वार्यते । एवं च संख्यावाचित्रिशब्दस्य ग्रहणशङ्कैव नास्ति, भावप्रत्ययान्तादित्यनुवृत्तेः । स्वरेऽपि विशेषो नास्ति, उदात्तनिवृत्तिस्वरेण इमप इकारस्योदात्तत्वात् । **अपमित्येति ।** 'उदीचां माङः—' इति क्त्वाप्रत्यये अपेत्यनेन सह गतिसमासः, क्त्वो ल्यप् । 'मयतेरिदन्यतरस्याम्' इति इत्वम्, 'ह्रस्वस्य—' इति तुक् । ल्यबन्तादस्मात्तृतीयान्तात्प्रत्ययो न भवति, किं तु वचनात्प्रथमान्तादेवेति बोध्यम् । **व्यञ्जनैरुप ।** व्यज्यते अनेन ओदनादिरस इति व्यञ्जनं तद्वाचिभ्य उपसिक्त इत्यर्थे ठक् स्यात् । **तत्प्रत्यनु ।**

ष्वस्थान् । क्रियाविशेषणत्वाद् द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । १५७९ परिमुखं च । ( ४—४—२९ ) परिमुखं वर्तते पारिमुखिकः । चात्पारिपार्श्विकः । १५८० प्रयच्छति गर्ह्यम् ।। ( ४—४—३० ) द्विगुणार्थं द्रव्यं द्विगुणम्, तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिकः । 'वृद्धेर्वृधुषिभावो वक्तव्यः' ( वा २९६५ ) । वार्धुषिकः ।

---

वक्ष्यमाणविग्रहेषु वर्ततेरकर्मकत्वात् कथं द्वितीयेत्यत आह—क्रियाविशेषणत्वादिति । इदं च कारकनिरूपणे निरूपितम् । 'क्रियाविशेषणानां प्रथमान्तत्वमेव' इति तु शब्देन्दुशेखरे । प्रतीपमिति । प्रतिगता आपो यस्मिन्निति बहुव्रीहिः । 'ऋक्पूः—' इत्यकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति ईत्वम् । अनुगता आपो यस्मिन् तदन्वीपम् । 'ऊदनोर्देशे' इत्यूत्वं तु न, अदेशत्वात् । प्रतीपान्वीपशब्दौ हि प्रतिकूलानुकूलशब्दपर्यायौ रूढौ । अवयवार्थेषु तु नाभिनिवेष्टव्यम् । परिमुखं च । अस्माद् द्वितीयान्ताद् वर्तते इत्यर्थे ठगित्यर्थः । चादिति । चकारादनुक्तसमुच्चयार्थात् परिपार्श्वमित्यस्मादपि ठकि पारिपार्श्विक इति भवतीत्यर्थः । पारिमुखिक इत्यस्य यतो यतः स्वामिनो मुखं तत्र वर्तत इत्यर्थः एवं पारिपार्श्विकः । प्रयच्छति गर्ह्यम् । 'तत्' इति द्वितीयान्तमनुवर्तते । गर्ह्यं प्रयच्छतीत्यर्थे द्वितीयान्ताट्ठगित्यर्थः । द्विगुणार्थं द्रव्यं द्विगुणमिति । द्वैगुणिक इति वक्ष्यमाणोदाहरणे द्विगुणशब्देन द्विगुणार्थं द्रव्यं विवक्षितमित्यर्थः । तत्प्रयच्छति द्वैगुणिक इति । द्विगुणो भवतु स्वद्रव्यमृणं प्रयच्छतीत्यर्थः । 'अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके' इत्यादिधर्मशास्त्रविरुद्धत्वादिदं गर्ह्यमिति भावः । वृद्धेरिति । वृद्धिशब्दात् उक्तार्थे ठकि प्रकृतेर्वृधुषि इत्यादेशो वाच्य इत्यर्थः । इकारान्त आदेशः । वार्धुषिक इति । वृद्ध्यर्थं द्रव्यं वृद्धं, तत्प्रयच्छतीत्यर्थे

---

वृतेरकर्मकत्वात्कथं तस्य द्वितीयान्तेन प्रतीपमित्यादिना सम्बन्ध इत्याशङ्कायामाह—क्रियाविशेषणत्वादिति । प्रतीपमिति । प्रतिगता आपोऽस्मिन्निति । बहुव्रीहिः । 'ऋक्पू—' इत्यकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्य—' इति ईत्वम् । व्युत्पत्तिमात्रमिदम् । प्रतिकूलानुकूलपर्याया ह्येते रूढिशब्दाः । आन्वीपिक इति । अन्वीपमित्यत्र 'ऊदनोर्देशे' इत्यूत्वं तु न भवत्यदेशत्वात् । परिमुखमिति । 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः, ततष्ठक् । स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः । यदा तु सर्वतोभावे परिशब्दः प्रादिसमासश्च, तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्तते स एवमुच्यते । एवं पारिपार्श्विकोऽपि द्वये वाच्यः । प्रयच्छति । द्वितीयान्तात्प्रयच्छतीत्यर्थे ठक् स्यात् यत्प्रयच्छति गर्ह्यं चेत्तत् । द्विगुणार्थं द्विगुणमिति । तादर्थ्यात्ताच्छब्द्यमिति भावः । बहुवृद्ध्युद्देश्यकदानकर्मतयाऽस्य द्रव्यस्य गर्ह्यत्वम् । वार्धुषिक इति । वृद्ध्यर्थां वृद्धिं तां प्रयच्छतीति विग्रहः । अथ कथं 'वृद्ध्याजीवस्तु वार्धुषिः' इत्यमरः । ठक्संनियोगेनैव वृधुषिभा

१५८१ कुसीददशैकादशात्ष्ठन्ष्ठचौ । ( ४—४—३१ ) गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे । कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसीदम्, तत्प्रयच्छतीति कुसीदिकः, कुसीदिकी । एकादशार्थत्वादेकादश, ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते, दशैकादशिकः, दशैकादशिकी । दशैकादशान्प्रयच्छतीत्युत्तमर्ण एवेहापि तद्धितार्थः । १५८२ उञ्छति । (४—४—३२) बदराण्युञ्छति बादरिकः । १५८३ रक्षति । ( ४-४-३३ ) समाजं रक्षति सामाजिकः । १५८४ शब्ददर्दुरं करोति । (४—४—३४) शब्दं करोति शाब्दिकः । दार्दुरिकः । १५८५ पक्षिमत्स्यमृगान्हन्ति । ( ४—४—३५ )

वृद्धिशब्दात् ठक् इकादेशे प्रकृतेर्वृधुष्यादेश इति भावः । 'वृद्ध्याजीवस्तु वार्धुषिः' इति तु प्रमाद एव । कुसीद । गर्ह्यार्थाभ्यामिति । कुसीद, दशैकादश आभ्यां द्वितीयान्ताभ्यां गर्ह्यार्थकाभ्यां प्रयच्छतीत्यर्थे क्रमात् ष्ठन्ष्ठचौ स्त इत्यर्थः । पित्त्वम् ङीपर्थमित्याह—कुसीदिकीति । नित्त्वचित्त्वयोस्तु स्वरे विशेषः । अथ ष्ठच्प्रकृतिं दशैकादशशब्दं व्युत्पादयति—एकादशार्थत्वादित्यादिना । यत्र एकादश निष्कान् अधिकान् प्रत्यर्पयेति समयं कृत्वा दश निष्का ऋणत्वेन दीयन्ते, तत्र ऋणत्वेन गृहीता दश निष्का एकादशार्थत्वाद् एकादशशब्देन उपचर्यन्ते । ततश्च एकादश च ते दश चेति कर्मधारये 'संख्याया अल्पीयस्याः' इति दशन्शब्दस्य पूर्वनिपातः । इहैव निपातनादकारः समासान्तः, टिलोपः; दशैकादशा इति रूपमित्यर्थः । दशैकादशिक इति । एकादश निष्कानधिकान् ग्रहीतुं दश निष्कान् अवमर्णाय प्रयच्छतीति यावत् । अथ लौकिकविग्रहवाक्यं दर्शयति—दशैकादशान् प्रयच्छतीति । इहापीति । विग्रहवाक्ये यथा उत्तमर्णः प्रधानत्वेन निर्दिश्यते, तथा समासेऽपि उत्तमर्ण एव ऋणदातैव तद्धितार्थः प्रधानभूत इत्यर्थः । उञ्छति । 'तत्' इति द्वितीयान्तमनुवर्तते । उञ्छतीत्यर्थे द्वितीयान्ताट्ठगित्यर्थः । भूम्यां निपतितस्य व्रीह्यादेः कणश आदानमुञ्छः । रक्षति । अस्मिन्नर्थे द्वितीयान्ताट्ठगित्यर्थः । शब्ददर्दुरं करोति । शब्दं करोति दर्दुरं करोतीति विग्रहे द्वितीयान्ताट्ठगित्यर्थः । इह शब्दविषये प्रकृतिप्रत्ययविभागपूर्वकज्ञाने करोति वर्तते, व्याख्यानात् तेनेह न—शब्दं करोति खरः । दार्दुरिक इति । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद्ग्रामजाले तु दर्दुरम् ।'

---

स्वीकारात् । अत्राहुः—निरङ्कुशाः कवय इति । गर्ह्यमिति किम्, द्विगुणं त्रिगुणं वा वृद्धिं प्रयच्छत्यधमर्ण इत्यर्थे द्वैगुणिक इत्यादि माभूत् । निपात्यत इति । अतएव व्याख्यातृप्रयोगोऽप्युपपद्यत इत्याशयेनोदाहरति—दशैकदशानीति । 'संख्याया अल्पीयस्याः' इति पूर्वनिपातः । उत्तमर्ण एवेति । दश दत्त्वा एकादश गृह्णातीति तस्यैव गर्ह्यत्वादिति भावः । उञ्छति । भूमौ पतितस्यैकैकस्योपादानमुञ्छः । सामाजिक इति । समजन्ति अस्मिन्निति समाजः । शब्दं करोतीति । प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः । अभिधानस्वाभाव्याद् व्युत्पादन एवायं प्रत्ययः । नेह शब्दं करोति वर्वरः खरो वा । दार्दुरिक इति । कुलालः ।

'स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्' (वा ५२३)। 'मत्स्यपर्यायेषु मीनस्यैव'। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। मात्स्यिकः। मैनिकः। शाकुलिकः। मार्गिकः। हारिणिकः। सारङ्गिकः। १५८६ परिपन्थं च तिष्ठति। (४-४-३६) अस्माद् द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात्। पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः। निपातनात् पन्थादेशः। परिपथं हन्ति पारिपथिकः। १५८७ माथोत्तरपदपव्यनुपदं धावति। (४-४-३७) दण्डाकारो माथः पन्था दण्डमाथः। दण्डमाथं

इति विग्रहः। इह यथायोग्यमन्वयः। पक्षिमत्स्यमृगान्हन्ति। अस्मिन्नर्थे पक्ष्यादिशब्देभ्यो द्वितीयान्तेभ्यः ठगित्यर्थः। स्वरूपस्येति। पक्षिमत्स्यमृगशब्दैः तत्तत्स्वरूपाणां तत्तत्पर्यायाणां तद्विशेषवाचिनां च ग्रहणमित्यर्थः, 'स्वं रूपम्—' इति सूत्रभाष्ये तथोक्तेरिति भावः। मीनस्यैवेति। मत्स्यपर्यायेषु मीनस्यैव ग्रहणम्, न त्वनिमिषादिशब्दानामित्यर्थः। इदमपि 'स्वं रूपम्—' इत्यत्र भाष्ये स्थितम्। पाक्षिक इति। स्वरूपस्योदाहरणम्। शाकुनिक इति तु पक्षिपर्यायस्य। मायूरिक इति। पक्षिविशेषस्य। तथा मात्स्यिकः, मैनिकः, शाकुलिक इति क्रमेण स्वरूपपर्यायविशेषाणामुदाहरणम्। तथा मार्गिकः, हारिणिकः, सारङ्गिक इति क्रमेण स्वरूपपर्यायविशेषाणामुदाहरणम्। परिपन्थं च तिष्ठति अस्मादिति। परिपन्थशब्दादित्यर्थः। चकाराद् 'हन्ति' इत्यनुकृष्यते। तदाह—तिष्ठति हन्ति चेति। पन्थानं वर्जयित्वेति। एतेन 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभिः' इति पञ्चम्याम् 'अपपरिबहिरञ्चवः पञ्चम्या' इति अव्ययीभावसमासः सूचितः। व्याप्य वेति। एतेन सर्वतः शब्दपर्यायस्य परेः परिगतः पन्था इति प्रादिसमासे परिपन्थशब्द इति सूचितम्। अव्ययीभावप्रादिसमासौ त्वत्यपि बोध्यम्। उभयथापि क्रियाविशेषणत्वाद् द्वितीयान्तत्वम्। निपातनात् पन्थादेश इति। तद्धप्रत्ययसंनियोगेन निपातनम्। किंतु ततोऽन्यत्रापि परिपन्थशब्दोऽस्ति इदमत्र सूचयितुं प्रकृतेरपि द्वितीयोच्चारणमिति वृत्तिकृतः। इदमत्राभिप्रेत्य विग्रहं दर्शयति—परिपन्थं तिष्ठतीति। माथोत्तर। माथोत्तरपद, पदवी, अनुपद एभ्यो द्वितीयान्तेभ्यो धावतीत्यर्थे ठगित्यर्थः। माथपदं व्याचष्टे—माथः पन्था इति। मथ्यते गन्तृभिराहन्यते इति व्युत्पत्तेरिति भावः। दण्डमाथ इति। दात्रशायितवादि। पन्थानं धावतीति धावतेर्गत्यर्थत्वात् सकर्म

वाद्यभाण्डवाचीह दर्दुरशब्दः। मात्स्यिक इति। 'मत्स्यस्य ङ्याम्' इति परिगणनात् 'सूर्यतिष्या—' इति यलोपाभावः। हारिणिक इति। नन्विदं पर्यायस्योदाहरणं न भवति हरिणस्य मृगविशेषत्वात्तथा चात्र पर्यायस्योदाहरणं किमिति न प्रदर्शितमिति चेत्। अत्राह—आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्तते। यदा हरिणवाची मृगशब्दः, तदा मृगपर्यायस्योदाहरणं भवत्येवेति। परिपन्थं च। परिमुखवदयमव्ययीभावस्तत्पुरुषो वा क्रियाविषयत्वात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वमस्त्येवेत्याह। द्वितीयान्तादिति। चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनो-

धावति दाण्डमाथिकः। पादविकः। आनुपदिकः। १५८८ आक्रन्दाट्ठञ् च। (४-४-३८) अस्माट्ठञ्स्यात्, चाट्ठक् धावतीत्यर्थे। आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः। १५८९ पदोत्तरपदं गृह्णाति। (४-४-३९) पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः। १५९० प्रतिकण्ठार्थललामं च। (४-४-४०) एभ्यो गृह्णात्यर्थे ठक्स्यात्। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः। १५९१ धर्मं चरति। (४-४-४१) धार्मिकः। 'अधर्माच्चेति वक्तव्यम्' (वा २९६६)। आधर्मिकः। १५९२ प्रतिपथमेति ठंश्च। (४-४-४२) प्रतिपथमेति प्रतिपथिकः, प्रातिपथिकः। १५९३। समवायान्समवैति। (४-४-४३) सामवायिकः। सामूहिकः। १५९४ परिषदो ण्यः। (४—४—४४) परिषदं समवैति पारिषद्यः।

---

कत्वम्। पादविक इति। पदवीं धावतीति विग्रहः। आनुपदिक इति। अनुपदं धावतीति विग्रहः। आक्रन्दाट्ठञ् च। अस्मादिति। आक्रन्दशब्दाद् द्वितीयान्तादित्यर्थः। आक्रन्दन्ति अस्मिन्नित्याक्रन्दः, तदाह—आक्रन्दो दुःखिनां रोदनस्थानमिति। पदोत्तरपदम्। पदशब्द उत्तरपदं यस्य तस्माद् द्वितीयान्ताद् गृह्णातीत्यर्थे ठक् स्यादित्यर्थः। प्रतिकण्ठार्थ। एभ्य इति। प्रतिकण्ठ, अर्थ, ललाम इत्येभ्य इत्यर्थः। आर्थिक इति। अर्थं गृह्णातीत्यर्थः। लालामिक इति। ललामं चिह्नं तद् गृह्णातीत्यर्थः। 'लक्ष्म ललामं च ललाम च' इत्यमरः। धर्मं चरति। चरतीत्यर्थे द्वितीयान्ताद् धर्मशब्दाट्ठगित्यर्थः। अधर्माच्चेति। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तदन्ताग्रहणादप्राप्ते आरम्भः। प्रतिपथमेति। ठंश्च। प्रतिपथमित्यव्ययीभावाद् एतीत्यर्थे ठन् ठक् च स्यादित्यर्थः। प्रतिपथमिति 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। 'ऋक्पूः—' इति समासान्तः। समवायान् समवैति। द्वितीयान्तेभ्यः समवायवाचिशब्देभ्यः समवैतीत्यर्थे ठगित्यर्थः। बहुवचनात्तदर्थवाचिशब्दग्रहणम् समवैति मेलयतीत्यर्थः। परिषदो

---

तीत्याह। तिष्ठति हन्ति चेति। माथ इति। मथ्यते गन्तृभिरिति माथः। 'मथे विलोडने' कर्मणि घञ्। पदोत्तरपदम्। पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदम्। पदान्तमिति तु नोक्तम्, बहुच्पूर्वान्मा भूदिति। प्रतिकण्ठमिति। कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभाव, 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन वा। यस्तु 'प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्येह न ग्रहणं व्याख्यानादित्याहुः। धर्मं चरति। चरतिरिहासेवायां न त्वनुष्ठानमात्रे। तेन दैववशाद्धर्मे प्रवृत्तो दुर्वृत्तो धार्मिक इति नोच्यते। आसेवा हि स्वारसिकी प्रवृत्तिः। एवं दैववशादधर्मे प्रवृत्तः यः सद्वृत्त आधर्मिक इति नोच्यते। प्रतिपथमिति। वीप्सायामाभिमुख्ये वा अव्ययीभावः। 'ऋक्पूः—' इति समासान्तः। समवायान्! समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात्समवैतीत्यर्थे। इह समवपूर्वस्येणोर्थः प्रविश्यैकदेशीभवनम्। तत्र गुणभूतप्रवेशापेक्षया समवायानिति द्वितीयानिर्देशः। विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते 'कुरुक्षेत्रे समवेताः' इति यथा। 'एत्येति—' इति वृद्धिरिह

१५९५ सेनाया वा । (४-४-४५) ण्य स्यात् । पक्षे ठक् । सैन्या, सैनिका । १५९६ सञ्ज्ञायां ललाटकुक्कुट्यौ पश्यति । (४-४-४६) ललाटं पश्यति लालाटिकः सेवकः । कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । कौक्कुटिको भिक्षुः । १५९७ तस्य धर्म्यम् (४-४-४७) आपणस्य धर्म्यमापणिकम् । १५९८ अण् महिष्यादिभ्यः । (४-४-४८) महिष्या धर्म्यं माहिषम् । याजमानम् । १५९९ ऋतोऽञ् (४-४-४९) यानुधर्म्यं यात्रम् । 'नराच्चेति वक्तव्यम्' (वा २९६७) नरस्य धर्म्या नारी 'विशसितुरिड्लोपश्चाञ्च वक्तव्यः' (वा २९६८) विशसितुर्धर्म्यं वैशस्त्रम् । 'विभाजयितुर्णिलोपश्चाञ्च वाच्यः' (वा २९६९)। विभाजयितुर्धर्म्यं वैभाजित्रम् । १६०० अवक्रयः । (४-४-५०) षष्ठ्यन्ताट्ठक्स्यादवक्रयेऽर्थे । आपणस्यावक्रय आपणिकः । राजग्राह्यं द्रव्यमवक्रयः । १६०१ तदस्य पण्यम् (४-४-५१) अपूपाः पण्यमस्य आपूपिकः । १६०२ लवणाट्ठञ् (४-४-५२) लावणिकः ।

ण्य । द्वितीयान्तात्परिषच्छब्दात्समवैतीत्यर्थे ठगपवादो ण्य इत्यर्थः । सेनाया वा ण्य स्यादिति । शेषपूरणमिदम् । द्वितीयान्तात्सेनाशब्दात् समवैतीत्यर्थे ण्यो वा स्यादित्यर्थः । सैन्या, सैनिका इति । सेनां मेलयतीत्यर्थः । सञ्ज्ञायाम् । ललाटकुक्कुटीशब्दाभ्यां[1] पश्यतीत्यर्थे ठक् स्यात्सञ्ज्ञायामित्यर्थः । सञ्ज्ञा रूढिः, न त्वाधुनिकः सङ्केतः । लालाटिकः सेवक इति । दूरे स्थित्वा प्रभोर्ललाटं पश्यति, न तु कार्ये प्रवर्तत इत्यर्थः । 'लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः' इत्यमरः । कौक्कुटिक इति । कुक्कुटीपतनार्हदेशं पश्यतीत्यर्थः । तस्य धर्म्यम् । धर्मादनपेतं धर्म्यम्, आचरितुं योग्यमित्यर्थः । धर्म्यमित्यर्थे षष्ठ्यन्ताट्ठगित्यर्थः । अण् महिष्यादिभ्यः षष्ठ्यन्तेभ्यो धर्म्यमित्यर्थे इति शेषः । ऋतोऽञ् । ऋदन्तात्षष्ठ्यन्तात् धर्म्यमित्यर्थेऽञित्यर्थः । नारीति । अञन्तत्वाद् ङीबिति भावः । इड्लोप इति । इटो लोप इत्यर्थः । वैशस्त्रमिति । विशसितृशब्दादञि इटो लोपः ऋकारस्य यणि आदिवृद्धिः । वैभाजित्रमिति । विभाजयितृशब्दादञि णिलोपः । अवक्रयः । 'तस्य' इत्यनुवर्तते, तदाह—षष्ठ्यन्तादिति । तदस्य पण्यम् । अस्मिन्नर्थे प्रथमान्तात् ठगित्यर्थः । विक्रेतव्यं द्रव्यं पण्यम् । लवणाट्ठञ् । 'तदस्य पण्यम्' इत्येव ।

न भवति, एजादित्वाभावात् । सैन्या, सैनिका इति । द्वितीयान्ताण्ण्यठकौ । यत्तु, 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इति निघण्टूक्तं तत्फलितार्थकथनपरं बोध्यम् । सञ्ज्ञायाम् । ललाटकुक्कुटीशब्दाभ्यां द्वितीया । ताभ्यां पश्यतीत्यर्थे ठक् स्यात् । सम्यग्ज्ञानं सञ्ज्ञा प्रसिद्धिस्तस्याम्, प्रसिद्धिविषयभूतेऽर्थे इत्यर्थः । लालाटिक इति । दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः । 'लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः' । कौक्कुटिको भिक्षुरिति । सन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः । धर्म्यमिति ।

१ एतदग्रे द्वितीयान्ताभ्यामित्यधिकं क. ख ।

१६०३ किसरादिभ्यः ष्ठन्। (४-४-५३) किसरं पण्यमस्य किसरिकः। षित्त्वान्ङीष्। किसरिकी। किसर, उशीर, नलद इत्यादिकिसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः। १६०४ शलालुनोऽन्यतरस्याम्। (४-४-५४) ष्ठन् स्यात्, पक्षे ठक्। शलालुकः, शलालुकी। शालालुकः, शालालुकी। शलालुः सुगंधिद्रव्यविशेषः। १६०५ शिल्पम्। (४-४-५५) मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। १६०६ मड्डुकझर्झरादणन्यतरस्याम्। (४-४-५६) मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः। झार्झरः, झार्झरिकः। १६०७ प्रहरणम्। (४—४—५७) 'तदस्य' इत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः। १६०८ परश्वधाट्ठञ्च। (४—४—५८) पारश्वधिकः। १६०९ शक्तियष्ट्योरीकक्। (४—४—५९) शाक्तीकः। याष्टीकः १६१० अस्ति नास्ति दिष्टं मतिः। (४—४—६०) 'तदस्य' इत्येव। अस्ति

लावणिक इति। लवणमस्य पण्यमित्यर्थः। किसरादिभ्यः ष्ठन्। 'तदस्य पण्यम्' इत्येव। ष्ठन्निति च्छेदः, तदाह—षित्त्वान्ङीषिति। शलालुनोऽन्यतरस्याम्। ष्ठन्निति शेषः। 'तदस्य पण्यम्' इत्येव। शलालुक इति। शलालुः पण्यमस्येति विग्रहः। उकः परत्वाट्ठस्य कः। षित्त्वस्य फलमाह—शलालुकीति। शिल्पम्। तदस्य शिल्पमित्यर्थे प्रथमान्तात् ठगित्यर्थः। क्रियासु कौशलं, शिल्पम्। ननु मार्दङ्गिक इत्युदाहरणं वक्ष्यति, तत्र मृदङ्गं शिल्पमिति कथं विग्रहः। मृदङ्गस्य शिल्पत्वासंभवात्, तत्राह—मृदङ्गवादनमिति। मृदङ्गवादनविषयकमित्यर्थः। मृदङ्गशब्दो लक्षणया मृदङ्गवादनविषयक इति भावः। मड्डुकझर्झरात्। 'तदस्य शिल्पम्' इत्येव। पक्षे ठक्। मड्डुकझर्झरौ वाद्यविशेषौ। प्रहरणम्। 'तदस्य' इत्येव। प्रहरणवाचिनः प्रथमान्तात्तदस्येत्यर्थे ठगित्यर्थः। प्रह्रियतेऽनेनेति प्रहरणम्, आयुधम्। धानुष्क इति। धनुः प्रहरणमस्येति विग्रहः। उसन्तात्परत्वाट्ठस्य कः। 'इणः षः' इति षः। परश्वधाट्ठञ् च। 'तदस्य प्रहरणम्' इत्येव। चात् ठक्। 'परशुश्च परश्वधः' इत्यमरः। शक्तियष्ट्योरीकक्। शक्तियष्टिशब्दाभ्यां प्रथमान्ताभ्यां प्रहरणवाचिभ्यामस्येत्यर्थे ईकक् स्यादित्यर्थः। अस्ति नास्ति। तदस्येत्येवेति। अस्तीति मतिरस्यास्ति, नास्तीति मतिरस्यास्ति, दिष्टमिति मतिरस्यास्तीत्यर्थेषु क्रमेण अस्तीत्यस्माद् नास्तीत्यस्माद् दिष्टमित्यस्माच्च प्रथमान्ताट्ठगित्यर्थः। अस्तिनास्तिशब्दौ निपातौ। यद्वा वचना-

धर्मादनपेतं धर्म्यम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्। अवक्रयः। अवक्रीयते अनेनेति करणे 'एरच्'। पण्यमिति। पणितव्येऽर्थे 'अवद्यपण्य—' इति यदन्तो निपातितः। शलालुक इति। 'इसुसुक्तान्तात्कः'। ठक्पक्षे त्वादिवृद्धिः। शालालुकः। मार्दङ्गिक इति। मृदङ्गशब्देन मृदङ्गवादनं लक्ष्यते। मुख्यार्थे तु प्रयोगो न भवति, अनभिधानादिति भावः। शिल्पं कौशलम्। तच्च मृदङ्गवादनविषयकम्, तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः। प्रहरणम्। प्रह्रियते अनेनेति प्रहरणमायुधम्। धानुष्क इति। 'इसुसुक्तान्तात्कः' 'इणः षः' इति

परलोक इत्येव मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य स दैष्टिकः । १६११ शीलम् । (४-४-६१) अपूपभक्षणं शीलमस्य आपूपिकः । १६१२ छत्रादिभ्यो णः । (४-४-६२) गुरोर्दोषाणामावरणं छत्रम्, तच्छीलमस्य छात्रः । १६१३ कार्मस्ताच्छील्ये । (६-४-१७२) कार्म इति ताच्छील्ये णे टिलोपो निपात्यते । कर्मशीलः कार्मः । 'नस्तद्धिते' (सू ६७९) इत्येव सिद्धे 'अण्कार्यं ताच्छीलिके णेऽपि' । तेन चौरी, तापसी इत्यादि सिद्धम् । ताच्छील्ये किम्—कार्मणः । १६१४ कर्माध्ययने वृत्तम् । (४—४—६३) प्रथमान्तात्षष्ठ्यर्थे ठक्स्यादध्ययने वृत्ता

---

देव अस्यानात्प्रत्ययः । 'दैवं दिष्टम्–' इत्यमरः । शीलम् । अस्येत्यर्थे शीलवाचिनः प्रथमान्ताट्ठगित्यर्थः । शीलं स्वभावः । अपूपभक्षणमिति । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः । छत्रादिभ्यो णः । एभ्यः प्रथमान्तेभ्यः अस्य शीलमित्यर्थे णप्रत्ययः । छत्रं शीलमस्य छात्रः, इत्युदाहरणं वक्ष्यति । तत्र छत्रस्य शीलत्वानुपपत्तेः छत्रपदं गुरुदोषावरणे गौणमित्याह–गुरोरिति । शीलमित्यर्थे छत्रादित्वाद् णप्रत्यये कृते । कार्मस्ताच्छील्ये । तत् शीलं यस्य स तच्छीलः, तस्य भावः ताच्छील्यम् । तस्मिन्वाच्ये कार्म इति भवतीत्यर्थः । णप्रत्यये परे टिलोपः स्यादिति यावत्, तदाह–टिलोपो निपात्यत इति । णेऽपीत्यनन्तरम् इति ज्ञापनार्थमिदमिति शेषः । अत्र टिलोपविधिर्हि 'अन्' इति प्रकृतिभावनिवृत्त्यर्थः । ततश्च अणि विहितस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधादण्कार्यं कारिकणप्रत्ययस्य ज्ञाप्यत इति भावः । तेनेति । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहः चुरातपः शब्दाभ्यां छत्रादित्वाण्णप्रत्यये सति तदन्ताभ्यामणन्तकार्ये ङीपि चौरी तापसीति सिद्धमित्यर्थः । कार्मण इति । 'तस्येदम्' इत्यणि 'कार्मस्ताच्छील्ये' इत्यस्याप्रवृत्त्या 'अन्' इति प्रकृतिभावान्न टिलोप इति भावः । कर्माध्ययने वृत्तम् । 'तदस्य पण्यम्' इत्यतः 'तदस्य' इत्यनुवर्तते । 'तदस्य कर्माध्ययने वृत्तम्' इत्यर्थनिर्देशः । तत्र तदित्यनेन विशेष्येण कर्म वृत्तमित्यन्वेति । कर्मशब्दः क्रियापरः । वृत्तमित्यस्य जातमित्यर्थः । वृत्तं कर्म प्रति विशेष्यसमर्पकं तदिति प्रथमोच्चारितम् ।

---

विसर्गस्य षः । परश्वधाट्ठञ् । षाट्ठक् । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' । परलोक इति । एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते । आस्तिक इति । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचनसामर्थ्यादस्तीत्याख्यातात् नास्तीति निपातसमुदायाच्च प्रत्ययः । दिष्टमिति । 'दैवं दिष्टं भागधेयम्' इत्यमरः । 'नालम्बते दैष्टिकताम्' इति माघः । 'प्रमाणानुगा मतिर्दिष्टा' इति प्राचोक्तिस्तूपेक्ष्या । दिष्टशब्दस्य लोके प्रमाणानुगमतिवाचकत्वे चामरकोशविरोधादिति दिक् । छत्रादिभ्यो णः । 'छत्रादिभ्योऽण्' इत्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः । ताच्छील्ये ण इति । कर्मशब्दस्य छत्रादित्वादिति भावः । चौरीत्यादि । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप सिद्ध्यतीत्यर्थः । कर्माध्ययने ।

या क्रिया सा चेत्प्रथमान्तस्यार्थः। एकमन्यद् वृत्तमस्य ऐकान्यिकः। यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातम्, सः। **१६१५ बह्वच्पूर्वपदाट्ठच्**[1]। (४—४—६४) प्राग्विषये। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। द्वादशापपाठा अस्य जाता इत्यर्थः। **१६१६ हितं भक्षाः**। (४—४—६५) अपूपभक्षणं हितमस्मै आपूपिकः। **१६१७ तदस्मै दीयते नियतम्**। (४-४-६६) अग्रभोजनं नियतं दीयते अस्मै आग्रभोजनिकः। **१६१८ श्राणामांसौदनाट्टिठन्**। (४-४-६७) श्राणा नियतं दीयतेऽस्मै श्राणिकः, श्राणिकी। मांसौदनग्रहणं सङ्घातविगृहीतार्थम्। मांसौ-

---

ततश्च अस्य अध्ययनविषये तत्कर्म वृत्तमित्यर्थे तच्छब्दगम्यविशेष्यवाचकात् प्रथमान्ताट्ठक् स्यादित्यर्थः। तदाह—**प्रथमान्तादिति**। वृत्तं कर्म प्रति विशेष्यसमर्पकादिति शेषः। **अध्ययने वृत्तेति**। विषयसप्तम्येषा। **या क्रियेति**। अनेन कर्मशब्दः क्रियापर इति सूचितम्। **प्रथमान्तस्यार्थ इति**। अनेन कर्म वृत्तमित्येतत् तदित्यस्य प्रथमान्तस्य विशेषणमिति सूचितम्। तदित्यननुवृत्तौ कर्मशब्दस्यैव सूत्रे प्रथमानिर्दिष्टत्वात् तत एव प्रत्ययः स्यात्, नतु तद्विशेष्यवाचकात्, तस्य प्रथमानिर्दिष्टत्वाभावादित्यभिप्रेत्योदाहरति—**एकमन्यद्वृत्तमस्य ऐकान्यिक इति**। 'तद्धितार्थ—' इति समासे एकान्यशब्दाट्ठमिति भावः। द्वैयन्यिकः, त्रैयन्यिकः। ऐजागमो विशेषः। **बह्वच्पूर्वपदाट्ठक्**। 'तदस्य कर्माध्ययने वृत्तम्' इत्यनुवर्तते। तदाह—**प्राग्विषय इति**। **द्वादशान्यिक इति**। 'तद्धितार्थ—' इति समासः। एवं त्रयोदशान्यिकः। चित्त्वान्नादिवृद्धिः। **हितं भक्षाः**। 'तदस्य' इत्यनुवृत्तम्। तत्र षष्ठी चतुर्थ्या विपरिणम्यते, हितयोगात्। तद् अस्मै हित-मित्यर्थे प्रथमान्ताट्ठक् स्याद् हितं भक्षाश्चेत् ते स्युरित्यर्थः। संस्कृतं भक्षाः इतिवद्व्याख्येयम्। **अपूपभक्षणमिति**। अनेन अपूपशब्दः अपूपभक्षणे लाक्षणिक इति सूचितम्। अपूपो हितमित्यर्थे तु न ठक्, अभिधानस्वा-भाव्यादिति भावः। **तदस्मै दीयते नियतम्**। अस्मिन्नर्थे प्रथमान्ताट्ठ-गित्यर्थः। नियुक्तमिति पाठान्तरम्, नियतमित्यर्थः। **श्राणामांस**। तदस्मै दीयते नियतमित्येव। श्राणा यवागूः। 'यवागूरुष्णिका श्राणा विलेपी

---

'तदस्य' इत्यनुवर्तते, ठगिहाविक्रियत एव तदाह—**प्रथमान्तादित्यादि**। **ऐका-न्यिक इति**। एकमन्यदिति विगृह्य 'तद्धितार्थ—' इति समासः, ततष्ठक्। एवं द्वैयन्यिकः, त्रैयन्यिक इत्युदाहार्यम्। इह तु वृद्धिं बाधित्वा 'न य्वाभ्याम्—' इत्यैच्। **हितं भक्षाः**। 'अस्य' इति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै—' इत्यस्यापकर्षो वेत्याशयेनाह—**अपूपभक्षणं हितमस्मा इति**। अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः। **श्राणा**। 'यवागूरुष्णिका श्राणा विलेपी तरला

---

१ इह 'ठच्' इति पाठो बालमनोरमासंमतः। काशिकायामपि तथैवोपलभ्यते। कौमुदीपुस्तकान्तरेषु तु 'ठञ्' इति पाठ उपलभ्यते, मुद्रितेष्वष्टाध्यायीपुस्तकेष्वपि प्रायेण 'ठञ्' इत्येवोपलभ्यते।

दैनिकः, मासिकः, औदनिकः। १६१९ भक्तादणन्यतरस्याम्। (४—४—६८) पक्षे ठक्। भक्तमस्मै नियतं दीयते भाक्तः भाक्तिकः। १६२० तत्र नियुक्तः। (४-४-६९) आकरे नियुक्त आकरिकः। १६२१ अगारान्ताट्ठन्। (४-४-७०) देवागारे नियुक्तो देवागारिकः। १६२२ अध्यायिन्यदेशकालात्। (४—४—७१) निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि। श्मशानेऽधीते श्माशानिकः। चतुर्दश्यामधीते चातुर्दशिकः। १६२३ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति। (४—४—७२) 'तत्र' इत्येव। वंशकठिने व्यवहरति वांशकठिनिकः। वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनः। तस्मिन्देशे या क्रिया यथा अनुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः। प्रास्तारिकः। सांस्थानिकः। १६२४ निकटे वसति। (४—४—७३) नैकटिको भिक्षुः। १६२५ आवसथात्ष्ठल्। (४—४—७४) आवसथे वसति आवसथिकः। षित्त्वान्ङीष्। आवसथिकी।

---

तरला च सा' इत्यमरः। टित्त्वं ङीबर्थम्। तदाह—श्राणिकीति। संघातविगृहीतार्थमिति। ठकैव सिद्धे औदनिक इत्यत्र आदिवृद्ध्यभावार्थं प्रत्ययान्तरविधानमिति भावः। भक्तादणन्यतरस्याम्। तदस्मै दीयते नियतमित्येव। तत्र नियुक्तः। अस्मिन्नर्थे सप्तम्यन्ताट्ठक् स्यादित्यर्थः। नियुक्तः अधिकृतः। संरक्षणादौ प्रेरित इति यावत्। आकरिक इति। आकरो रत्नाद्युद्भवस्थानम्। अगारान्ताट्ठन्। तत्र नियुक्त इत्येव। नित्त्वान्नादिवृद्धिः। तदाह—देवागारिक इति। अध्यायिन्यदेशकालात्। निषिद्धेति। अदेशकालेत्यत्र नञ् निषिद्धवचन इति भावः। श्माशानिकः। चातुर्दशिक इति। देशकालभिन्नादिति व्याख्यानं तु इह न स्यादिति भावः। कठिनान्तप्रस्तार। अस्मिन्नर्थे कठिनान्त, प्रस्तार, संस्थान एभ्यः सप्तम्यन्तेभ्यः। ठगित्यर्थः। वंशकठिनशब्दं विवृणोति—वंशा इति। व्यवहरणम् उचितक्रिया, तदाह—यस्मिन्देश इति। प्रस्तारसंस्थानशब्दौ अवयवसंनिवेशपर्यायौ। निकटे वसति। अस्मिन्नर्थे। सप्तम्यन्तान्निकटशब्दाट्ठगित्यर्थः। नैकटिको भिक्षुरिति। 'ग्रामाद्बहिर्भिक्षुणा वस्तव्यम्' इति शास्त्रमुल्लङ्घ्य निकटे यो भिक्षुर्वसति तत्रैवायं ठगिति भावः। अत्र व्याख्यानमेव शरणम्। आवसथात्ष्ठल्। 'तत्र वसति' इत्यर्थे आवसथात् सप्तम्यन्तात् ष्ठलित्यर्थः। आवसथं गृहम्। षित्त्वं ङीषर्थम्। तदाह—आवस

---

च सा' इत्यमरः। टिठनिति। इकार उच्चारणार्थः। टः ङीबर्थः। संघातविगृहीतार्थमिति। औदनिक इत्यत्र हि वृद्धिनिवारणाय टिठनारम्भः। अन्यथा ठग्वा ठञेव वा स्यादिति भावः। आकरिक इति। 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः। अध्यायिन्य। अदेशकालात् किम्, काश्यामधीते, पूर्वाह्णे अधीते। कठिनान्त। प्रस्तारसंस्थानशब्दौ संनिवेशपर्यायाविति बहवः। प्रस्तारो यत्नः। 'प्रयत्नो यत्न' इति मनुः। संस्थानं संनिवेश इत्येके। नैकटिको भिक्षुरिति। संन्यासी हि ग्रामस्य निकटे वसन् भिक्षार्थमेव ग्रामे प्रविशति, न तु तत्र वसतीति भावः। आवसथात्।

'आकर्षात्पपर्दिर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
आवसथात्किसरादेः पितः षडेते ठगधिकारे ॥'

( वा २९५५ ) षडिति सूत्रषट्केन विहिता इत्यर्थः । प्रत्ययास्तु सप्त ।

इति तद्धितेषु ठगधिकारप्रकरणम् ।

---

थिकीति । आकर्षादित्यादि । श्लोकवार्तिकमिदम्—'प्राग्वहतेष्ठक्' इत्यादौ ठगिति वा ष्ठगिति छेद इति संशयनिवृत्त्यर्थम् 'आकर्षात्ष्ठल्' इति सूत्रभाष्ये पठितम् । तत्र आकर्षादित्यनेन 'आकर्षात्ष्ठल्' इति सूत्रं विवक्षितम् । पर्पादिभ्य इत्यनेन 'पर्पादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । भस्त्रादिभ्य इत्यनेन 'भस्त्रादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । कुसीदसूत्रादित्यनेन 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' इति सूत्रं विवक्षितम् । आवसथादित्यनेन 'आवसथात् ष्ठल्' इति सूत्रं विवक्षितम् । किसरादेरित्यनेन 'किसरादिभ्यः ष्ठन्' इति सूत्रं विवक्षितम् । 'प्राग्वहतेष्ठक्' इत्यधिकारे एतैः सूत्रैर्विहिताः षट् प्रत्यया पित इत्यर्थः । ननु 'कुसीद—' इति सूत्रे प्रत्ययद्वयविधानाद् एतत्सूत्रषट्कविहिताः सप्त प्रत्यया लभ्यन्त इति षट् पित इति कथमित्यत आह—षडितीति । षडित्यनेन सूत्राभिप्रायं षट्त्वं विवक्षितमिति भावः ।

इति तद्धितेषु प्राग्वहतीयप्रकरणम् ॥

---

लकारः स्वरार्थः । आवसन्त्यस्मिन्नित्यावसथः । 'उपसर्गे वसेः' इत्यथ प्रत्ययः । कुसीदसूत्रादिति । 'कुसीददशैकादशात्—' इति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः । इह 'नौ द्व्यचष्ठन्' इत्यत्रैव येषां षकारः सांहितिक इति सम्भाव्यते तेषामेव गणने ष्ठलादेः षित्त्वमनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः पित्प्रत्ययान्सर्वानपि पर्यजीगणत् ।

इति तत्त्वबोधिन्यां ठगधिकारप्रकरणम् ।

## अथ तद्धितेषु प्राग्घितीयप्रकरणम् ॥२१॥

१६२६ प्राग्घिताद्यत् । ( ४—४—७५ ) 'तस्मै हितम्' ( सू १६६५ ) इत्यत प्राग्यदधिक्रियते । १६२७ तद्वहति रथयुगप्रासङ्गम् । ( ४—४—७६ ) रथ वहति रथ्य । युग्य । वत्साना दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्ग, त वहति प्रासङ्ग्य । १६२८ धुरो यड्ढकौ । ( ४—४—७७ ) 'हलि च' ( सू ३५४ ) इति दीर्घे प्राप्ते । १६२९ न भकुर्छुराम् । ( ८—२—७९ ) भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । धुर्य धौरेय १६३० ख सर्वधुरात् । ( ४—४—७८ ) सर्वधुरा वहतीति सर्वधुरीण । १६३१ एकधुराल्लुक्च । ( ४—४—७९ ) एकधुरा वहति एकधुरीण, एकधुर १६३२ शकटादण् । ( ४—४—८० ) शकट वहति शाकटो गौ । १६३३ हलसीराट्ठक् ।

---

अथ प्राग्घितीयप्रकरण निरूप्यते—प्राग्घिताद्यत् । हितशब्द तद्घटितसूत्रपर । तदाह—तस्मै हितमिति । तद्वहति रथ । रथादि वहतीत्यर्थे द्वितीयान्ताद् रथ युग प्रासङ्ग इति त्रयाद् यत्स्यादित्यर्थ । युग्य इति । रथादिवहनकाले अश्वादि-स्कन्धेषु तिर्यग् यत् काष्ठमीषत्प्रोतमासज्यते तद्युगम्, तद्वहतीत्यर्थ । दमनकाल इति । रथादि वहन सुशिक्षितावश्वौ नियुज्य तत्स्व धवाद्ययुगे यत्काष्ठान्तरमासज्य तस्मिन्नशिक्षिता अश्वादयो वहनशिक्षार्थं नियुज्यन्ते स प्रासङ्ग इत्यर्थ । 'प्रासङ्गो ना युगाद्युगे' इत्यमर । धुरो यड्ढकौ । धुरशब्दाद् द्वितीयान्ताद् वहतीत्यर्थे यत् ढक् च स्यादित्यर्थ । यड्ढका-विति पाठान्तरम् । हलि चेतीति । 'धुर्वी हिसायाम्' 'भ्राजभास—' इति क्विप् । 'राल्लोप' इति लोप । अश्वादिस्कन्धवाह्यप्रदेशो युगावयवो धू । धुर्शब्दाद् यति 'हलि च' इति दीर्घे प्राप्ते सतीत्यर्थ । न भकुर्छुराम् । 'वोरुपधाया—' इत्यत 'उपधाया' इति 'दीर्घ' इति चानुवर्तते, तदाह—भस्येत्यादिना । 'धूर्वहे धुर्यधौरेयधुरीणा' इत्यमर । ख सर्वधुरात् । सर्वा धू सर्वधुरा । 'पूर्वकाल—' इति तत्पुरुष । 'ऋक्पू—' इति समासान्त 'परवल्लिङ्गम्—' इति स्त्रीत्वाट्टाप् । इह तु शब्दस्वरूपापेक्षया नपुसकनिर्देश । द्वितीयान्ता त्सर्वधुराशब्दाद् वहतीत्यर्थे ख स्यादित्यर्थ । सर्वधुरीण इति । सर्वधुरा वहतीत्यर्थ । 'स तु सर्वधुरीणो य 'भवेत् सर्वधुरावह' इत्यमर । एकधुरा-ल्लुक् च । एकधुराशब्दाद् द्वितीयान्ताद्वहतीत्यर्थे ख स्यात् । तस्य पक्षे लुगित्यर्थ ।

---

युग्य इति । युग रथाङ्ग वहतीत्यर्थ । प्रासङ्ग इति । प्रासज्यते असाविति कर्मणि घञ् । धुरो । 'धुरो ढक् च' इत्येव सुवचम् । नभ । उपधाया इति । 'उपधाया च' इति पूर्वसूत्रादेवाल्लभ्यत इति भाव । उपधाया किम्, प्रतिदीव्न । इह नान्तस्य भत्वेऽप्योकारस्यानुपधात्वान्निषेधो न प्रवर्तते । ख सर्वधुरात् । सर्वधुराया इति वक्तव्ये नपुसकनिर्देश शब्दस्वरूपापेक्षया 'वधूनि बहुव्रीहौ' इतिवत् । सर्व-धुरामिति । 'पूर्वकालैक—' इति समास 'ऋक्पूरब्धू—' इति समासान्ते अप्रत्यये टाप् । एकधुराल्लुक् च । चात्ख । एव च प्राकरणिकस्य यतो लुक्, खस्य तु

(४—४—८१) हलं वहति हालिकः। सैरिकः। १६३४ संज्ञायां जन्याः[1]। (४—४—८२) जनी वधूः। तां वहन्ति प्रापयन्ति जन्याः। १६३५ विध्यत्यधनुषा। (४—४—८३) द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यात्, न चेत्तत्र धनुः करणम्। पादौ विध्यन्ति पद्याः शर्कराः। १६३६ धनगणं लब्धा।

---

एकधुरीणः, एकधुर इति। एकधुरां वहतीत्यर्थः। शकटादण्। द्वितीयान्ताच्छकटशब्दाद् वहतीत्यर्थे अण् स्यादित्यर्थः। यतोऽपवादः। हलसीराट्ठक्। आभ्यां द्वितीयान्ताभ्यां वहतीत्यर्थे ठगित्यर्थः। संज्ञायां जन्याः। जनीशब्दाद् द्वितीयान्ताद् वहतीत्यर्थे यत्स्यात्संज्ञायामित्यर्थः। जनी वधूरिति। जायतेऽस्यां गर्भ इत्यर्थं जनिघसिभ्यामिति जनधातोः इणि 'जनिवध्योश्च' इति वृद्धिप्रतिषेधे 'कृदिकारात्—' इति ङीषि जनीशब्दस्य निष्पत्तेरिति भावः। 'समा स्नुषाजनीवध्वः' इत्यमरः। वहन्तीत्यस्य विवरणं प्रापयन्तीति। वरगृहमिति शेषः। जन्या इति। जामातुर्वयस्या[2] इति शेषः। 'जन्याः स्निग्धा वरस्य ये' इत्यमरः। विध्यत्यधनुषा। 'तद् इति' द्वितीयान्तमनुवर्तते। 'अधनुषा' इति सप्तम्यर्थे तृतीया। धनुषः अभावः अधनुः, तस्मिन्सतीत्यर्थः। अर्थाभावे नञ्तत्पुरुषः। अर्थाभावे अव्ययीभावेन अयं विकल्प्यत इत्युक्तत्वात्। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्याद्धनुषः करणस्याभावे सतीत्यर्थः। न चेत्तत्रेति। तत्र वेधने धनुः करणं न चेदित्यर्थः। पद्या इति। पादशब्दाद्यति 'पद्यत्यतदर्थे' इति पद्भावः। 'अधनुषा' इति किम्? धनुषा चोरं विध्यति देवदत्तः। अत्र चोराद्यन्न भवति। न चासामर्थ्यादेवात्र यन्नेति वाच्यम्, विध्यतीत्यस्य प्रत्ययार्थत्वेन प्रधानतया तस्य सापेक्षत्वेऽपि सामर्थ्याविघातात्। अन्यथा औपगवो देवदत्त उपगुन॰प्तृत्वाद् इत्यादौ अणादिकं न स्यात्। प्रत्ययार्थैकदेशस्य व्यधनस्य करणविशेषनित्यसापेक्षत्वाच्च इति शब्देन्दुशेखरे विस्तरः। धनगणं लब्धा। धनशब्दाद् गणशब्दाच्च द्वितीया-

---

विधानसामर्थ्याच्छ्रवणमिति फलितम्, तदाह—एकधुरीण इत्यादि। शाकटो गौरिति। ननु 'तस्येदम्' इत्यणा सिद्धम्। यो हि शकटं वहति शकटस्यासौ भवति। अत्राहुः—आरम्भसामर्थ्यादत्र तदन्तविधिः। तेन द्वे शकटे वहति द्वैशकट इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुङ् न भवति, 'तस्येदम्' इत्यणि तु स्यादेव लुगिति। हलसीरात्। ननु 'तस्येदम्' इत्युपक्रमे 'हलसीराट्ठक्' इति पठितम्। तथा च तेनैव शैषिकेण हालिकः सैरिक इति सिद्धौ किमनेनेति चेत्। सत्यम्, आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात्। संज्ञायां जन्या। जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह—जनी वधूरिति। 'जनिघसिभ्यामिण्' 'जनिवध्योश्च' इति न वृद्धिः। 'कृदिकारात्—' इति ङीष्। ततोऽनेन सूत्रेण यति जन्या जामातुर्वयस्याः। ता हि विवाहादिषु वधू जामातृसमीपं प्रापयति। कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त-

---

१ 'जन्या' इति निर्विसर्गः पाठः क्वचिदुपलभ्यते।
२ 'मातुर्वयस्या' इति क्वचित्।

(४-४-८४) तृन्नन्तमेतत्। धनं लब्धा धन्यः। गणं लब्धा गण्यः। १६३७ अन्नाण्णः। (४-४-८५) अन्नं लब्धा आन्नः। १६३८ वशं गतः (४-४-८६) वश्यः परेच्छानुसारी। १६३९ पदमस्मिन्दृश्यम् (४-४-८७) पद्यः कर्दमः। नातिशुष्क इत्यर्थः। १६४० मूलमस्याबर्हि। (४-४-८८) आबर्हणमाबर्हः उत्पाटनम्, तदस्यास्तीत्याबर्हि, मूलमाबर्हि येषां ते मूल्या मुद्गाः। १६४१ संज्ञायां धेनुष्या (४-४-८९) धेनुशब्दस्य षुगागमो यप्रत्ययश्च स्वार्थे निपात्यते, संज्ञायाम्। 'धेनुष्या बन्धके स्थिता'। १६४२ गृहपतिना संयुक्ते ञ्यः। (४—४—९०) गृहपतिर्यजमानः, तेन संयुक्तो गार्हपत्यो-

---

न्ताल्लब्धेत्यर्थे यत्स्यादित्यर्थः। ननु लब्धृशब्दस्य तृजन्तस्य कृदन्तत्वात्तद्योगे कर्मणि षष्ठी स्यादित्यत आह—तृन्नन्तमेतदिति। तथा च 'न लोक-' इति निषेधान्न षष्ठीति भावः। अन्नाण्णः। लब्धेत्यर्थे द्वितीयान्तादिति शेषः। वशं गतः। वशशब्दाद् द्वितीयान्ताद्गत इत्यर्थे यदित्यर्थः। वश्य इति। वशं गत इति विग्रहः। 'वश कान्तौ'। कान्तिरिच्छा। वशनं वशः। 'वशिरण्योरुपसंख्यानम्' इत्यप्। वशम् इच्छां गतः प्राप्तः, इच्छाधीन इत्यर्थः। वशवान् छान्दस इति लुग्विकरणे वक्ष्यते, तत्प्रायिकमिति भावः। सर्वस्यापि स्वेच्छानुसारित्वादाह—परेच्छानुसारीति। पदमस्मिन्दृश्यम्। प्रथमान्तात्पदशब्दाद् दृश्यत इत्यर्थे यदित्यर्थः। अत्र 'तत्' इति द्वितीयान्तमनुवृत्तं प्रथमया विपरिणम्यते। मूलमस्याबर्हि। आबर्हणमिति। उत्पाटनमित्यर्थः। उपसर्गवशाद् 'बृह उद्यमने' इति धातोरुत्पाटने वृत्तिः। मूल्या मुद्गा इति। मूलत उत्पाटनीया इत्यर्थः। संज्ञायां धेनुष्या। यप्रत्ययश्चेति यति तु नित्स्वरः स्यादिति भावः। धेनुष्येति। या धेनुर्दोहनार्थमुत्तमर्णाय अधमर्णेन दीयते तस्या इयं संज्ञा, तदाह—बन्धके स्थितेति। अमरवाक्यमिदम्। संज्ञायामित्यापादपरिसमाप्तेरधिकारः। संज्ञा हि रूढिर्विवक्षिता। गृहपतिना। अस्मिन्नर्थे गृहपतिशब्दात् ञ्यः स्यादित्यर्थः। गार्हपत्योऽग्निरिति। अग्निविशेष इत्यर्थः। तत्र पत्नी

---

'पत्नीनि जयानवदत्कुमारी' इति। जनी वह्नीति जन्यास्तानित्यर्थः। पद्या इति। 'पद्यत्यतदर्थे' इति पद्भावः। अघनुषा किम्, चौरं विध्यति। सम्भाव्यते। यदाहि चौरव्यधने धनुषः करणता। तदा तु धनुषेति प्रयुज्यते तदा सापेक्षत्वादेव न भवति। एवं च 'न चतत्र धनुः करणम्' इत्यत्र 'सम्भाव्यते' इति शेषो बोध्यः। तृन्नन्तमिति। एवं च 'न लोका-' इत्यादिना कृद्योगषष्ठ्या निषेधाद् 'धनगणम्-' इति प्रयोगो निर्बाध इति भावः। वशं गतः। वशनं वश इच्छा। 'वशिरण्योरुपसंख्यानम्' इत्यप्। मूलमस्याबर्हि। प्रथमान्तादाबर्हि इत्युपाधिकान्मूलशब्दादस्येति षष्ठ्यर्थे यत्स्यात्। आबर्ह इति। 'बृह उद्यमने' दन्त्योष्ठ्यादिरयम्, न तु पवर्गादि। 'उद्वृह रक्षः सहमूलमिन्द्र' इत्यादिप्रयोगदर्शनात्। मूल्या मुद्गा इति। मूलोत्पाटनं विना संग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशास्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः। सुष्ठु शुष्का इति यावत्। यप्रत्यय इति। तेन धेनुष्या-

ग्निः । १६४३ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्याना-म्यसमसमितसंमितेषु । (४—४—९१) नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेनानाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया संमितं सीत्यं क्षेत्रम् । तुलया सम्मितं तुल्यम् ।

---

संयाजेषु अग्निहोत्रे च गृहपतिदेवताकहोमस्य क्रियमाणत्वाद् गृहपतियोगः । यद्यपि देव-सूहविःषु 'अग्नये गृहपतयेपुरोडाशमष्टाकपालं निर्वपति' इति हविर्होम आहवनीये क्रियते, तथापि संज्ञाविकारादाहवनीये नास्य प्रयोगः । **नौवयोधर्म** । नौ, वयस्, धर्म, विष, मूल, मूल, सीता, तुला एभ्योऽष्टभ्यः क्रमात् तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, संमिते चार्थे यत्स्यादित्यर्थः । तृतीयान्तेभ्य इत्यर्थाद् गम्यते । तार्यादियोगे करणे कर्तरि हेतौ तुल्या-दियोगे च तस्या एव संभवात् । अत्र मूलशब्दयोर्यथासंख्यप्रवृत्तये नैकशेषः । अन्यथा सप्तानां प्रकृतीनाम् एकैकस्या अष्टस्वप्यर्थेषु प्रत्यय इति भ्रमः स्यात् । **तार्यमिति** । तरीतुं शक्यमित्यर्थः । 'ऋहलोर्ण्यत्' । **वयसा तुल्य इति** । मित्रे एवायं प्रत्ययो नतु शत्रौ, संज्ञाधिकारात् । **मूलेनानाम्यमिति** । पटादेरुत्पत्त्यर्थं वणि-ग्भिर्विनियुक्तं द्रव्यं मूलम् । तेन सह यदधिकं द्रव्यम् आनम्यते विक्रेतुः संमती-करणेन लभ्यते तन्मूल्यमित्यर्थः । लोकास्तु विक्रेतुर्लब्धं सर्वं द्रव्यं मूल्यमिति व्यवहरन्ति । तत्र लक्षणा बोध्या । सा च सांप्रतिकी निरूढा वा । **सीतयेति** । सीता लाङ्गलपद्धतिः । तया समितं संगतमित्यर्थः । कृष्टमिति यावत् । **तुलयेति** ।

---

शब्दोऽन्त उदात्तः । यति तु तिस्वरः स्यादिति भावः । **संज्ञायामिति** । ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम् । **गार्हपत्य इति** । 'गृहपतिना—' इति निर्देशादेव तृतीयान्तात्प्रत्ययः । 'संज्ञायाम्' इत्यनुवृत्तेराहवनीयादौ नातिप्रसङ्गः । **नौव-योधर्म** । नावादिभ्योऽष्टभ्यो यथासंख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्यात् । इह तार्यादियोगे यथासम्भवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्था-ल्लभ्यते । अत्र प्रथमं मूलान्तानां पञ्चानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह समाहारद्वन्द्वः । मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः । तेन सारूप्याभावादे-कशेषो न भवति । नावा **तार्यमिति** शक्यार्थे 'ऋहलोर्ण्यत्' करणे तृतीया । **वयस्य इति** । 'स्निग्धो वयस्यः सवयाः' इत्यमरः । 'वयसा तुल्यः शत्रुः' इत्यत्र तु न भवति, संज्ञाधिका-रात् । **विषेण वध्य इति** । विषेण वधमर्हतीत्यर्थः । 'दण्डादिभ्यः—' इति सूत्रेण वधशब्दा-दर्हार्थे यद्विधानात् । **मूलेनानाम्यमिति** । मूलं नाम पटादीनामुत्पत्त्यर्थं वणि-ग्भिर्विनियुक्तं द्रव्यम् । तेन स्वस्मादतिरिक्तं लाभाख्यं यद् द्रव्यमात्मानं प्रति शेषी-क्रियते आत्मन उपकारकं क्रियते तद् आनाम्यम् । आङ्पूर्वको नमिरभिभवे वर्तते, तस्मात् 'पोरदुपधात्' इति यति प्राप्ते अतएव निपातनाण्ण्यत्, तथा चानाम्यमभि-भवनीयम् आत्मानं प्रति शेषीकर्तव्यम् । स च लाभाख्यो भाग एव । लोके तु यावता द्रव्येण पटादिकं विक्रीयते तत्रैव समुदाये मूल्यशब्दः प्रसिद्धः, न तु मूलाति-

१६४४ धर्मपथ्यर्थन्यायादनपेते । (४-४-९२) धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । १६४५ छन्दसो निर्मिते । (४-४-९३) छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः । १६४६ उरसोऽण् च । (४-४-९४) चाद्यत् । उरसा निर्मितः पुत्रः औरसः, उरस्यः । १६४७ हृदयस्य प्रियः । (४-४-९५) हृद्यो देशः । 'हृदयस्य हृल्लेख-' (सू ६८८) इति हृदादेशः । १६४८ बन्धने चर्षौ । (४-४-९६) हृदयशब्दात्षष्ठ्यन्ताद्बन्धनं यत्स्याद्वेदेऽभिधेये । हृदयस्य बन्धनं हृद्यो वशीकरणमन्त्रः । १६४९ मतजनहलात्करणजल्पकर्षेषु । (४-४-९७) मतं ज्ञानम्, तस्य करणं भाव

---

तुला घटा, तया उन्मितमित्यर्थः । धर्मपथ्यर्थ । धर्म, पथिन्, अर्थ, न्याय एभ्यः अनपेतमित्यर्थे यदित्यर्थः । औचित्यात्पञ्चम्यन्तेभ्य इति लभ्यते । धर्मादनपेतमिति । अप्रच्युतमित्यर्थः । पथ्यमिति । पथः अनपेतमित्यर्थः । न्याय्यमिति । न्यायादनपेतमित्यर्थः । छन्दसो निर्मिते । छन्दस्शब्दात्तृतीयान्ताद् निर्मितेऽर्थे यदित्यर्थः । इच्छयेति । छन्दःशब्द इच्छावाचीति भावः । 'छन्दः पद्येऽभिलाषे च' इत्यमरः । उरसोऽण् च । तृतीयान्तान्निर्मित इत्यर्थं इति शेषः । उरस्य इति । 'अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे' इति श्रुतेरिति भावः । पुत्र इति सनाधिकाराल्लभ्यम् । हृदयस्य प्रियः । षष्ठ्यन्ताद् हृदयशब्दात् प्रिय इत्यर्थे यत्स्यादित्यर्थः । बन्धने चर्षौ । मतजनहलात् । यथासङ्ख्यम् एभ्यः

---

रित्तभागमात्रे व्युत्पादित । एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्घटिते सङ्घाते निरूढलक्षणा बोध्या । सीतेति । सीता हलाग्रम् । सम्पूर्वादिणः क्तः, समितं सगतं निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत् । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः । परमसीत्यम् । द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासस्ततो यत् । द्विसीत्यम् । तुल्या संमितमिति । सम्मितं परिच्छिन्नम् । रूढिशब्दोऽयम्, 'संज्ञायाम्' इत्यधिकारात् । अतएव 'तुल्यम्' इति सदृशमात्रे प्रयुज्यते, न तु तुलयामाग्रह क्रियते । पथ्यमिति । सञ्ज्ञाधिकारादभिधेयनियमः, तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यम् । न तु मार्गादनपेतश्चोरोऽपि । छन्दसो । 'छदि संवरणे' इति चुरादिरिच्छायामपि वर्तते, धातूनामनेकार्थत्वात् । ततो घञि इच्छापर्यायश्छन्दशब्दः प्रसिद्ध एव 'स्वच्छन्दोच्छलदच्छकच्छ-' इत्यादौ । असुनि तु यः सान्तः सोऽत्र प्रकृतिस्तस्य निर्माणे इच्छाया करणत्वात्सामर्थ्यात्तृतीयान्तात्प्रत्ययः । इच्छया कृतमिति । यद्यपि वेदे त्रिष्टुबादिषु च सान्तश्छन्दःशब्दोऽस्ति, तथापीह न गृह्यते संज्ञाधिकारात्, किं त्विच्छापर्याय एव स गृह्यत इति भावः । पुत्र इति । सनाधिकारादेवेह । उरसा निर्मितः सुतः । हृदयस्य । प्रीणातीति प्रियः, 'इगुपध-' इति कः । कृद्योगात्कर्मणि षष्ठी, अलौकिके तद्धितप्रकृतिभागे तु वचनासामर्थ्यादत्र । एवमन्यत्रापि बोध्यम् । बन्धने । बध्यतेऽनेनेति बन्धनं । करणे ल्युट् । वशीकरणमन्त्र इति । तेन हि परहृदयं वशीक्रियते । सनाधिकाराद्भिष्टादावृषौ नायं यत् । मत । तस्य करणमिति । कर्मणि षष्ठी । क्रियतेऽनेनेति करणम्,

साधनं वा मत्यम्। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः। १६५० तत्र साधुः। (४-४-९८) अग्रे साधुः अग्र्यः। सामसु साधुः सामन्यः। 'ये चाभावकर्मणोः' (सू११५४) इति प्रकृतिभावः। कर्मण्यः। शरण्यः। १६५१ प्रतिजनादिभ्यः खञ्। (४-४-९९) प्रतिजनं साधुः प्रातिजनीनः। सांयुगीनः। सार्वजनीनः। वैश्वजनीनः। १६५२ भक्ताण्णः। (४—४—१००) भक्ते साधवो भाक्ताः शालयः। १६५३ परिषदो ण्यः। (४—४—१०१) पारिषद्यः। परिषद् इति योगविभागाण्णोऽपि। [1]पारिषदः। १६५४ कथादिभ्यष्ठक्। (४—४—१०२) कथायां साधुः काथिकः। १६५५ गुडादिभ्यष्ठञ्। (४—४—१०३) गुडे साधुर्गौडिक इक्षुः। साक्तुको यवः। १६५६ पथ्यतिथिवसतिस्वपतेर्ढञ्। (४—४—१०४) पथि साधु पाथेयम्। आतिथेयम्। वसनं वसतिः, तत्र साधुर्वासतेयी रात्रिः।

एष्वर्थेषु यदिति शेषः। मतं ज्ञानमिति। मनधातोः भावे क्त इति भावः। करणं भावः साधनं वेति। कृञधातोर्भावे करणे वा ल्युटि करणशब्दः। तेन जननक्रिया वा जनन-साधनं वा विवक्षितमित्यर्थः। मत्यमिति। ज्ञानस्य जननक्रिया जननसाधनं वेत्यर्थः। तत्र साधुः। सप्तम्यन्तात्साधुरित्यर्थे यत्स्यादित्यर्थः। अग्र्य इति। अग्रे साधुरित्यर्थः। साधुरत्र प्रवीणो गृह्यते, नतु हितः, तत्र 'तस्मै हितम्' इति वक्ष्यमाणत्वात्। प्रतिजना-दिभ्यः खञ्। 'तत्र साधुः' इत्येव। सप्तम्यन्तेभ्य एभ्यः साधुरित्यर्थे खञ् स्यादित्यर्थः। प्रातिजनीन इति। प्रतिजनमिति वीप्सायामव्ययीभावः। तत्र साधुरित्यर्थः। एवं वैश्वजनीनः। भक्ताण्णः। सप्तम्यन्तादस्मात् साधुरित्यर्थं इति शेषः। परिषदो ण्यः। सप्तम्यन्तात्साधुरित्यर्थे इति शेषः। योगेति। 'परिषदः' इति प्रथमो योगः। परिषदो णः स्यादित्यर्थः। ततः 'ण्यः' इति द्वितीयो योगः। परिषदो ण्यः स्यादित्यर्थः। कथादिभ्यष्ठक्। इत्यादि स्पष्टम्। गुडादिभ्यष्ठञ्। साक्तुको यव इति। सक्तुषु साधुः इत्यर्थः। गुडादित्वाट्ठञ्, उगन्तत्वाट्ठस्य कः। पथ्यतिथि। इत्यादि

वा करणमित्याशयेनाह—भावः साधनं इति। जल्पशब्दो भावसाधनः। कर्तरि षष्ठी। हलस्येति। कर्षणं कर्षस्तद्योगात्कर्मणि षष्ठी। करणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी वा। 'रथसीता—' इति तदन्तविधिः। द्विहल्यः। त्रिहल्यः। तत्र साधुः। साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकर्ता। तत्र हि परत्वात् 'तस्मै हितम्' इत्यनेन भाव्यम्। संज्ञाविकारादुपकर्ता न गृह्यत इत्यन्ये। प्रातिजनमिति। जनो जन इति प्रतिजनम्। वीप्सायामव्ययीभावः। प्रतिजन, इदंयुग, संयुग, पापकुल, परस्यकुल, अमुष्यकुल, सर्वजन, विश्वजन, पञ्चजन। 'परस्यामुष्य—' इति षष्ठ्योर्निपातनादलुक्। भक्त इति। 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः। गुडादिभ्यष्ठञ्। गुड, कुल्माष, सक्तु, अपूप, माष, ओदन, इक्षु, वेणु, संग्राम, सङ्घात, प्रवास, निवास, वृत। वसतिरिति। 'वसेश्च' इत्यतिप्रत्ययः। स्वस्य पतिः

[1] 'स पार्षदैरम्बरमापुपूरे' इति जाम्बवतीजये पाणिनिस्तु पृषोदरादित्वात्समाधेयः।

स्वापतेयं धनम्। १६५७ **सभाया यः।** ( ४—४—१०५ ) सभ्यः। १६५८ **समानतीर्थे वासी।** ( ४—४—१०६ ) 'साधु' इति निवृत्तम्। वसतीति वासी। समाने तीर्थे गुरौ वसतीति सतीर्थ्यः। १६५९ **समानोदरे शयित ओ चोदात्तः।** ( ४—४—१०८ ) समाने उदरे शयितः स्थितः समानोदर्यो भ्राता। १६६० **सोदराद्यः।** ( ४—४—१०९ ) सोदर्यः। अर्थः प्राग्वत्।

इति तद्धितेषु चतुर्थस्य चतुर्थपादे प्राग्घितीयप्रकरणम्।

---

स्पष्टम्। **समानतीर्थे वासी।** समानतीर्थशब्दात्सप्तम्यन्ताद् वसतीत्यर्थे यः स्यादित्यर्थः। **वसतीति।** वासीति। ग्राह्यादेराकृतिगणत्वाण्णिनिः। तीर्थशब्दस्य विवरणं 'गुरौ' इति। **सतीर्थ्य इति।** समानतीर्थशब्दाद्यति 'तीर्थे ये' इति समानस्य सभावः। **समानोदरे शयितः।** समानोदरशब्दात् सप्तम्यन्तात् शयित इत्यर्थे यत्स्याद् ओकारश्च उदात्त इत्यर्थः। शयित इत्यस्य विवरणं 'स्थितः' इति। कुशेशयं जलेशयम् इत्यादौ तथा दर्शनादिति भावः। **समानोदर्य इति।** समानमुदरमिति विग्रहः 'पूर्वापरप्रथम—' इत्यादिना समासाद्यति कृते तित्स्वरापवाद आकारस्योदात्तः 'विभाषोदरे—'इति सभावे असति रूपम्। **सोदराद्यः।** सप्तम्यन्तात् शयित इत्यर्थ' इति शेषः। तित्त्वाभावात् प्रत्ययस्वरेणान्तोदात्तोऽयम्। 'विभाषोदरे—' इति सभावः 'अपयानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इत्यत्र तु समानपर्यायसहशब्दस्य बहुव्रीहौ 'वोपसर्जनस्य' इति सभावो बोध्यः। एवं 'यत्र भ्राता सहोदरः' इत्याद्यपि सिद्धम्। इति तद्धितेषु चतुर्थे पा०।

---

स्वपतिरात्मस्तस्मिन्साधु स्वापतेयम्। **सभाया यः।** यति तु तित्स्वरः स्यात् 'ऋतुभ्यः सभ्येभ्यश्च' इतिवत्। न च 'यतो नावः' इत्याद्युदात्तता शङ्क्या। 'यदुगस्ति द्वेऽलायामृधःस्य यदन्तस्यादिरुदात्तः' इति वदभाष्ये स्थापितत्वात्। पक्षान्तरे तु 'नमः शप्याय च फेन्याय च' इत्यादिवाद्युदात्तः स्यात्। एवं च भाष्यवार्तिकयोर्व्यवस्थाने लक्ष्यानुरोधेन क्वचित्किंचिद्व्यवस्थेयमिति तत्त्वम्। **समानतीर्थे वासी।** निपातनाण्णिनिः, ग्रहादेराकृतिगणत्वान्नन्दिग्रहीत्यनेन वा। **सतीर्थ्य इति।** 'तीर्थे ये' इति समानस्य सभावः। तरन्त्यनेनेति तीर्थम्। 'तरतेस्थक्'। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे च' इति विश्वः। इह गुरूपाध्यायवाचिन एव ग्रहणं नान्यस्य, सनाधिकारात्। **शयितः स्थित इति।** शीङ्धातुः स्थित्यर्थे वर्तते। 'जलाशयः' 'कुशेशयम्' इति प्रयोगादिति भावः। समानमुदरमिति 'पूर्वापरप्रथम—' इत्यादिना तत्पुरुषः, ततो यत्, तित्स्वरापवाद आकारस्योदात्तः। **सोदराद्यः।** 'आ चोदात्तः' इति नानुवर्तते। 'विभाषोदरे' इति समानस्य सभावः। तत्र तीर्थे ये' इत्यतोऽनुवृत्ते ये इत्येतद्विषयसप्तमी। तेन सादर इत्यस्माद् प्रत्ययः प्राग्यदिति। समानोदरे शयित इत्येवार्थ इत्यर्थः। कथं तर्हि 'अपयानं तु गच्छन्तं सोदरोऽपि विमुञ्चति' इति मुरारिरिति चेत्। अत्राहुः—सह समानमुदरं यस्य सोदरः 'वोपसर्जनस्य' इति सहस्य सभावः। तस्य च वैकल्पिकत्वाद् 'यत्र भ्राता सहोदरः' इत्याद्यपि सिद्धमिति। इति तत्त्वबोधिन्यां प्राग्घितीयप्रकरणम्।

## अथ तद्धितेषु छयद्विधिप्रकरणम् ॥३२॥

१६६१ प्राक् क्रीताच्छः । (५—१—१) 'तेन क्रीतम्' (सू १७०२) इत्यतः प्राक्छोऽधिक्रियते । १६६२ उगवादिभ्यो यत् । (५—१—२) 'प्राक् क्रीतात्' इत्येव । उवर्णान्तादगवादिभ्यश्च यत्स्याच्छस्यापवादः । 'नाभि नभं च' (ग सू ९५) । नभ्योऽक्षः । नभ्यमञ्जनम् । रथनाभावेवेदम् । 'शुनः

---

अथ पञ्चमाध्यायः । **प्राक्क्रीताच्छः** । क्रीतशब्दस्तद्घटितसूत्रपरः । तदाह—**तेन क्रीतमिति** । 'तेन क्रीतम्' इत्यतः प्राग् येषु सूत्रेषु अर्था एव निर्देक्ष्यन्ते नतु प्रत्ययाः, तेषु छः इत्युपस्थितं भवतीति यावत् । **उगवादिभ्यो यत्** । उश्च गवादयश्च इति द्वन्द्वात् पञ्चमी । **उवर्णान्तादिति** । प्रातिपदिकविशेषणत्वात् तदन्तविधिः । 'उगिद्वर्णग्रहवर्जम्' इत्युक्तेः । प्रत्ययविधावपि तदन्तविधिरिति भावः । इदमपि सूत्रं प्राक्क्रीताद्वक्ष्यमाणसूत्रेषु प्रत्ययविशेषानुपादान उपतिष्ठते । **नाभि नभं चेति** । गवादिगणसूत्रम् । नाभिशब्दो नभादेशं यत्प्रत्ययं च प्राप्नोतीत्यर्थः । **नभ्योऽक्ष इति** । यत्र अक्षदण्डः प्रवेश्यते तच्चक्रमध्यगतच्छिद्रं नाभिरित्युच्यते । तस्मै हितः अक्षदण्डः, स हि अनुगुणत्वाद् नाभये हितः । **नभ्यमञ्जनमिति** । अञ्जनं तैलसेकः । नाभेरञ्जने कृते तत्र प्रोतं चक्रं सुपरिवर्तनं भवतीति नाभेः परिवर्तनात्मककार्यक्षमताधायकत्वादञ्जनं नाभये हितम् । अत्र शरीरावयवविशेषवाचिनाभिशब्दो न गृह्यते, भाष्ये रथनाभेरेव ग्रहणादित्यभिप्रेत्य आह—**रथनाभावेवेदमिति** । शरीरावयवविशेषवाचिनाभिशब्दात्तु

---

प्राक् क्रीताच्छः । इत्यतः **प्रागिति** । इहार्थोऽवधित्वेन गृह्यते, न तु प्रत्ययः प्रकृतिर्वा । तेनार्था एवावधिमन्त इति प्राक्क्रीताद्येऽर्था हितादयस्तेष्वस्योपस्थानम् । अवधिसजातीयो ह्यवधिमान् भवति । यथा 'मासात्परः' इति कालः प्रतीयते, 'ग्रामात्पूर्वाः' इति देशः, 'अलोऽन्त्यात्पूर्व—' इत्यलेव । एवं च समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं तक्रकौण्डिन्यन्यायेन बाधते । अन्यथा छस्य यदादेश्च संनिधाना-विशेषात्तव्यत्तव्यानीयरामिव पर्यायः स्यात् । अतोऽत्रार्थोवधित्वेन गृह्यते । ननु यदादिविषये छो न भविष्यति 'विभाषा हविरपूपादिभ्यः' इति विभाषाग्रहणाल्लिङ्गात् । तथा च प्रत्ययस्य प्रकृतेर्वा अवधित्वस्वीकारेऽपि न क्षतिः । उक्तज्ञापकेनोगवादिप्रभृतिभ्यश्छस्याति-प्रसङ्गनिरासादिति चेत् । अत्राहुः—एवं सति 'छः' इत्येवाधिकारोऽस्तु नार्थोऽवधिनिर्देशेन । 'प्राग्वतेष्ठञ्' इत्यादिके तु प्रकरणे नास्याधिकारः, अधिकारान्तरेणोपष्टब्धत्वात् स्पष्टप्रति-पत्त्यर्थमवधिनिर्देशः । अन्यथा प्रतिपत्तिगौरवं स्यादिति चेत् । तर्हि 'विभाषा हवि—' इत्यादिज्ञापकाश्रयणे प्रतिपत्तिगौरवादर्थ एवावधित्वेन निर्देष्टुमुचित इति । **उगवा-दिभ्यो** । उवर्णादिर्गवशब्दादेश्च यत्स्यादित्यर्थो न भवति, गवादिगणपाठात् । गवाद्यन्त-र्गणसूत्राण्याह— **नाभि नभं चेति** । नाभिशब्दो यतं लभते नभादेशं चेत्यर्थः । **नभ्योऽक्ष इति** । रथाङ्गं सच्छिद्रं नाभिः । तदनुप्रविष्टः काष्ठविशेषोऽक्षः । स च

सम्प्रसारणं वा च दीर्घत्वम्' ( ग सू ९६ ) शून्यम्, शुन्यम्। 'ऊधसोऽनङ् च' ( ग सू ९७ )। ऊधन्य । १६६३ कम्बलाच्च संज्ञायाम्। (५—१—३) यत्स्यात् । कम्बल्यमूर्णापलशतम् । 'संज्ञायाम्' किम्—कम्बलीया ऊर्णा। १६६४ विभाषा हविरपूपादिभ्यः । (५-१-४) आमिक्ष्यं दधि, आमिक्षीयम् । पुरोडाश्यास्तण्डुला, पुरोडाशीया अपूप्यम्, अपूपीयम् । १६६५ तस्मै हितम् । (५—१—५) वत्सेभ्यो हितो वत्सीयो गोधुक् । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । हविष्यम् । १६६६ शरीरावयवाद्यत्।

'शरीरावयवाद्यत्' इति वक्ष्यमाण. केवलो यत्, न तु नकारादेशो इति भाव. । शुन. सप्रसारणमिति । गवादिगणसूत्रम । श्वन्शब्दाद्यत्स्यात् प्रकृते. संप्रसारणम्, तस्य संप्रसारणस्य पाक्षिक दीर्घत्वमित्यर्थ । शून्यम्,शुन्यमिति । शुने हितमित्यर्थ । ऊधसोऽनङ् चेति । इदमपि गणसूत्रम् । ऊधस्शब्दाद् यत्स्यात् प्रकृतेरनडादेशश्चेत्यर्थ । आदेशे ङकार इत् नकारादकार उच्चारणार्थ , ङित्त्वादन्तादेश । कम्बलाच्च । कम्बलशब्दाद् यत्स्यात् प्राक्क्रीतीयेष्वर्थेषु सज्ञायामित्यर्थ. । कम्बल्यम् ऊर्णापलशतमिति । कम्बलाय हितमित्यर्थ । विभाषा हवि. । हविर्विशेषवाचिभ्य. अपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यद्वा स्यादित्यर्थ । पक्षे छ । आमिक्ष्य दधीति । आमिक्षायै हितमित्यर्थ. । तप्ते पयसि दध्नि निक्षिप्ते सति यद् घनीभूत निष्पद्यते स आमिक्षेत्यच्युते । तस्मै हितम् । अस्मिन्नर्थे चतुर्थ्यं

तदनुगुणत्वात्तस्मै हित । अञ्जन तैलाभ्यङ्ग , तदपि स्नेहनत्वान्नामये हितम् । रथनाभावेवेति । शरीरावयवे तु नाभ्यमित्येव, परेण 'शरीरावयवाद्यत्' इत्यनेनास्य बाधादिति भाव । शून्यमिति । नकारस्यानुनासिकमुच्चारणार्थत्वाद् 'नस्तद्धिते' इति टिलोपो न भवति । 'ये चाभावकर्मणो ' इति प्रकृतिभावस्तु दुर्लभ, संप्रसारणे पूर्वरूपे च कृते अनुरूपाभावात् । दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपाभाव सुपरिहरः । नङ् चेति । चाद्यत् । 'नव' इति सुवचमिति मनोरमा । अन्ये त्वाहु —ऊधन्यशब्दात् 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठवत्' इति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयो कृतयो 'अनुनासिकस्य क्वि–' इति दीर्घे तत क्विबन्तादाचारक्विपि ऊधानते इत्यादावात्मनेपदार्थ नडो ङित्करणमावश्यकमिति । ऊधन्यमिति । 'ये चा–' इति प्रकृतिभाव । कम्बलाच्च सज्ञायाम् । प्राक्क्रीतीयेष्वर्थेषु यत्स्यात् । छस्यापवाद । विभाषा हविरपूपादिभ्यः । गवादिषु हविश्शब्दस्य पाठादिह हविर्विशेषाणा ग्रहणं हि न स्यादिति वाच्यम्, असंजातविरोधित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात् । आपूप्यमिति । अपूपेभ्यो हितं चूर्णमित्यर्थ । अपूप, तण्डुल, पृथुक, मुसल कर्णवेष्टकेत्याद्यपूपादिगणे 'अन्नविकारेभ्यश्च' इति पठ्यते । अन्नविकारा धान्यप्रकारा अदनीयविशेषास्तेभ्यो यद्वा स्यादिति तदर्थ । ओदन्या ओदनीयास्तण्डुला । एवं चानेनैव गणसूत्रेण सिद्धे अपूपादीना केषाचिद्गणे पाठ प्रपञ्चार्थ । हविरपूपादिभ्यो विभाषया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन' सक्तव्या धानाः । चरव्यास्तण्डुला चरर्नाम हविरिति काशिका ।

(५—१—६) दन्त्यम् । कण्ठ्यम् । 'नस्नासिकायाः' (वा ३४९७) । नस्यम् । नाभ्यम् । १६६७ ये च तद्धिते । ( ६—१—६१ ) यादौ तद्धिते परे शिरःशब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । 'तद्धिते' किम्—शिर इच्छति शिरस्यति । 'वा केशेषु' (वा ३४९३) । शीर्षण्याः शिरस्या वा केशाः । 'अचि शीर्ष इति वाच्यम्' ( वा ३४९४ ) अजादौ तद्धिते शिरसः शीर्षादेशः । स्थूलशिरस इदं स्थौलशीर्षम् । १६६८ खलयवमाषतिलवृषब्रह्मणश्च । ( ५—१—७ ) खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चाद्रथ्या । १६६९ अजाविभ्यां थ्यन् । ( ५—१—८ ) अजथ्या

---

न्ताद्यथाविहितं प्रत्ययाः स्युः । वत्सीय इति । छे रूपम् । यो गोधुग् वत्सेभ्यः पयः शिष्ट्वा दोग्धि स एवमुच्यते । शङ्कव्यमिति । शङ्कवे हितमित्यर्थः । उवर्णान्तत्वात् । गव्यमिति । गोभ्यो हितं तृणादिकमित्यर्थः । गवादिलक्षणो यत् । हविष्यमिति । हविषे हितमित्यर्थः । हविःशब्दो गवादिः । 'विभाषा हविः—' इत्यत्र तु हविर्विशेषवाचिनामेव ग्रहणम्, व्याख्यानात् । शरीरावयवाद्यत् । शरीरावयवविशेषवाचकात् चतुर्थ्यन्ताद् हितमित्यर्थे यत्स्यादित्यर्थः । छस्यापवादः । नस्यमिति । नासिकायै हितमित्यर्थः । 'पद्दन्—' इति नस्, प्रभृतिग्रहणस्य प्रकारार्थत्वात् । भाष्ये तु 'नासिकाया यत्तस्क्षुद्रेषु नस्' इति पठितम् । नाभ्यमिति । नाभये हितमित्यर्थः । नाभिरत्र शरीरावयवः । रथावयवत्वे तु नभादेश उक्तः । ये च तद्धिते । शीर्षन्नादेश इति । 'शीर्षन् छन्दसि' इत्यतः तदनुवृत्तेरिति भावः । शीर्षण्य इति । शिरसे हित इत्यर्थः । शरीरावयवत्वाद्यति शीर्षन्नादेशे 'ये चाभावकर्मणोः' इति प्रकृतिभावान्न टिलोपः । शिरस्यतीति । शिर आत्मन इच्छतीत्यर्थे 'सुप आत्मनः—' इति क्यचि, 'नः क्ये' इति नियमात् पदत्वाभावान्न रुत्वम् । वा केशेषु । केशेषु वाच्येषु यो यकारादिस्तद्धितः तस्मिन्परे शिरसः शीर्षन्नादेशो वा स्यादित्यर्थः । प्रसङ्गादाह—अचीति । खलयव । खलादिभ्यश्चतुर्थ्यन्तेभ्यो हितमित्यर्थे यत्स्यादित्यर्थः । वृषशब्दोऽत्र अकारान्त एव गृह्यते, नतु नकारान्तः । तेन वृष्णे हितमिति वाक्यमेव । ब्रह्मन्शब्दो ब्राह्मणवाच्येव गृह्यते, नतु वेदादिवाची । ते ब्रह्मणे वेदाय हितमिति वाक्यमेवेति भाष्ये स्पष्टम् । ब्रह्मण्यमित्यत्र 'ये

---

स्थालीवचनस्य चरुशब्दस्य तत्रत्ये हविषि उपचाराद् वृत्तिरिति कैयटादयः । नस्यमिति । नासिकायै हितम् । 'नासिकायां भवम्' इति विग्रहे तु 'शरीरावयवाच्च' इति यत् । नस्यम् । तस्युदाहरणं नस्तः । 'अपादाने चाहीयरुहोः' इति तसिः । क्षुद्रे तु नासिकायाः क्षुद्रो नःक्षुद्रः । 'सुप्सुपा' इति समासः । नाभ्यमिति । 'नाभि नभं च' इति नभादेशो रथनाभावेव प्रवर्तते । तस्य गवादियता संनियोगशिष्टत्वादिति भावः । 'शीर्षश्छन्दसि' इत्यतोऽनुवर्तनादाह—शीर्षन्नादेश इति । शीर्षण्य इति । 'ये चाभाव—' इति प्रकृतिभावः । शिरस्यतीति । 'नः क्ये' इति नियमेन पदत्वाभावाद्रुत्वाभावः । खलयव । अत्र वृषशब्दोऽकारान्तो गृह्यते न तु नकारान्तः । अन्यथा ह्यसन्देहार्थं नलोपमकृत्वैव निर्दिशेत् । 'आत्मन्विश्वजन—' इति यत् । वृषाय

यूथि । अविभ्या । १६७० आत्मन्विश्वजनभोगोत्तरपदात्खः । (५-१-९) १६७
आत्माध्वानौ खे ( ६-४-१६९ ) एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम्
विश्वजनीनम् । कर्मधारयादेवेष्यते । षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । विश्वजनीयम् । 'पञ्चज
नादुपसङ्ख्यानम्', (वा २९९६) पञ्चजनीनम् । 'सर्वजनाट्ठञ् खश्च' ।(वा २९९७) । सार्व
जनिकः । सर्वजनीनः । 'महाजनाट्ठञ्' (वा २९९८) । माहाजनिकः । मातृभोगीण

चाभावकर्मणा' इति प्रकृतिभावात् टिलोपः । चाद्ग्य्येति । चकारस्यानुक्तसमुच्चयार्थत्वा
दिति भावः । अजाविभ्यां थ्यन् । अजश्च अविश्चेति द्वन्द्वः । अविशब्दस्य घिसंज्ञ
'अजाद्यदन्तम्' इत्यजशब्दस्य पूर्वनिपातः । अजथ्या यूथिरिति । अजेभ्यः अजाभ्य
वा हितेत्यर्थः । लिङ्गविशिष्टपरिभाषया अजाशब्दादपि थ्यन् । 'तसिलादिषु-' इ
पुंवत्वम् । अविथ्येति । अविभ्यो हितेत्यर्थः । स्त्रीत्वं लोकात् । आत्मन्विश्वजन
आत्मन् । विश्वजन, भोगोत्तरपद एभ्यो हितमित्यर्थे खः स्यादित्यर्थः । आत्मनीनमित्युदाहर
वक्ष्यति । तत्र टिलोपे प्राप्ते—आत्माध्वानौ खे प्रकृत्या स्त इति । 'प्रकृत्यैकाच्
इत्यतस्तदनुवृत्तेरिति भावः । कर्मधारयादेवेति । विश्वजनशब्दादिति शेषः । अ
व्याख्यानमेव शरणम् । विश्वजनीयमिति । विश्वस्य जना विश्वजनः साधारणा वैश्यादि
विश्वो जना यस्येति बहुव्रीहिर्वा, तस्मै हितमिति विग्रहः । पञ्चजनीनमिति ।
ब्राह्मणक्षत्रिय वैश्यशूद्राश्चत्वारो वर्णाः रथकारजातिश्चेत्येते पञ्च जनाः । तेभ्यो
हितमिति विग्रहः । सर्वजनाट्ठञ् खश्चेति । वक्तव्य इति शेषः । 'सनामा
निकरणादिति वक्तव्यम्' इति वार्तिकं भाष्ये स्थितम् । महाजनाट्ठञिति । वक्तव्य
इति शेषः । विश्वजनप्रसङ्गादिदं वार्तिकद्वयमुपन्यस्तम् । अथ भोगोत्तरपद-

हितम् वृष्यम् । नान्तत्वात्ति तु वृषण्यमिति स्यात् । ब्रह्मण्यमिति । ब्रह्मन्शब्दो ब्राह्मण
पर्यायः । प्रकृतिभावस्तु 'ये चा—' इत्यनेन पूर्ववत् । इह वृषन्शब्दाद्ब्राह्मणशब्दाच्च यत्
प्राप्तिरेव नास्ति । छोऽप्यनभिधानान्नेत्याकरः । तेन वृष्णे हितं ब्राह्मणेभ्यो हितमिति वाक्यमेव ।
चाद्रथ्येति । गवादिषु रथशब्दो न पठितः । हितार्थ एव रथ्येति यथा स्यात्, अर्थान्तरे
मा भूदिति । अजाविभ्याम् । अजशब्द इह पुंलिङ्ग उपात्तः, अतएव द्वन्द्वे घि' इत्य
विशब्दस्य पूर्वनिपातं बाधित्वा 'अजाद्यदन्तम्' इति अजशब्दस्य पूर्वनिपातः कृतः । 'प्रातिपदि-
कग्रहणे लिङ्गविशिष्टस्यापि—' इति स्त्रीलिङ्गादपि थ्यन् । तसिलादिषु थ्यनः परिगणना-
त्पुंवद्भावः स्त्रप तुल्यम् । अजथ्येति । अजेभ्यो अजाभ्यो वा हितेति विग्रहः । कर्मधार-
यादेवेति । व्याख्यानादिति भावः । विश्वजनीयमिति । विश्वस्य जनः सर्वसाधारणो
वैश्यादि, विश्वो जनोऽस्येति बहुव्रीहावपि स एवान्यपदार्थस्तस्मै हितमिति विग्रहः । पञ्चजनी-
नमिति । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेभ्यो हितम् । 'दिवसस्य सनामान्'

१ तत्र 'सर्वेषां जनाय ( सर्वसाधारणाय वैश्यादिजनाय ) हितः सर्वजनीयः' इत्यादौ
न । इति मा० ।

पितृभोगीणः। राजभोगीनः। 'आचार्यादणत्वं च' (ग सू १८४) आचार्यभोगीनः। १६७२ सर्वपुरुषाभ्यां णढञौ। (५—१—१०) 'सर्वाण्णो वेति वक्तव्यम्' (वा २९९९) सर्वस्मै हितं सार्वम्, सर्वीयम्। 'पुरुषाद्वधविकारसमूहतेनकृतेषु' (वा ३०००) भाष्यकारप्रयोगात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः। पुरुषस्य वधः पौरुषेयः। 'तस्येदम्' (सू १५००) इत्यणि प्राप्ते। पुरुषस्य विकारः पौरुषेयः 'प्राणिरजतादिभ्योऽञ्' (सू १५३२) इत्यञि प्राप्ते। समूहेऽप्यणि प्राप्ते। 'एकाकिनोऽपि परितः पौरुषेयवृता इव' इति माघः। तेन कृते ग्रन्थेऽणि प्राप्ते, अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः। १६७३ माणवचरकाभ्यां खञ्।

---

स्योदाहरति—मातृभोगीण इति। मातृभोगाय हित इत्यर्थः। आचार्यादिति। आचार्यशब्दात्परस्य भोगीनशब्दस्य नस्य णत्वाभावो वाच्य इत्यर्थः। नच असमानपदस्थत्वादेवात्र णत्वस्याप्रसक्तेस्तन्निषेधो व्यर्थ इति वाच्यम्, मातृभोगीणादौ णत्वज्ञापनार्थत्वात्। सर्वपुरुषाभ्यां णढञौ। सर्व, पुरुष आभ्यां चतुर्थ्यन्ताभ्यां क्रमाद् णढञौ स्तो हितमित्यर्थे इत्यर्थः। सर्वाण्ण इति। अत्र सर्वशब्दस्य स्वरूपपरत्वान्न सर्वनामकार्यम्। पुरुषाद्वधेति। वार्तिकमिदम्। पुरुषशब्दाद्वधादिष्वेवार्थेषु ढञ् स्यात् न हितार्थे इत्यर्थः। ननु तेन कृतमिति समुदायस्य असुबन्तत्वात् कथं समासे निवेश इत्यत आह—भाष्येति। अणि प्राप्त इति। अनेन ढञिति शेषः। प्राणीति। रजतादित्वादञि प्राप्ते अनेन ढञित्यर्थः। समूहेऽप्यणि प्राप्त इति। पुरुषाणां समूह इत्यर्थे 'तस्य समूहः' इत्यणि प्राप्ते अनेन ढञित्यर्थः। पौरुषेयवृता इवेति। पुरुषसमूहवृता इवेत्यर्थः। परित आदर्शप्रतिफलनादिति भावः। तेन कृत इति। पुरुषेण कृतो ग्रन्थ इत्यर्थे 'कृते ग्रन्थे' इत्यणि प्राप्ते, पुरुषेण कृतः प्रासाद इत्यर्थे तु कस्मिन्नपि प्रत्यये अप्राप्ते

---

इति समासः 'पञ्चजनात्' इत्येतत्प्रभृति वार्तिकत्रयमपि कर्मधारयविषयमेव, तेन षष्ठीसमासाद्बहुव्रीहेश्छ एव, पञ्चजनीयः। सर्वजनीन इति। सर्वो जनः सर्वजनः। 'पूर्वकालैक—' इति तत्पुरुषः, तस्मै हितमिति विग्रहः। साध्वर्थे तु 'प्रतिजनादिभ्यः खञ्' इति खञि सार्वजनीनवैश्वजनीनशब्दौ व्युत्पादितौ। मातृभोगीण इति। इहाखण्डपदत्वाभावेऽपि 'अट्कुप्वाङ्—' इत्यनेन यथा णत्वं भवति तथा प्रागेवोपपादितम्। मातुर्भोगः शरीरं तस्मै हित इति विग्रहः। यद्यपि 'भोग सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरेण अहेरित्युक्तम्, तथापि प्रयोगबाहुल्याभिप्रायं तत्, शक्तिस्तु शरीरमात्र इत्याकरः। मातृपितृशब्दाभ्यामौत्सर्गिकश्छ एव। मात्रीयः। पित्रीयः। राजाचार्याभ्यां त्वौत्सर्गिकः छोऽपि न भवत्यनभिधानात्। किं तु राज्ञे हितम्, आचार्याय हितमिति वाक्यमेवेत्याकरः। सर्वपुरुषाभ्याम्। आभ्यां शब्दाभ्यां यथासंख्यं णढञौ स्तस्तस्मै हितमित्यर्थे 'प्राक्क्रीतात्—' इति छस्यापवादादिति सूत्रार्थः। सर्वादिति। अनुकरणत्वात्सर्वनामकार्याभावः। पुरुषाद्वधविकारेति। योग्यताबलादिह षष्ठी समर्थविभक्तिर्लभ्यते, 'तेन कृते' इत्यत्र तु उपात्तैव तृतीया, तदाह—पुरुषस्य वध इति। समूहेऽप्यणीति। 'तस्य समूहः'

( ५—१—११ ) माणवाय हितं माणवीनम् । चारकीणम् । १६७४ तदर्थं विकृतेः प्रकृतौ । ( ५—१—१२ ) विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां प्रत्ययः स्यात् । अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु । १६७५ छदिरुपधिबलेर्ढञ् । ( ५—१—१३ )

---

अनेन छन्त्रियय । माणव । आभ्यां चतुर्थ्यन्ताभ्यां हितमित्यर्थे खञ् स्यादित्यर्थः । माणवीनमिति । मनोः कुत्सितमपत्यं माणवः, 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' । इत्यपत्याधिकारवार्तिकात् । माणवाय हितमिति विग्रहः । चारकीणमिति । चरतीति चरः पचाद्यच् । ततः स्वार्थिकः कः, चरकाय हितमिति विग्रहः । तदर्थं विकृतेः प्रकृतौ । तदर्थमिति सामान्ये नपुंसकम् । तस्मै इदं तदर्थम् । तच्छब्देन विकृतिः परामृश्यते । सप्तम्यर्थे प्रथमा । विकृत्यर्थायां प्रकृताविति लभ्यते । एवं च तच्छब्देन चतुर्थ्यन्तेन विकृतिरेव प्रथमं निर्दिश्यते । तथा च चतुर्थ्यन्ताद् विकृतिवाचकादिति लभ्यते । तदाह—विकृतिवाचकादित्यादिना । प्रत्ययः स्यादिति । यथाविहितमिति शेषः । अङ्गारेभ्य एतानीति । अङ्गारार्थानीत्यर्थः । अर्थेन नित्यसमासविधानादस्वपदविग्रहः । अत्र काष्ठानि प्रकृतिद्रव्याणि, अङ्गाराः विकृतयः । तद्वाचकादङ्गारशब्दाच्छप्रत्यये अङ्गारीयाणीति रूपम् । प्राकारीया इष्टका इति । प्राकारेभ्य इमा इति विग्रहः । प्राकारार्था इत्यर्थः । शङ्कव्यमिति । शङ्कव इदमिति विग्रहः । शङ्क्वर्थमित्यर्थः । 'उगवादिभ्यः—' इति यत् । छदिरुपधिबलेर्ढञ् । छदिस्, उपधि, बलि एषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । एभ्य

---

इत्यनेन । ग्रन्थेऽणीति । 'कृते ग्रन्थे' इत्यनेन । अप्राप्त इति । पौरुषेयः प्रासाद इत्यादौ न तस्याप्यपवादाश्च छञिति भावः । माणवः । खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च । यद्यपि माणवे वृद्धिः स्वतः सिद्धैव, तथापि माणवीनाभार्य इत्यत्र 'वृद्धिनिमित्तस्य च—' इति पुंवद्भावप्रतिषेधार्थमिति ज्ञेयम् । माणवायेति । मनोः कुत्सितमपत्यं माणवः । 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिद्धयति माणवः' ॥' इत्यपत्याधिकारस्यवार्तिकाण्णत्वम्, तच्च वार्तिकमनःसूत्रस्थनिर्देशसिद्धार्थकथनपरमित्याहुः । चारकीणमिति । चरतीति चरः पचाद्यच् । 'चरिचलिपतिवदीनाम्—' इति द्वित्वं विकल्पितत्वादिह न भवति । ततः संज्ञायां कनि चरकः । तदर्थं विकृतेः । 'तस्मै हितम्' इत्यतस्तस्मा इत्यनुवर्तते तदाह—चतुर्थ्यन्तादिति । 'तदर्थम्' इति 'सामान्ये नपुंसकम्' व्यत्ययेन सप्तमीस्थाने प्रथमेत्याशयेनाह—तदर्थायामिति । विकृत्यर्थायामित्यर्थः । तदिति सर्वनाम्ना हि विकृतिः परामृश्यते । एवं च विकृतिरेव प्रथमानिर्दिष्टेति 'समर्थानां प्रथमाद्—' इत्यधिकारोऽप्यत्र निर्बाध एव । शङ्कव्यमिति । 'उगवादिभ्यः—' इति यत् । छदिरुपधि । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । छस्यापवादोऽयम् । छादिषेयाणीति । छादयन्त्यनेनेति छदिः । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' । 'इस्मन्त्रन्क्विषु च' इति ह्रस्वत्वम् । यदा तु चर्मविकारः छदिस्तदा परत्वात् 'चर्मणोऽञ्' इत्यञ् प्राप्नोति ।

छादिषेयाणि तृणानि। बालेयास्तण्डुलाः। 'उपधिशब्दात्स्वार्थे इष्यते' (वा ३००३)। उपधीयते इत्युपधिः रथाङ्गम्, तदेव औपधेयम्। १६७६ ऋषभोपानहो ञ्यः (५—१—१४) छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्मण्यप्ययमेव पूर्वविप्रतिषेधेन। औपानह्यं चर्म। १६७७ चर्मणोऽञ् (५—१—१५) चर्मणो या विकृतिस्तद्वाचकादञ्स्यात्। वध्र्यै इदं

---

तादर्थ्यचतुर्थ्यन्तेभ्यः प्रकृतौ वाच्यायां ढञित्यर्थः। छादिषेयाणीति। छदिः तृणपटलः। तस्मै इमानीति विग्रहः। छदिरर्थानीत्यर्थः। ढञि एयादेशे षात्परत्वाण्णत्वम्। बालेयास्तण्डुला इति। बलये इमे इति विग्रहः! बल्यर्था इत्यर्थः। 'करोपहारयोः पुंसि बलिः' इत्यमरः। 'भागधेयः करो बलिः' इति च। उपधिशब्दादिति। वार्तिकमिदम्। उपधीयत इति। अक्षदण्डाग्रे उपधीयते प्रोतं क्रियते इत्युपधिः। 'उपसर्गे घोः किः' इति धाञः किप्रत्ययः। 'आतो लोप इटि च' इत्याल्लोपः। उपधिः रथाङ्गमिति। तथा भाष्यादिति भावः। ऋषभोपानहो ञ्यः। ऋषभ उपानह् अनयोः समाहारद्वन्द्वात्पञ्चमी। ऋषभशब्दादुपानह् शब्दाच्च तादर्थ्यचतुर्थ्यन्तात् प्रकृतौ वाच्यायां ञ्यप्रत्ययः स्यादित्यर्थः। आर्षभ्य इति। ऋषभाय अयमिति विग्रहः। ऋषभार्थ इत्यर्थः। यो वत्स ऋषभावस्थाप्राप्त्यर्थं पोष्यते स एवमुच्यते। औपानह्योमुञ्ज इति। उपानहे अयमिति विग्रहः। उपानदर्थो मुञ्ज इत्यर्थः। क्वचिद्देशे मुञ्जतृणैरुपानत् क्रियते। चर्मण्यपीति। चर्मणि प्रकृतित्वेन वाच्येपि अयं ञ्य एव 'चर्मणोऽञ्' इत्यनं परमपि पूर्वविप्रतिषेधेन बाधित्वा भवतीत्यर्थः। एतच्च 'उगवादिभ्यः—' इति सूत्रभाष्ये स्थितम्। औपानह्यमिति। उपानदर्थं चर्मेत्यर्थः। चर्मणोऽञ्। चर्मण इति षष्ठ्यन्तं विकृतावन्वेति। तदाह—चर्मणो या विकृतिः

---

पूर्वप्रतिषेधेन तु ढञेवेष्यते। छादिषेयं चर्म। आह च 'यञ्जयावञः पूर्वविप्रतिषिद्धम्' 'ढञ् च' इति। यत उदाहरणं सनङ्गव्यम्' सनङ्गुश्चर्मविकारस्तदर्थं चर्म, 'उगवादिभ्यः—' इति यत्। ञ्यस्योदाहरणमौपानह्यमिति अनुपदं वक्ष्यति। बालेया इति। 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्' इत्यमरः। उपधिरिति। 'उपसर्गे घोः किः' इति धाञः किः। 'आतो लोप इटि च' इत्यालोपः। विप्रतिषेधेनेति। 'यञ्जयावञ—' इत्यादिवार्तिकेनेत्यर्थः। ननु ढञ्विधौ छदिरित्यस्य, ञ्यविधौ उपानहश्च विशिष्य ग्रहणेन 'प्रतिपदोक्तं बलीयः' इति सिद्धे किमनेन पूर्वविप्रतिषेधेन। अत्राहुः— 'निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकम्, न तु सावकाशत्वे' इत्यनेन मुनिवचनेनानुमीयते। तेन 'स्वम्पि तटाकानि' इत्येव युक्तम्, परत्वान्नुमप्रवृत्तेः। प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य स्वाम्पि तटाकानीति मतं दुर्बलम्। 'अप्तृन्—' इति दीर्घस्य आपस्तिष्ठन्तीत्युदाहरणे सावकाशतया प्रतिपदोक्तत्वस्याबलीस्त्वादिति। चर्मणोऽञ्। 'तदर्थम्' इत्यादिपूर्वोक्ते अञ् स्यात् छस्यापवादः। 'चर्मणः' इति षष्ठी न तु पञ्चमी। पञ्चम्यां तु चर्मशब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात् 'चर्मणो द्वीपी—' इत्यादौ।

वार्घ्रं चर्म। वारत्रं चर्म। १६७८ तदस्य तदस्मिन्स्यादिति (५-१-१६) प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः। प्रासादीयं दारु। प्राकारोऽस्मिन्स्यात्प्राकारीयो देशः। इतिशब्दो लौकिकीं विवक्षामनुसारयति। तेनेह न—प्रासादो देवदत्तस्य स्यादिति। १६७९ परिखाया ढञ्। (५-१-१७) पारिखेयी भूमिः।

इति तद्धितेषु छयतो: पूर्णोऽवधिः।

—:०:—

---

तद्वाचकादिति। तादर्थ्यचतुर्थ्यन्तादिति शेषः। अन् स्यादिति। प्रकृतौ वाच्यायामिति शेषः। वध्र्यै इदमिति। वृधेरौणादिके ष्ट्रनि वध्रशब्दः। टित्वाद् ङीप्, वर्ध्री चर्मरज्जुः। 'नध्री वर्ध्री वरत्रा स्यात्' इत्यमरः, वाध्र्यै इदमिति पाठान्तरम्। 'वृधिवपिभ्यां रन्' इति वृधेः रनि लघूपधगुणे रपरत्वे वर्ध्रशब्दश्चर्मवाचकः, तस्माद्विकारे अणि ङीपि वार्ध्री रज्जुः। तदस्य तदस्मिन् स्यादिति। 'तदर्थं विकृतेः प्रकृतौ' इति निवृत्तम् इति कैयटः। तदस्य स्यादिति, तदस्मिन् स्यादिति चार्थे प्रथमान्ताद्यथाविहितं प्रत्ययः स्यादित्यर्थः। स्यादित्यत्र 'संभावनेऽलमिति' इति संभावने लिङ्। प्राकार आसामिति। करणत्वस्य सम्बन्धसामान्यविवक्षायां षष्ठी। आभिरिष्टकाभिः प्राकारः कर्तुं शक्यत इति विग्रहवाक्यस्य फलितोऽर्थः। प्राकारीया इति। प्राकारशब्दात्प्रथमान्तात् छः। इष्टकाः प्रत्ययार्थः। प्राकारपर्याप्ता इष्टका इति यावत्। प्रासादीयं दार्विति। प्रासादोऽस्य स्यादिति विग्रहः। प्रासादपर्याप्तमिति यावत्। प्राकारीयो देश इति। प्रदेशे प्राकारोऽस्मिन्देशे संभाव्यत इत्यर्थः। देशस्य तद्योग्यपाषाणेष्टकादिमत्त्वादिति भावः। अनेन 'तदर्थं विकृतेः' इत्यनुवृत्ताविह न स्यादिति सूचितम्। ननु प्रासादो देवदत्तस्य स्यादित्यत्रातिप्रसङ्गः स्यादित्यत आह—इतिशब्दो लौकिकीं विवक्षामिति। शिष्टव्यवहारमित्यर्थः। परिखाया ढञ्। पूर्वसूत्रविषये इति शेषः। पारिखेयी भूमिरिति। परिखा

---

न चेष्यते चार्मणो ङीपोति तदाह—चर्मणो या विकृतिरिति। वध्र्यै इति। 'वृधिवपिभ्याम्' इति रन्प्रत्यये वर्ध्रशब्द आधुदात्तश्चर्मवाची, 'तस्य विकारः' इत्यण्। 'टिड्ढा—' इति ङीप्। वार्ध्री रज्जुः, तस्यै। वधेरौणादिके ष्ट्रनि तु वर्ध्रीति भवति तत्राञि तु वार्ध्रम। 'नध्री वर्ध्री वरत्रा स्यात्' इत्यमरः। 'वध्रा पश्य, वध्रिका पश्य' इति भाष्यम्। तदस्य। प्रथमासमर्थात्प्रातिपदिकात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययः स्याद् इति, 'सम्भावनेऽलमिति च' इत्यादिना सम्भावने लिङ्। इष्टकानां पटुत्वेन प्राकार आसां स्यादिति तत्सम्भाव्यते। देशस्य हि गुणेन प्राकारोऽस्मिन्स्यादिति सम्भाव्यते। इह प्रकृतिविकारभावस्तादर्थ्यं च न विवक्षितम्, किं त

## अथ तद्धितेष्वार्हीयप्रकरणम् । ३३ ।

१६८० प्रागवतेष्ठञ् । ( ५-१-१८ ) 'तेन तुल्यम्-' ( सू १७७८ ) इति वतिं वक्ष्यति । ततः प्राक्ठञधिक्रियते । १६८१ आर्हादगोपुच्छसङ्ख्या-परिमाणाट्ठक् । ( ५-१-१९ ) 'तदर्हति' ( सू १७२८ ) इत्येतदभिव्याप्य ठगधि-

अस्या अस्ति, अस्यामस्तीति वा विग्रहः । परिखायोग्येत्यर्थः । छयतोःपूर्णोऽवधिरिति । 'प्राग्वतेष्ठञ्' इत्यारभ्य 'द्वित्रिपूर्वादण् च' इत्यन्तैः सूत्रैः प्रत्ययविशेषेष्वनुक्रान्तेषु 'तेन क्रीतम्' इति पठितम् । ततश्च 'प्राक्क्रीतात्-' इत्युक्तेस्तेष्वपि सूत्रेषु छयतोरनुवृत्तिः कुतो नेति न शङ्क्यम्, प्रत्ययविशेषाणां श्रवणे तयोरनुवृत्त्यसंभवादिति भावः ।

इति तद्धितेषु छयतोरवधिः ।

———:०:———

अथ आर्हीयाः । प्राग्वतेः । वतिशब्दस्तद्घटितसूत्रपरः । तदाह—तेन तुल्यमिति । 'तेन तुल्यम्—' इत्यतः प्राग् येषु सूत्रेषु अर्था एव निर्दिश्यन्ते नतु प्रत्ययाः, तत्र ठञित्युपतिष्ठत इति यावत् । आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक् । तदर्हतीति सूत्रगते अर्हतिशब्दे एकदेशानुकरणमर्हति, तच्च तद्घटितसूत्रपरम्, आङभिव्याप्तौ, व्याख्यानात् । तदाह—तदर्हतीति । इत्येतदभि-

योग्यतामात्रम्, तेन पूर्वस्यायमविषयः । द्विस्तच्छब्दस्य ग्रहणं स्पष्टप्रतिपत्त्यर्थम् । 'तदस्यास्त्यस्मिन्-' इतिवत्सकृत्तच्छब्दग्रहणेनैवेष्टसिद्धेः ।

इति तत्त्वबोधिन्यां छयद्विधिप्रकरणम् ।

———:०:———

प्राग्वतेष्ठञ् । 'ठञ्' इत्येव वक्तव्ये 'प्राग्वतेः' इति वचनं मध्ये गोऽविकारवानपवादः, 'सर्वभूमिपृथिवीभ्यामणञौ' 'शीर्षच्छेदाद्यच्च' इत्येवमादि, तेन विच्छेदेऽपि 'पारायण-' इत्यादौ ठञेव यथा स्यादित्येवमर्थम् । न चैवं 'पारायण-' आदिसूत्र एव ठञ् निर्दिश्यतामिति वाच्यम् । उत्तरसूत्रे येषां पर्युदासः क्रियते गोपुच्छादीनां तेभ्यष्ठञः प्रकृतसूत्रं विनालाभात् । तथा च गौपुच्छिकः सांख्यातिक इत्यादौ ठञर्थमिदं सूत्रमत्र प्रदेशे आरब्धमिति बोध्यम् । आर्हादगोपुच्छ । तदर्हतीति । इह 'तदर्हम्' इति सूत्रान्तर्गतमच्प्रत्ययान्तं नानुक्रियते, किं तु तिङन्तस्यैकदेशः शवन्त एव, व्याख्यानादिति भावः । अभिव्याप्येति । तेन श्वेतच्छत्रिक इत्यत्रा-

कारमध्ये ठञोऽभावाल्लुगपि क्रियते गोपुच्छादीन्वर्जयित्वा । १६८० असमासे निष्कादिभ्य । ( ५-१-२० ) 'आर्हात्' इत्येतत् 'तेन क्रीतम्' ( सू १७०२ ) इति यावत्सप्तदशसूत्र्यामनुवर्तते । निष्कादिभ्योऽसमासे ठक् स्यार्हीयेष्वर्थेषु । नैष्किकम् । समासे तु ठञेव । १६८३ परिमाणान्तस्यासञ्ज्ञाशाणयो । ( ७-३-१७ ) उत्तरपदवृद्धि स्याद् ञिदादौ । परमनैष्किक ।

---

व्याप्येति । इदमपि सूत्र प्रत्ययविशेषाश्रवणे उपतिष्ठते । अत्र सङ्ख्यापरिमाणयो पृथग्ग्रहणात्सङ्ख्या न परिमाणम् । तथा च वार्तिकम्—'ऊर्ध्वमान किलोन्मान परिमाण तु सर्वत । आयामस्तु प्रमाण स्यात् सङ्ख्या बाह्या तु सर्वत ॥' इति । तुलायामारोप्य द्रव्यगुरुत्व येन परिच्छिद्यते तदुन्मान गुञ्जामाषनिष्कसुवर्णपलादि । येन काष्ठादिनिर्मितेन आयतविस्तृताच्छिद्रेन पात्रविशेषेण व्रीह्यादि परिच्छिद्यते पात्रगतायामविस्तारोच्छ्राये, तत्परिमाण प्रस्थादि । आयामो दैर्घ्य येन परिच्छिद्यते तत्प्रमाणम् अरत्निप्रादेशादि । सङ्ख्या तु उक्तत्रितयात्पृथग्बाह्या भिन्ना एकत्वद्वित्वादीत्यर्थ । असमासे । इति यावदिति । 'तेन क्रीतम्' इत्येतत्पर्यन्तमित्यर्थ । ठगिति । पूर्वसूत्रात्तदनुवृत्तेरिति भाव । आर्हीयेष्विति । 'तदर्हति' इत्येतत्पर्यन्तमनुक्रान्तेषु 'तेन क्रीतम्' इत्याद्यर्थेष्वित्यर्थ । नैष्किकमिति । निष्केण क्रीतमित्यर्थ । यथायोग क्रीताद्यर्थान्वय । समासे तु ठञेवेति । परमनिष्कादिशब्दादित्यर्थ । परिमाणान्तस्यासञ्ज्ञाशाणयो ।

---

इत्यर्थे ठग् भवतीति भाव । ननु परिमाणात्पृथक्सङ्ख्याग्रहण व्यर्थम्, परिमीयते परिच्छिद्यते येन तत्परिमाण सङ्ख्ययापि च परिच्छिद्यत इति सापि परिमाणमेवेति चेत् । अत्र श्लोकवार्तिकम्—'ऊर्ध्वमान किलोन्मान परिमाण तु सर्वत । आयामस्तु प्रमाण स्यात्सङ्ख्या बाह्या तु सर्वत' । अस्यार्थ—तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादिगुरुत्वमुन्मीयते तदुन्मानम् । आरोह उच्छ्राय, परिणाहो विस्तार, ताभ्यामारोहपरिणाहाभ्या स्वगताभ्या येन काष्ठादिनिर्मितेन व्रीह्यादि परिमीयते तत्परिमाण प्रस्थादि । परि सर्वतोभावे, आयामो दैर्घ्यम्, स येन मीयते तत्प्रमाणम् । तच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति—यथा वस्त्रादेर्हस्तादि । क्वचिदूर्ध्वाधोभागावस्थितस्य भवति—यथा द्वास्तिनमुदकम् । ऊरुद्वयसमुदकमिति । सङ्ख्या तु उन्मानपरिमाणप्रमाणेभ्य पलादिप्रस्थादिहस्तादिभ्यस्तिभ्यो बहिर्भूता एकत्वद्वित्वादिरिति इह सङ्ख्यापरिमाणयोरेव प्रकृतत्वेऽप्युन्मानप्रमाणयोर्विवचन प्रसङ्गात्कृतमिति बोध्यम् । असमासे निष्कादिभ्य । निष्क, पण, पाद, माष, वाह, द्रोण, षष्टि इति सप्त निष्कादय । तत्र द्रोणशब्द परिमाणवाची षष्टिशब्द सङ्ख्यावाची, ताभ्या ठञि प्राप्ते वचनम् । इतरेषा तु पञ्चानामुन्मानवाचित्वेन पूर्वसूत्रेणैव ठकि सिद्धे समासप्रतिषेधार्थं वचनमित्येके । अन्ये त्वाहु—पूर्वसूत्रे परिच्छेदकमात्र सङ्ख्याभिन्न परिमाणशब्देन गृह्यते । तेन सर्वेभ्यष्ठञि प्राप्ते ठग्विधानाय वचनम् । न चैव 'परिमाण तु सर्वत' इति भेदेन व्युत्पादन व्यर्थमिति वाच्यम् 'प्रमाणपरिमाणाभ्या सङ्ख्यायाश्चापि सशये' इत्यादावस्योपयोगादिति ।

'असंज्ञा' इति किम्—पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम् । 'तदस्य परिमाणम्' ( सू १७२३ ) इति ठञ् । असमासग्रहणं ज्ञापकं भवति 'इतः प्राक्तदन्तविधिः' इति । तेन सुगव्यम्—यवापूप्यमित्यादि । इत ऊर्ध्वं तु 'संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते, तच्चालुकि–' ( वा ३०१८ ) । गारायणिकः । द्वैपारायणिकः । 'अलुकि' इति किम्—द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीते 'शूर्पादञ्–' ( सू १६९१ ) मा भूत्, किं तु ठञ् । द्विशौ-

---

आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकार इदं सूत्रम् । शेषपूरणेन तद्व्याचष्टे—उत्तरपदवृद्धिः स्यादिति । उत्तरपदस्य आदेरचो वृद्धिः स्यादित्यर्थः । ञ्णिदादाविति । ञिति णिति किति चेत्यर्थः । परमनैष्किक इति । परमनिष्केण क्रीत इत्यर्थः । समासत्वाट्ठगभावे औत्सर्गिकष्ठञ् । स्वरे विशेषः । ननु निष्कादिभ्य एव ठको विधानात्तदन्तात् समासाट्ठकोऽप्रसक्तेरसमासग्रहणं व्यर्थम् । न च प्रातिपदिकग्रहणस्यापञ्चमाध्यायसमाप्तेरधिकृतत्वात्प्रातिपदिकविशेषणतया तदन्तविधौ समासादपि ठकः प्रसक्तिरस्तीति वाच्यम्, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति निषेधात् । निष्कादीनां च विशिष्य गृहीतत्वेन ग्रहणवत्त्वादित्यत आह—असमासग्रहणमिति । सुगव्यमिति । सु शोभना गौः सुगौः, 'न पूजनात्' इति निषेधाद् 'गोरतद्धितलुकि' इति न टच् । 'उगवादिभ्यः–' इति गोशब्दान्ताद्यत् । यवापूप्यमिति । 'विभाषा हविरपूपादिभ्यः' इत्यपूपान्तत्वाद्यत् । नन्वसमासग्रहणाज् ज्ञापकाद् इत ऊर्ध्वमपि तदन्तविधिः किं न स्यात् । ततश्च परमपारायणं वर्तयतीत्यत्रापि 'पारायणतुरायणचान्द्रायणं वर्तयति' इति ठञ् स्यादित्यत आह—इत ऊर्ध्वं त्विति । वार्तिकमिदम् । नन्वेवमपि द्विशूर्पेण क्रीतमित्यर्थे शूर्पशब्दान्तादपि 'शूर्पादञन्यतरस्याम्' इति अर्थे स्यादित्यत आह—तच्चालुकीति । इत ऊर्ध्वं संख्यापूर्वपदानां तदन्तग्रहणमिति यदुक्तं तत्तद्धितलुकि सति न भवतीत्यर्थः । इदमपि वार्तिकमेव । द्विशूर्पमिति । 'तद्धितार्थ—' इति द्विगुरयम् । तद्धितप्रकृतिभूतः शब्दो न लुगन्तः । अतः संख्यापूर्वपदात् शूर्पान्तादस्मात् 'शूर्पादञन्यतरस्याम्' इति प्राप्तस्य अञष्ठञो वा 'अध्यर्ध—' इति लुक् । द्विशूर्पशब्दो लुगन्तः । ततश्च तस्मात् क्रीतेऽर्थे 'शूर्पादञ्—' इति न भवति । लुकि सति तदन्तग्रहणाभावादि-

---

पक्षद्वयमप्येतत्पदमञ्जर्यां स्पष्टम् । अथ किमर्थम् 'असमासे' इत्युच्यते, प्रातिपदिकग्रहणे तदन्तग्रहणाभावादेवेष्टसिद्धेरत आह—असमासग्रहणमिति । सुगव्यमिति । 'उगवादिभ्यो यत्' । यवापूप्यमिति । 'विभाषा हविरपूपादिभ्यः' इति यत् । अन्नविकारत्वादेव सिद्धे 'अपूपादीनां प्रतिपदपाठसामर्थ्यात्तदन्तविधिर्नेति' न्यासग्रन्थस्तूपेक्ष्यः, वृत्त्यादिग्रन्थविरोधादिति भावः । अत एव तत्सूत्रे 'अपूपादीनां केषांचित्पाठः प्रपञ्चार्थः' इत्यवोचाम । इत ऊर्ध्वमिति । ज्ञापकेन तदन्तविधौ लब्धेऽपि विशेषव्यवस्थार्थमिदम् । संख्यापूर्वपदानामिति किम्, इह मा भूत्—परमपारायणं वर्तयति ॥ द्विशूर्पमिति । तद्धितार्थेद्विगुरयम् । एषा हि प्रकृतिर्लुगन्ता

ष्किम् । १६८४ अर्धात्परिमाणस्य पूर्वस्य तु वा। ( ७-३-२६ ) अर्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धि, पूर्वपदस्य तु वा ञिति णिति किति च । अर्धद्रोणेन क्रीतम् अर्धद्रौणिकम्, आर्धद्रौणिकम् । १६८५ नात परस्य। ( ७-३-२७ ) अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वपदस्य तु वा ञिदादौ। अर्धप्रस्थिकम्, आर्धप्रस्थिकम् । 'अत' किम्-आर्धकौडविकम् । 'तपर' किम्-अर्धखार्यां भवा अर्धखारी । अर्धखारीभार्य इत्यत्र 'वृद्धिनिमित्तस्य-' ( सू ८४० ) इति पुवद्भावनिषेधो न स्यात्। १६८६ शताच्चठन्यतावशते। ( ५-१-२१ ) शतेन क्रीत शतिकम्, शत्यम् । 'अशते' किम्-शत परिमाणमस्य शतक सङ्घ ।

रर्थः । द्विशौर्पिकमिति । 'तेन क्रीतम्' इति ठञि 'परिमाणान्तस्यासंज्ञाशाणयो' इत्युत्तर पदवृद्धि । अस्य ठञ् लुक् तु न भवति, तस्य द्विगुनिमित्तत्वाभावात् । अर्धात्परिमाणस्य । 'परिमाणान्तस्य-' इत्यस्मादुत्तरमिद सूत्रम् । अर्धद्रौणिकम्, आर्धद्रौणिकमिति । द्रोण-शब्दस्य निष्कादित्वेऽपि असमासग्रहणान्न ठक् । किंतु ठञेव । नात परस्य परिमाणाकार-स्येति । परिमाणवाचकावयवस्य अकारस्येत्यर्थ । पूर्वपदस्य तु वेति । पूर्वपदस्यादेरचस्तु वृद्धिर्वेत्यर्थं । आर्धकौडविकमिति । अर्धकुडवेन क्रीतमित्यर्थ । 'तेन क्रीतम्' इति ठञ्। अत्र कुडवशब्दस्य परिमाणविशेषवाचिन आदेरच अकारत्वाभावान्न वृद्धिनिषेध । किन्तु 'अर्धात्परिमाणस्य-' इत्युत्तरपदवृद्धिरिति भाव । तपर किमिति । दीर्घस्याकारस्य वृद्धिनिषेधफलाभावाद्ध्रस्वस्येति सिद्धमिति प्रश्न । अर्धखार्यां भवा अर्धखारीति। निषेधो न स्यादिति। पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धि प्रति फलोपहितनिमित्तत्वाभावादिति भाव । पूर्वपदस्य वृद्धिपक्षे तु वृद्धि प्रति फलोपहितनिमित्तत्वसत्वात् स्यादेव उत्तरपदाकारस्य वृद्धिनिषेधेऽपि पुवत्त्वनिषेध । परिमाणान्तस्येत्यारभ्य एतदन्त साप्तमिकम् । अथ प्रकृत पाञ्चमिकम् । शताच्च ठन्यतावशते । आर्हीयेष्वर्थेषु शताट्ठन्यतौ स्त, नतु ग्रन्थेऽर्थ इत्यर्थ । उत्तर सूत्रप्राप्तकनोऽपवाद । शतक सघ इति । उत्तरसूत्रेण कन्निति भाव । नन्विह

न भवति इति सख्यापूर्वपदादस्मात् 'शूर्पादञन्यतरस्याम्' इति प्राप्तस्याञष्ठञो वा 'अध्यर्धपूर्व—' इति लुक्। द्विशौर्पिकमिति। 'परिमाणान्तस्य—' इत्युत्तरपदवृद्धि । ठञो द्विगु प्रति निमित्तत्वाभावाल्लुगभाव । यद्यपि 'अध्यर्ध—' इति सूत्रे द्विगो परस्यार्हीयस्य लुगित्येव सूत्रे व्याख्यायते, तथापि द्विगोर्निमित्तस्येति व्याख्येयमेव। तपर किमिति। दीर्घाकारस्य वृद्धौ कृतायामपि रूपे विशेषो नास्तीति प्रश्न । निषेधो न स्यादिति। तथा च वृद्धिनिषेधाभावाय तपरकरणमावश्यकमिति भाव । इदं च पुवद्भावनिषेधाभावाभिधान पूर्वपदस्य वृद्ध्यभावपक्षे क्रियते। यदा तु पूर्वपदस्य पाक्षिकी वृद्धि क्रियते, तदा फलोपधानवृद्धिनिमित्त तद्धित इत्युत्तरपदाकारस्य वृद्धिनिषेधेऽपि स्यादेव पुवद्भावनिषेध इति बोध्यम्। शताच्च । अशतेऽभिधेये आर्हीयेष्वर्थेषु ठन्यतौ स्त । उत्तरसूत्रेण प्राप्तस्य कनोऽपवाद । चकार 'अपमान'

इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थान्न भिद्यते, तेन ठन्यतौ न, किं तु कनेव। 'असमासे' इत्येव, द्विशतेन क्रीतं द्विशतकम्। १६८७ संख्याया अतिशदन्तायाः कन्। ( ५-१-२२ ) संख्यायाः कन्स्यादार्हीयेऽर्थे, न तु त्यन्तशदन्तायाः। पञ्चभिः क्रीतः पञ्चकः। वहुकः। त्यन्तायास्तु साप्ततिकः। शदन्तायाः चात्वारिंशत्कः। १६८८ वतोरिड्वा। (५-१-२३) वत्वन्तात्कन इड् वा स्यात्। तावतिकः, तावत्कः। १६८९ विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्। (५-१-२४) योगविभागः कर्तव्यः। आभ्यां कन्स्यात्। असंज्ञायां ड्वुन् स्यात्।

---

संघस्यैव प्रत्ययार्थत्वात् कथम् 'अशते' इति निषेध इत्यत आह—इहेति। प्रत्ययार्थः संघः प्रकृत्यर्थात् शतात्परिमाणाद् न भिद्यते। गुणगुणिनारभेद एव हि पारमार्थिकः। भेदस्तु काल्पनिक एवेति भावः। यत्र तु शतं प्रत्ययार्थः प्रकृत्यर्थाद्भिद्यते तत्र नायं निषेधः। शतेन क्रीतं शत्यं शाटकशतम्। अत्र हि निष्कशतं प्रकृत्यर्थः। शाटकशतं तु प्रत्ययार्थः। एतत्सर्वं भाष्ये स्पष्टम्। असमास इत्येवेति। चकारस्य तदनुकर्षणार्थत्वादिति भावः। द्विशतेनेति। द्विगुणशतेनेत्यर्थः। द्विगुसमासे तु द्विशतशब्दस्य लुगन्ततया लुकि तदन्तविधिनिषेधात् प्राप्तिरेव नेति वोध्यम्। संख्यायाः। तिश्च शच्च तिशतौ, तौ अन्ते यस्याः सा तिशदन्ता, न तिशदन्ता अतिशदन्ता, द्वन्द्वगर्भवहुव्रीहिगर्भो नञ्तत्पुरुषः। साप्ततिक इति। सप्तत्या क्रीत इत्यर्थः। 'तेन क्रीतम्' इति ठञ्। चात्वारिंशत्क इति। चत्वारिंशता क्रीतमित्यर्थः। तेन क्रीतम् इति ठञ्ठस्य तकारात्परत्वात्कः। वतोरिड् वा। वतोरित्यनेन प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते। किन्निति प्रथमान्तमनुवृत्तम्। 'वतोः' इति पञ्चमी 'तस्मादित्युत्तरस्य' इति परिभाषया षष्ठ्यन्तं प्रकल्पयति। तदाह—वत्वन्तादिति। तावतिक इति। तावता क्रीत इत्यर्थः। 'यत्तदेतेभ्यः-' इति वतुप्। 'वहुगणवतु,' इति संख्यासंज्ञायां 'संख्याया अतिशदन्तायाः-' इति कन्, तस्य इट्, डित्वादाद्यवयवः। विंशतित्रिंशद्भ्याम्। ड्वुन्नसंज्ञायाम्। नन्वेकसूत्रत्वे विंशतित्रिंशद्भ्यां ड्वुनेव स्यात्, कन् तु न स्यात्। अतिशदन्ताया इति निषेधादित्यत आह—योगेति। 'विंशतित्रिंशद्भ्याम्' इत्येकं सूत्रम्, 'ड्वुन्न-

---

इत्यस्यानुकर्षणार्थः। द्विशतकमिति। द्वौ च शतं च तेषां समाहारो द्विशतम्। ततः कन्—प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यनया इष्ट्या समासादपि प्राप्नोतीति 'असमासे' इत्येतस्यानयनमुचितमिति भावः। त्यन्तशदन्ताया इति। त्यन्तसहिता शदन्तेत्युत्तरपदलोपी समासः। पञ्चक इति। लौकिक्याः संख्याया उदाहरणम्। वहुक इति। तु पारिभाषिक्याः। साप्ततिक इति। ठञो ञित्वादादिवृद्धिः। ठस्येकादेशे 'यस्येति च' इतीकारलोपः। अर्थवतस्तिशब्दस्य ग्रहणाद् डत्यवयवस्य तिशब्दस्य पर्युदासो न भवति, कतिकः। चात्वारिंशत्क इति। 'इसुसुक्तान्तात्कः'। वतोरिड्वा। 'वतोः' इति पञ्चमी, सा च 'कन्' इति प्रथमायाः, षष्ठीं कल्पयतीत्याह—वत्वन्तात्कन इति। तावतिक इति। 'यत्तदेतेभ्यः—' इति वतुप्। 'आ सर्वनाम्नः' इत्यात्वम्। कर्तव्य इति। अन्यथा त्यन्तशदन्तयोः

कनोऽपवादः । विंशकः । त्रिंशकः । संज्ञायां तु विंशतिकः । त्रिंशत्कः । १६९० कंसाट्टिठन् (५-१-२५) टो ङीबर्थः, इकार उच्चारणार्थः । कंसिकः, कंसिकी । 'अर्धाच्चेति वक्तव्यम्' (वा ३०१८) । अर्धिकः, अर्धिकी । 'कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा' (वा ३०१९) कार्षापणिकः, कार्षापणिकी । प्रतिकः, प्रतिकी । १६९१ शूर्पादञन्यतरस्याम् । ( ५-१-२६ ) शौर्पम्, शौर्पिकम् । १६९२ शतमानविंशतिकसहस्रवसनादण् । (५-१-२७) एभ्योऽण्स्यात् । ठञ्ठकोरपवादः । शतमानेन क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् । १६९३ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् । ( ५-१-२८ )

---

संज्ञायाम्' इत्यपरमित्यर्थः । आद्यं व्याचष्टे—आभ्यां कन् स्यादिति । 'संख्याया अतिशदन्तायाः' इत्यनेन कन् इत्यनुवदनम् इति भावः । द्वितीयसूत्रे विंशतित्रिंशद्भ्याम् इत्यनुवृत्तिमभिप्रेत्याह—असंज्ञायामिति । आभ्यामिति शेषः । विंशक इति । विंशत्या क्रीत इत्यर्थः । ड्वुन् अकादेशः 'ति विंशतेर्डिति' इति तिशब्दस्य लोपः । त्रिंशक इति । ड्वुन्, अकादेशः 'टेः' इति टिलोपः । आद्यसूत्रं परिशेषात् संज्ञायामित्यभिप्रेत्याह—संज्ञायां त्विति । कंसात् । इत्यादि स्पष्टम् । शूर्पादञ् । आर्हीयेष्वर्थेष्विति शेषः । शूर्पशब्दस्य परिमाणवाचित्वात् ठञि प्राप्ते तदपवादोऽञ् पक्षे विधीयते । पक्षे ठञ् । शातमान । शातमानमिति । अत्र ठञ् प्राप्तः । वैंशतिकमिति । विंशत्या क्रीतं विंशतिकम् । संज्ञाशब्दोऽयम् । 'विंशतित्रिंशद्भ्याम्' इति योगविभागात् कन् । विंशतिकेन क्रीतमिति विग्रहः । तत्र परिमाणविशेषस्य संज्ञा चेट्ठञ् प्राप्तः, अन्यस्य संज्ञा चेट्ठक् प्राप्तः । साहस्रमिति । सहस्रेण क्रीतमिति विग्रहः । 'संख्याया अतिशदन्तायाः—' इति कन् प्राप्तः । वासनमिति । वसनेन क्रीतमिति विग्रहः । अत्र ठन् प्राप्तः । अध्यर्धपूर्व । अध्यर्धशब्दः पूर्वो यस्य स अध्यर्धपूर्वः, सच द्विगुश्चेति

---

पर्युदासाद्विंशतित्रिंशद्भ्यां कन् दुर्लभ इति भावः । त्रिंशक इति । 'ति विंशतेर्डिति' इति तिशब्दस्य लोपः । अर्धिक इति । अर्धशब्दस्य कार्षापणार्धे रूढत्वाद्भागवदन्यत्रासामर्थ्यं नाशङ्क्यम् । प्रकरणादिवशेन भागविशेषे निज्ञाते सति नास्त्यन्यत्रासामर्थ्यमिति बोध्यम् । एतेनार्धशब्दस्य सापेक्षत्वात्तदन्तादेव टिठन्, द्रौणार्धिकः, प्रस्थार्धिक इति कैयटोक्तिः परास्ता । शूर्पादञ् । शूर्पशब्दस्य परिमाणवाचित्वाट्ठञि प्राप्ते तदपवादेनात्र पक्षे विधीयते । ठञ्ठकोरिति । शतमानं परिमाणं ततष्ठञ् प्राप्तः, विंशत्या क्रीतं विंशतिकम् । संज्ञाशब्दोऽयम् । असंज्ञायां हि 'विंशतित्रिंशद्भ्याम्—' इति ड्वुन् स्यात् । संज्ञा च यदि परिमाणस्य तदा ठञ् प्राप्तः, अथान्तरस्य चेत्तर्हि ठक् प्राप्तः । वसनशब्दात्तु ठगेव । सहस्रशब्दस्य संख्यावाचित्वात्तत 'संख्याया अतिशदन्तायाः—' इति कन्प्राप्त इति विवेकः । अध्यर्धपूर्व । अध्यारूढमर्धं यस्मिन् तदध्यर्धम् 'प्रादिभ्यो धातुजस्य—' इत्युत्तरपदलोपः । अध्यर्धशब्दः पूर्वो यस्मिन्निति बहुव्रीहिगर्भबहुव्रीहौ कृते अध्यर्धपूर्वं च द्विगुश्चेति द्वन्द्वः । सौत्रं पुंस्त्वम् ।

अध्यर्धपूर्वाद् द्विगोश्च परस्यार्हीयस्य लुक्स्यात्। अध्यर्धकंसम्। द्विकंसम्। संज्ञायां तु पाञ्चकलापिकम्। १६९४ विभाषा कार्षापणसहस्राभ्याम्। (५—१—२९)

---

समाहारद्वन्द्वात्पञ्चमी। सौत्रं पुंस्त्वम्, तदाह—अध्यर्धपूर्वाद् द्विगोश्चेति। आर्हीयस्येति। प्रत्यासत्तिलभ्यम्। अध्यर्धकंसमिति। अध्यारूढमर्धं यस्मिन् तद् अध्यर्धम्। 'प्रादिभ्यो धातुजस्य–' इति बहुव्रीहौ पूर्वखण्डे उत्तरपदलोपः। सार्धमित्यर्थः। अध्यर्धेन कंसेन क्रीतमिति विग्रहः। तद्धितार्थे द्विगुः। 'संख्याया अतिशदन्तायाः–' इति कन्। तस्यानेन लुगिति भावः। द्विकंसमिति। द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहः। ठको लुक्। नच अध्यर्धकंसमित्यत्रापि द्विगुत्वादेव सिद्धमिति वाच्यम्, किञ्चित्सङ्ख्याकार्यं कृत्वसुजादिकमध्यर्धशब्दस्य नेति ज्ञापनार्थत्वात्। पाञ्चकलापिकमिति। पञ्च कलापाः परिमाणमस्येति विग्रहे 'तद्धितार्थ' इति द्विगुः। 'तदस्य' इति ठञ्। संख्यासंज्ञासूत्रभाष्ये तु 'अध्यर्धपूर्वात्' इति पाठो दृश्यते। नच द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्, तेन क्रीतं द्विशौर्पिकमिति पूर्वोक्तोदाहरणे ठञो लुक् स्यादिति वाच्यम्

---

द्विगोरिति पञ्चमी न तु षष्ठीत्याशयेन व्याचष्टे—अध्यर्धपूर्वादित्यादि। एतच्च वृत्तिकाररीत्या व्याख्यातम्। अत्र वार्तिकं 'द्विगोर्लुकि तन्निमित्तग्रहणम्'। द्विगोर्निमित्तं यस्तद्धितस्तस्य लुगिति वक्तव्यम्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीतं द्विशौर्पिकमिति। पूर्वोक्तोदाहरणे तु ठञो लुङ् माभूदिति। ननु द्वयोः शूर्पयोः समाहारो द्विशूर्पी तया क्रीतमिति विग्रहे द्विशूर्पमिति रूपं न स्यात्। तद्धितस्यात्र द्विगोरनिमित्ततया 'अध्यर्ध' इति लुकोऽप्रवृत्तेः। द्विगोः परस्येति व्याख्यायां तु नः सिद्धमिष्टमिति चेत्। मैवम्, 'अर्थविशेषासम्प्रत्यये अतन्निमित्तादपि' इति वचनान्तरस्य वार्तिककृतैवोक्तत्वात्। यत्र तद्धितार्थे द्विगुना सहार्थो न भिद्यते तत्र स तद्धितो यस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यमिति तस्यार्थः। एवं च द्विशूर्पमिति तद्धितार्थद्विगुना सह द्विशूर्प्या क्रीतमित्यस्यार्थो न भिद्यत इति समाहाराद् द्विगोः परस्य तद्धितस्य लुग् भवत्येवेति न काप्यनुपपत्तिः। वस्तुतस्तु सूत्रे द्विगोरिति षष्ठीमाश्रित्य 'द्विगोर्निमित्तं यस्तद्धितः' इति व्याख्याय प्रथमं वार्तिकं प्रत्याख्यातुं शक्यम्। 'द्विशूर्प्या क्रीतम्' इति विग्रहे तु द्विशूर्पादेव प्रत्ययो भवति अजाविकन्यायात, न तु द्विशूर्पीशब्दाद् इत्याश्रित्य द्वितीयमपि प्रत्याख्यातुं शक्यम्। नन्वध्यर्धशब्दः संख्यावाच्येव। तथा च लोके गण्यते 'एकोऽध्यर्धो द्वौ' इति। अत एव अध्यर्धकमिति कन्, अध्यर्धकंसमिति तद्धितार्थे द्विगुः, अध्यर्धसांवत्सरिकमित्यादौ 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिश्च भवति तत्किमध्यर्धपूर्वग्रहणेनेति चेत्। अत्राहुः—'संख्याकार्यमेतस्य किंचिन्न' इति ज्ञापनार्थमिदम्। तेन कन् द्विगुसमासवृद्धिभ्योऽन्यत्र भवति। तद्यथा—अध्यर्धं करोति। नेह कृत्वसुच्। यः सकृत्फलोपेतां क्रियामभिनिर्वर्त्य पुनस्तामेव कुर्वन् मध्ये निवर्तते स एवमुच्यते इति। पाञ्चकलापिकमिति। पञ्च कलापाः परिमाणमस्येति विग्रहे 'तद्धितार्थ–' इति समासः। 'तदस्य परिमाणम्' इति ठञ्। एवं पञ्चलोहितिकमपि बोध्यम्।

लुग्वा स्यात् । अध्यर्धकार्षापणम्, अध्यर्धकार्षापणिकम् । द्विकार्षापणम्, द्विकार्षापणिकम् । औपसङ्ख्यानिकस्य टिठनो लुक् । पक्षे अध्यर्धप्रतिकम् । द्विप्रतिकम् । अध्यर्धसहस्रम्, अध्यर्धसाहस्रम् । द्विसहस्रम्, द्विसाहस्रम् । १६९५ द्वित्रिपूर्वान्निष्कात् । (५-१-३०) लुग्वा स्यात् । द्विनिष्कम्, द्विनैष्किकम् । त्रिनिष्कम्, त्रिनैष्किकम् । 'बहुपूर्वाच्चेति वक्तव्यम्' (वा ३०२४) बहुनिष्कम्, बहुनैष्किकम् । १६९६ बिस्ताच्च । (५-१-३१) द्वित्रिबहुपूर्व

---

द्विगुनिमित्तस्यार्हीयस्य लुगिति व्याख्यानादिति यत्नम् । विभाषा । लुग्वेति । आर्हीयस्येति शेषः । औपसङ्ख्यानिकस्येति । 'कार्षापणाट्टिठन् वक्तव्यः' इत्युक्तस्येत्यर्थः । अध्यर्धप्रतिकमिति । प्रत्यादेशस्य टिठन्सनियोगशिष्टत्वात् प्रत्यादेशपक्षे टिठनो न लुगिति भावः । अध्यर्धसहस्रमिति । 'शतमान-' इति विहितस्याणो लुक् । लुगभावे तु 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धिः । द्वित्रिपूर्वान्निष्कात् । लुग्वास्यादिति । आर्हीयस्येति शेषः । द्विनिष्कमिति । ठञो लुक्, असमासाट्ठकोऽसम्भवात् । बिस्ताच्च । आर्हीयस्य लुग्वेति शेषः । द्विबिस्तं द्विबैस्तिकमिति । द्वाभ्यां बिस्ताभ्यां क्रीतमिति विग्रहः । ठञ पाक्षिको लुक् । इत्यादीति । बहुबिस्तं बहुबैस्तिकमित्युदाहार्यम् । 'बहुपूर्वाच्च' इति वार्तिकस्य अत्राप्यनुवृत्तेर्भाष्ये उक्तत्वात् ।

---

पञ्च लोहिन्यो गुञ्जाः परिमाणमस्येति विग्रहे पूर्ववत्समासतद्धितौ । 'भस्याढे तद्धिते' इति पुंवद्भावाल्लोहिनीशब्दस्येकारनकारयोरभावः । परिमाणविशेषस्य नामधेये एते । असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणम्, न तु द्विगोः । एतच्च वृत्तिकृता सूत्राशयमनुरुध्य वर्णितमिति इहापि तथैवोक्तम् । भाष्यवार्तिकयोस्त्वसंज्ञाग्रहणं प्रत्याख्यातम् । तथा हि—द्विगुविशेषणमसंज्ञाग्रहणम् । पञ्चकलापपञ्चलोहितशब्दौ च द्विगू कृततद्धितलुकावेव मतौ । यस्तु ताभ्यामुत्पद्यते ठन् स श्रूयते इति द्विगोरनिमित्तत्वेन तस्य लुगभावादिति । विभाषा । टिठनो लुगिति । प्रत्यादेशपक्षे तु लुङ् न भवति, प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वादिति बोध्यम् । अध्यर्धसहस्रमिति । 'शतमानविंशतिक-' इति विहितस्याणो लुक् । तदभावपक्षे तु 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धिः । अध्यर्धशब्दः सङ्ख्यावाचीत्यधुनैवोक्तत्वात् । द्वित्रिपूर्वात् । अध्यर्धग्रहणमुत्तरार्धवृत्तमपीह न संबध्यते । 'द्विगोः' इति तु संबध्यत एव षष्ठीसमासं व्यावर्तयितुम् । अत्र च व्याख्यानमेव शरणम् । 'द्वित्रिभ्यां निष्कात्' इत्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनमिति हरदत्तः । द्विनैष्किकमिति । 'प्राग्वतेष्ठञ्' मतान्तरे तु ठगिति मनोरमायाम् । 'निष्कादिभ्यः समासे ठगभावात् परिच्छेदकमात्र गृह्यते इति मतान्तरेऽपि ठञेव भवति, उन्मानस्यापि परिमाणत्वात् 'असमासे निष्कादिभ्यः' इत्यादिना पर्युदस्तत्वाट्ठगभावे निष्कादिभ्यष्ठञि प्राप्ते असमासे ठग्विधानेऽपि समासे ठञ एव प्राप्तत्वादित्यर्थे । 'परिमाणान्तस्य-' इत्युत्तरपदवृद्धिः । 'द्विगोः' इति सम्बन्धान्नेह लुक् । द्वयोर्निष्कयोः समाहारो द्विनिष्कस्तेन क्रीतं द्विनैष्किकम् । 'अध्यर्धपूर्व-' इत्यसम्बन्धादध्यर्धनैष्किकमित्यत्राप्यनेन लुङ् न भवति । बिस्ताच्च । चकारेण 'द्वित्रिपूर्वात्'-

द्विस्तादार्हीयस्य लुग्वा स्यात् । द्विविस्तम्, द्विवैस्तिकम् इत्यादि । १६६७ **विंशतिकात्खः ।** (५-१-३२) अध्यर्धपूर्वाद् द्विगोरित्येव । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । १६६८ **खार्या ईकन् ।** (५-१-३३) अध्यर्धखारीकम् । द्विखारीकम् । 'केवलायाश्चेति वक्तव्यम्' (वा ३०२५) । खारीकम् । १६६९ **पणपादमाषशताद्यत् ।** (५-१-३४) अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम् । इह 'पादः पत्' (सू ४१४) इति न । 'यस्य-' (सू ३११) इति लोपस्य स्थानिवद्भावात् । 'पद्यत्यतदर्थे' (सू ९९१) इत्यपि न, प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् । १७०० **शाणाद्वा ।** (५-१-३५) यत्स्यात् पक्षे ठञ् । तस्य लुक् । अध्यर्धशाण्यम्, अध्यर्धशाणम् । १७०१ **द्वित्रि-**

---

**विंशतिकात्खः ।** अध्यर्धपूर्वाद् द्विगोरित्येवेति । पूर्वसूत्रयोरध्यर्धपूर्वादित्यस्यासंभवाद् द्विगोरित्यस्य प्रयोजनाभावादननुवृत्तावपि इह तदनुवर्तत इति भावः । **अध्यर्धविंशतिकीनमिति ।** अध्यर्धविंशत्या क्रीतमध्यर्धविंशतिकम् । 'विंशतित्रिंशद्भ्याम्' इति योगविभागात् कन् । अध्यर्धविंशतिकेन क्रीतमिति विग्रहः । **द्विविंशतिकीनमिति ।** द्वाभ्यां विंशतिकाभ्यां क्रीतमिति विग्रहः । **खार्या ईकन् ।** 'अध्यर्धपूर्वात्' इति 'द्विगोः' इति चानुवर्तत इत्यभिप्रेत्योदाहरति—**अध्यर्धखारीकम्, द्विखारीकमिति ।** 'तदस्य परिमाणम्' इति ठञि तस्य च लुकि प्राप्ते ईकन् । **केवलायाश्चेति ।** खार्या इति शेषः । **पणपाद ।** 'अध्यर्धपूर्वात्' इति 'द्विगोः' इति चानुवर्तत इत्यभिप्रेत्योदाहरति—**अध्यर्धपण्यम् । द्विपण्यमिति ।** अध्यर्धपणेन क्रीतमित्यर्थः । **द्विपाद्यमिति ।** द्वाभ्यां पादाभ्यां चतुर्थांशाभ्यां क्रीतमिति विग्रहः । यति 'यस्येति च' इत्यकारलोपः । **स्थानिवद्भावादिति ।** 'अचः परस्मिन्-' इत्यनेनेति भावः । **प्राण्यङ्गार्थस्येति ।** व्याख्यानादिति भावः । इह सूत्रे पणमाषसाहचर्यात् पादशब्दोऽपि परिमाणविशेषवाची गृह्यते । **शाणाद्वा । पक्षे ठञिति ।** 'आर्हात्' इति ठञ्विधौ परिमाणपर्युदासाट्ठञिति भावः । **तस्य लुगिति ।** ठञ इति भावः । अत्र 'अध्यर्धपूर्वात्' इति 'द्विगोः' इति चानुवर्तत इत्यभिप्रेत्य अध्यर्धपूर्वादुदाहरति—**अध्यर्धशाण्यम्, अध्यर्धशाणमिति ।** यति ठञो लुकि च रूपम् । अथ शाणान्तद्विगोरुदाहरणं

---

इत्यत्र पूर्वादित्यनुकृष्यते, तत्फलं तु 'चानुकृष्टं नोत्तरत्र' इत्युत्तरत्रानुवृत्त्यभावः । **विंशतिकात्खः ।** 'शतमानविंशतिक-' इत्यणि प्राप्ते तस्य च लुकि प्राप्ते खोऽत्र विधीयते । **खार्याः ।** 'तदस्य परिमाणम्' इति ठञि प्राप्ते तस्य च लुकि प्राप्ते ईकन् विधीयते । कन्विधौ 'केऽणः' इति ह्रस्वः स्यात् । इकन्विधावपि 'यस्येति च' इति लोपादिष्टं न सिध्यतीति भावः । **प्राण्यङ्गार्थस्यैवेति ।** अयं भावः—'पादस्य पदाज्यातिगोपहतेषु' इत्यत्र प्राण्यङ्गस्यैव हि पादस्य ग्रहणम्, तस्यैवाज्यातिभिर्गतिवचनैः संबन्धसंभवात् । तथा च 'पद्यति-' इत्यादावपि तस्यैवानुवृत्तिः । इह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचिनो ग्रहणमिति । **पक्षे ठञिति ।** यद्यपि शाण उन्मानम्, तथापि 'आर्हात्-' इति सूत्रे परिमाणग्रहणेन परिमीयते परिच्छिद्यतेऽनेनेति योगवृत्त्या

**पूर्वादण्च** । ( ५-१-३६ ) 'शाणात्' इत्येव । चाद्यत् । तेन त्रैरूप्यम् । 'परिमाणान्तस्यासंज्ञाशाणयोः' ( सू १६८३ ) इति पर्युदासादादिवृद्धिरेव । द्वैशाणम्, द्विशाण्यम् । द्विशाणम् । इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषां समर्थविभक्तयोऽर्थाश्चाकाङ्क्षितास्त इदानीमुच्यन्ते । १७०७ **तेन क्रीतम्** ।

---

वदन् विशेषमाह—**द्वित्रिपूर्वादण् च** । वार्तिकमिदम् । **चाद्यदिति** । पाणिनीयसूत्रे चकारेण समुच्चीयत इत्यर्थः । ततश्च यताऽभावे ठञपि लभ्यते । तदाह—**तेन त्रैरूप्यमिति** । अणा यता ठञा चेत्यर्थः । अणि 'परिमाणान्तस्य—' इत्युत्तरपदवृद्धिमाशङ्क्याह—**परिमाणान्तस्येति** । **ठञादयस्त्रयोदशेति** । 'प्राग्वतेः—' इति ठञ्, 'आर्हात्—' इति ठक्, 'शताच्च—' इति ठन्यतौ, 'संज्ञायाम्—' इति कन्, 'विंशतित्रिंशद्भ्याम्—' इति ड्वुन्, 'कंसात्—' इति टिठन्, 'शूर्पात्—' इत्यञ्, 'शतमान—' इत्यण्, 'विंशतिकात्ख' इति खः, 'खार्या—' इति ईकन्, 'पणपाद—' इति यत्, 'द्वित्रि—' इति वार्तिकादण्, इत्येवं त्रयोदशेत्यर्थः । **प्रकृता इति** । प्रक्रान्ता इत्यर्थः । **समर्थविभक्तय इति** । 'समर्थानां प्रथमाद्वा' इति सूत्रलभ्यसमर्थविशेषणीभूतप्रथमा

परिच्छेदकमात्रं गृह्यत इति वादिनां मते अस्यापि पर्युदासात् ठगभावे ठञिति भावः । मुख्यमते तु ठगेव बोध्यः । 'शाणाद्वा' इति सूत्रे "शताच्चेति वक्तव्यम्" पूर्वेण नित्ये प्राप्ते विकल्पार्थम् । एवं च पूर्वसूत्रे शतग्रहणमकृत्वा शतशाणाभ्यां वेत्येव वक्तुं युक्तमित्याहुः । अन्यार्थं शत्यम्, अध्यर्धशतम् । पञ्चशत्यम्, पञ्चशतम् । यदभावे मत्वार्थलक्षणस्य कनो लुक् । 'शताच्च ठन्यतौ—' इति तु न प्रवर्तते, तत्रासमासग्रहणस्यानुवर्तनात् । **द्वित्रिपूर्वादण् च** । वार्तिकमिदं वृत्तिकृता सूत्रेषु प्रक्षिप्तम् । भाष्यादिप्रामाण्याच्छतग्रहणमिह न सम्बध्यत इत्याशयेनाह—**शाणाद्वित्येवेति** । न्यासकृता त्वण्विधायके वार्तिके सूत्रत्वभ्रमेण व्याख्यातम्—'शतशाणाभ्यां वा' इति सूत्रयितव्ये 'पणपाद—' इति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलम्, शतशब्दस्य स्वरितत्वेनानुवर्तमानोऽपि 'शाणाद्वा' इत्यनेव सम्बध्यते तदुत्तरसूत्रे 'द्वित्रिपूर्वादण् च' इत्यत्र तु न सम्बध्यते, तेन शतशब्दादण् न—इति । तदिदं सामर्थ्यवर्णनमण्विधायकं यदि सूत्रं स्यात्तदा सङ्गच्छते, नाद्यथेत्यास्तां तावत् । **त्रैरूप्यमिति** । तदेतद्दर्शयति—**द्वैशाणमित्यादिना** । अण्येवम्, ठञो लुकि द्वितीयम्, यति तृतीयम् । **ठञादयस्त्रयोदश**यति । ननु एकादशैव प्रत्ययाः प्रकृताः, सूत्रभेदेन विहितत्वात् । यत्प्रत्ययस्य द्विगणने तु द्वादश, इति त्रयोदशत्वेनेदं दुरुपपादमेव । न च 'शूर्पादञन्यतरस्याम्' इत्यन्यतरस्यांग्रहणलभ्यठञमादाय त्रयोदशत्वं सूपपादमिति वाच्यम्, तुल्ययुक्त्या "शाणाद्वा" इति सूत्रलभ्ययट्ठञोर्ग्रहणेन पञ्चदशत्वप्रसङ्गात् । नापि सूत्रोपात्तैर्द्वादशभिः सह 'द्वित्रिपूर्वादण् च' इति वार्तिकोपात्ताण्प्रत्ययस्य गणनेन निर्वाहः । उक्तरीत्या 'कंसाट्टिठन्' इति सूत्रे 'अर्धाच्चेति वक्तव्यम्', 'कार्षापणाट्टिठन् वक्तव्यः' इत्यादिवार्तिकोक्तटिठप्रत्ययस्यापि ग्रहणप्रसङ्गादिति चेत् । अत्राहुः—'कंसाट्टिठन्' इति सूत्रस्थ एव टिठन् अर्धकार्षापणशब्दाभ्यां परामृष्ट इति स न भिद्यते । 'द्वित्रिपूर्वादण् च' इति वार्तिकस्थाण् तु भिद्यते, 'शतमानविंशतिक—' इत्यणो दूरस्थत्वेन परामर्ष्टुमशक्यत्वादिति । तेन

( ५-१-३७ ) ठञ् गोपुच्छेन क्रीतं गौपुच्छिकम्। साप्ततिकम्। प्रास्थिकम्। ठक्। नैष्किकम्। १७०३ इद्गोण्याः। (१-२-५०) गोण्या इत्स्यात्तद्धितलुकि। लुकोऽपवादः। पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः। १७०४ तस्य निमित्तं संयोगोत्पातौ। (५-१-३८) संयोगः संबन्धः। उत्पातः शुभाशुभसूचकः। शत्यः शतिको वा धनपतिसंयोगः। शत्यं शतिकं वा दक्षिणाक्षिस्पन्दनम्, शतस्य निमित्तमित्यर्थः। 'वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्' (वा ३०३३)। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्। 'संनिपाताच्चेति वक्तव्यम्' (वा ३०३७) सान्निपातिकम्। १७०५ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्। (५-१-३९) गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यचः-

---

चारिततत्तद्विभक्तय इत्यर्थः। तेन क्रीतम्। अस्मिन्नर्थे तृतीयान्ताद्यथाविहितं ठञादयः स्युरित्यर्थः। ठञिति। उदाह्रियत इति शेषः। गोपुच्छेन क्रीतं गौपुच्छिकमिति। 'अगोपुच्छ' इति पर्युदासाट्ठगभावे औत्सर्गिकष्ठञिति भावः। साप्ततिकमिति। सप्तत्या क्रीतमित्यर्थः। 'अगोपुच्छसङ्ख्या-' इति पर्युदासाट्ठगभावे ठञिति भावः। प्रास्थिकमिति। प्रस्थेन क्रीतमित्यर्थः। 'अगोपुच्छसङ्ख्यापरिमाणात्' इति पर्युदासाट्ठगभावे ठञिति भावः। ठगिति। उदाह्रियत इति शेषः। नैष्किकमिति। निष्केण क्रीतमित्यर्थः। 'असमासे निष्कादिभ्यः' इति ठगिति भावः। इद्गोण्याः लुकोऽपवाद इति। 'लुक्तद्धितलुकि' इति प्राप्तस्येत्यर्थः। पञ्चगोणिरिति। आर्हीयस्य ठको लुकि स्त्रीप्रत्ययस्य इकारः। नच उपसर्जनह्रस्वत्वेनैव इदं सिद्धमिति वाच्यम्, इत्त्वविध्यभावे 'लुक्तद्धितलुकि' इति ङीपो निवृत्तावदन्तत्वात् टापि पञ्चगोणेत्यापत्तेः। मूलद्रव्यवाचिन एव तृतीयान्तात्क्रीतार्थे प्रत्यया भवन्ति, नतु देवदत्तेन क्रीतमित्यर्थे, अनभिधानादिति भाष्ये स्पष्टम्। तस्य निमित्तम्। तस्य निमित्तं संयोग उत्पातो वेत्यर्थे यथाविहितं षष्ठ्यन्तात् ठञादयः स्युरित्यर्थः। शत्यः शतिको वेति। शतस्य निमित्तमित्यर्थः। 'शताच्च-' इति यठ्ञौ। धनपतिसंयोग इति। याजनशुश्रूषादिसंपर्क इत्यर्थः। उत्पाते उदाहरति—शत्यं शतिकं वा दक्षिणाक्षिस्पन्दनमिति। शतस्य निमित्तमित्यर्थः। सूचकत्वमेवात्र निमित्तत्वमिति भावः। उपसंख्यानमिति। आर्हीयस्य ठक इति शेषः। कोपनं वृद्धिः। संनिपाताच्चेति। 'तस्य निमित्तं संयोगोत्पातौ' इत्यर्थे ठगिति शेषः। सांनिपातिकमिति। संनिपातो वातपित्तश्लेष्मणां दोषाणां संकर इति वैद्यके प्रसिद्धः। तस्य

---

क्रीतम्। तेनेति तृतीयान्तात्क्रीतार्थे यथाविहितं प्रत्ययाः स्युः। ठञिति। 'आहत्रि-' इति सूत्रे 'अगोपुच्छ-' इत्यादिपर्युदासाट्ठगभावे गोपुच्छसप्ततिप्रस्थेभ्यष्ठञ् भवतीत्यर्थः। ननु देवदत्तेन क्रीतं पाणिना क्रीतं संतोषेण क्रीतमित्यादावतिप्रसङ्ग इति चेत्। अत्राहुः-करणे तृतीयैवेह समर्थविभक्तिः, सापि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना, न त्वन्यापि, अन्यत्र त्वभिधानान्न प्रत्ययः। एतच्च 'तद्धिताः' इति महासंज्ञाकरणाल्लभ्यते तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इति व्याख्यानादिति। लुकोऽपवाद इति। 'लुक्तद्धितलुकि' इति प्राप्तस्य स्त्रीप्रत्ययस्य लुकोऽपवाद इत्यर्थः।

यशस्यं । धन्यं । स्वर्ग्यं । 'गोद्वयचः' किम्-विजयस्य वैजयिकं । 'असंख्या-' इत्यादि किम्-पञ्चानां पञ्चकम् । सप्तकम् । प्रास्थिकम् । खारीकम् । अश्वादि-आश्विकम् । आश्मिकम् । 'ब्रह्मवर्चसादुपसंख्यानम्' (वा ३०३५) । ब्रह्मवर्चस्यम् । **१७०६ पुत्राच्छ च** । (५-१-४०) चात् । पुत्रीयं, पुत्र्यं । **१७०७ सर्वभूमिपृथिवीभ्यामणञौ** । (५-१-४१) सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते । **१७०८ तस्येश्वरः** । (५-१-४२) । **१७०९ तत्र विदित इति च** ।

---

निमित्तं सान्निपातिकम्, ज्वरप्रकोपादौ अपथ्यभक्षणादिसंयोगः सन्निपातसूचकं जिह्वास्फोर्यादि च । **गोद्वयचः** । तस्य निमित्तं संयोग उत्पातो वेत्यर्थे गोशब्दाद् द्वयचश्च षष्ठ्यन्ताद् यत्प्रत्ययः स्यात्, न तु संख्यायाः परिमाणाद् अश्वादेश्चेत्यर्थः । ठञोऽपवादः । द्वयच इति । उदाह्रियत इति शेषः । धन्य इत्यादि । धनस्य यशसः स्वर्गस्य च निमित्तमित्यर्थः । **विजयस्येति** । निमित्तमिति शेषः । **वैजयिक इति** । आर्हीयष्ठक् । पञ्चानामिति । निमित्तमिति शेषः । **पञ्चकमिति** । 'संख्याया -' इति कन् । **सप्तकमिति** । सप्तानां निमित्तमित्यर्थः । **प्रास्थिक इति** । प्रस्थस्य निमित्तमित्यर्थः । 'आर्हात्-' इति ठञ्विधौ परिमाणपर्युदासात् प्राग्वतीयष्ठञ् । **खारीकमिति** । खार्या निमित्तमित्यर्थः । खार्या ईकन् । अश्वादीति । प्रत्युदाहरणसूचनमिदम् । **आश्विकमिति** । अश्वस्य निमित्तमित्यर्थः । आर्हीयष्ठक् । **आश्मिकमिति** । अश्मना निमित्तमित्यर्थः । आर्हीयष्ठक् 'नस्तद्धिते' इति टिलोपः । **ब्रह्मवर्चसादिति** । 'गोद्वयचः' इति सूत्रे 'ब्रह्मवर्चसाच्च' इति वक्तव्यमित्यर्थः । **ब्रह्मवर्चस्यमिति** । ब्रह्मवर्चसस्य निमित्तमित्यर्थः । **पुत्राच्छ च** । तस्य निमित्तमित्येव । कथं तर्हि 'आरेभिरे यतात्मानः पुत्रीयामिष्टिमृत्विजः' इति ? नहीष्टिः संयोग उत्पातो वा । उच्यते-संयुज्यतेऽनेनेति संयोगः । इष्ट्वा हि पुत्रेण फलेन युज्यते यष्टा । सर्वभूमि । तस्य निमित्तमित्येव । सर्वभूमि, पृथिवी आभ्यां यथासङ्ख्यमणञौ स्तः । **सार्वभौम इति** । ठञोऽपवादः अण् । **पार्थिव इति** । पृथिव्या निमित्तं संयोग उत्पातो वेत्यर्थः । स्त्रियां पार्थिवी । सार्वभौमशब्दे कथमुभयपदवृद्धिरित्यत आह— **सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यत इति** । तथा च 'अनुशतिकादीनां च' इत्युभयपदवृद्धिरिति भावः । **तस्येश्वरः** । **तत्र विदित इति च** । सूत्रद्वयमिदम् । 'सर्वभूमिपृथिवीभ्याम्' इत्यनुवर्तते । 'तस्य निमित्तं संयोगोत्पातौ' इति तु निवृत्तम्, पुनः 'तस्य' इत्युक्तेः । तस्येश्वर इत्यर्थे षष्ठ्यन्तात्तत्र विदित इत्यर्थे तु सप्तम्यन्ताद् अणञौ स्त इत्यर्थः ।

---

**पञ्चकमिति** । संख्यायाः कन् । **आश्मिकमिति** । अश्मनो निमित्तमित्यर्थे ठञ् । 'नस्तद्धिते' इति टिलोपः । **पुत्राच्छ च** । 'गोद्वयचः-' इति नित्यं यति प्राप्ते वचनम् । कथं पुत्रीयः क्रतुरिति । नहि क्रतुः संयोगो नाप्युत्पात इति चेत् । अत्राह हरदत्तः—संयुज्यतेऽनेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, यागकरणेन हि पुरुषः फलेन संयुज्यतेऽतो यागादिरपि संयोगः, न केवलं सम्बन्ध एवेत्याशय इति । **सर्वभूमि**

(५-१-४३)। सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः। पार्थिवः। १७१० लोकसर्वलोकाट्ठञ्। (५-१-४४) 'तत्र विदितः' इत्यर्थे। लौकिकः। अनुशतिकादित्वादुभयपदवृद्धिः। सार्वलौकिकः। १७११ तस्य वापः। (५-१-४५) उप्यतेऽस्मिन्निति वापः क्षेत्रम्। प्रस्थस्य वापः प्रास्थिकम्। द्रौणिकम्। खारीकम्। १७१२ पात्रात्ष्ठन्। (५-१-४६) पात्रस्य वापः क्षेत्रं पात्रिकम्, पात्रिकी क्षेत्रभक्तिः। १७१३ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते। (५-१-४७) वृद्धिर्दीयते इत्यादि क्रमेण प्रत्येकं सम्बन्धादेकवचनम्। पञ्च अस्मिन् वृद्धिः आयः लाभः शुल्कम् उपदा वा दीयते पञ्चकः। शतिकः, शत्यः। साहस्रः। उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भाग आयः। विक्रेत्रा मूल्यादधिकग्राह्यं लाभः। रक्षानिर्वेशो राजभागः शुल्कः। उत्कोच उपदा। 'चतुर्थ्यर्थे उपसं-

---

योगविभागो यथासंख्यनिवृत्त्यर्थः, उत्तरसूत्रे 'तत्र विदितः' इत्यस्यैवानुवृत्त्यर्थश्च। लोकसर्व। तत्र विदित इत्यर्थ इति। योगविभागसामर्थ्यात् 'तस्येश्वरः' इति नानुवर्तत इति भावः। लौकिक इति। लोकेषु विदित इत्यर्थः। सर्वलोकशब्दे विशेषमाह—अनुशतिकादित्वादिति। तस्य वापः। अस्मिन्नर्थे षष्ठ्यन्ताद्यथाविहितं ठञादयः स्युरित्यर्थः। प्रास्थिकमिति। प्रस्थपरिमितबीजवापयोग्यं क्षेत्रमित्यर्थः। 'आर्हात्-'इति ठग्विधौ परिमाणपर्युदासात् प्राग्वतीयष्ठञ्। द्रौणिकमिति। निष्कादित्वाट्ठक्। खारीकमिति। खार्या ईकन्। द्रोणस्य खार्याश्च वाप इत्यर्थः। पात्रात् ष्ठन्। 'तस्य वापः' इत्येव। पात्रिकमिति। पात्रस्य वाप इत्यर्थः। षित्त्वं ङीपर्थमित्याह—पात्रिकीति। तदस्मिन्। वृद्धि, आय, लाभ, शुल्क, उपदा एषां द्वन्द्वात्प्रथमाबहुवचनम्। ननु तर्हि दीयत इति कथमेकवचनमित्यत आह—वृद्धिर्दीयत इत्यादि क्रमेण। एवं च तदस्मिन्वृद्धिर्दीयते, तदस्मिन् आयो दीयते, तदस्मिन् लाभो दीयते, तदस्मिन् शुल्को दीयते, तदस्मिन्नुपदा दीयते इत्यर्थेषु, प्रथमान्ताद्यथाविहितं ठञादयः स्युरित्यर्थः। पञ्चक इति। 'संख्यायाः-' इति कन्। शतिकः शत्य इति। शतमस्मिन्वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा, दीयत इति विग्रहः। 'शताच-'ठन्यतौ। साहस्र इति। सहस्रमस्मिन्दीयते इत्यादि विग्रहः। 'शतमानसहस्र-'

---

आभ्यां यथासंख्यमणञौ स्तः। तस्येश्वरः। 'तस्य निमित्तम्—' इत्यतोऽनुवृत्त्यैव सिद्धे पुनः 'तस्य' इति निर्देशो निमित्तरूपप्रत्ययार्थस्य निवृत्तये। अन्यथा हि संयोगोत्पातावीश्वरोऽपि प्रत्ययार्थस्य विशेषणं संभाव्येत। तत्र विदित इति च। योगविभाग उत्तरार्थो यथासंख्यनिवृत्त्यर्थश्च। तस्य वापः। 'तस्य' इति वापापेक्षया कर्मणि षष्ठीत्याह—प्रस्थस्येति। कर्तरि षष्ठ्यां तु देवदत्तस्य वापः क्षेत्रमित्यादौ स्यादिति भावः। खारीकमिति। 'खार्या ईकन्'। तदस्मिन्। प्रथमासमर्थादस्मिन् इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति। शुल्कग्रहणं प्रपञ्चार्थम्, तस्याप्यायविशेषत्वात्। तथा च 'ठगायस्थानेभ्यः' इति ठग् भवति, शौल्कशालिक इति

स्यानम्' (वा ३०२६)। पञ्च अस्मै वृद्ध्यादिर्दीयते पञ्चको देवदत्तः। 'सप्तमब्राह्मणे दानम्' इतिवदधिकरणत्वविवक्षा वा। **१७१४ पूरणार्धाट्ठन्।** (५-१-४८) यथाक्रमं ठञ्टिठ-नोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयिकः। तृतीयिकः। अर्धिकः। अर्धशब्दो रूपकस्यार्धे रूढः। **१७१५ भागाद्यच्च।** (५-१-४९) चाट्ठन्। भागशब्दोऽपि रूप्यकस्यार्धे रूढः। भागो वृद्ध्यादिरस्मिन्दीयते भाग्यम्, भागिकं शतम्। भाग्या, भागिका विंशतिः। **१७१६ तद्धरति वहत्यावहति भाराद्वंशादिभ्यः।** (५-१-५०) वंशादिभ्यः परो यो भारशब्दस्तदन्तं यत्प्रातिपदिकं तत्प्रकृतिकाद् द्वितीयान्तादि-त्यर्थे। वंशभारं हरति वहत्यावहति वा वांशभारिकः। ऐक्षुभारिकः। 'भाराद्वं-शादिभ्यः' इत्यस्य व्याख्यान्तरं 'भारभूतेभ्यो वंशादिभ्यः' इति। भारभूतान्वं-

---

इत्यण्। **रक्षानिर्वेश इति।** रक्षा प्रजापरिपालनम्, तदर्थो निर्वेशो भृतिः, रक्षा निर्वेशः। **उत्कोच इति।** मह्यं किञ्चिद्दत्तं चेत् तव राजद्वारेऽनुकूलो भवामीत्यादि समयं कृत्वा यद्गृ-ह्यते तदुत्कोच इत्युच्यत इत्यर्थः। **चतुर्थ्यर्थ इति।** तदस्मै वृद्ध्यादि दीयते इत्युपसंख्यानव्यमि-त्यर्थः। **सप्तमब्राह्मणे इति।** एवं च सम्प्रदानस्यैवाधिकरणत्वविवक्षया इष्टसिद्धेरुपसंख्यानमिदं नादर्तव्यमिति भावः। **पूरणार्धाट्ठन्।** तदस्मिन् वृद्ध्यादि दीयते इत्यर्थे पूरणप्रत्ययान्ता-दर्धशब्दाच्च प्रथमान्ताट्ठन् स्यादित्यर्थः। **द्वितीयिकः। तृतीयिक इति।** 'आर्हाद-' इति ठकोऽपवादष्ठन्। **अर्धिक इति।** अर्धमस्मिन्वृद्ध्यादि दीयत इत्यर्थः। 'अर्धाच्चेति वक्त-व्यम्' इति टिठनोऽपवादष्ठन्। टिठनि सति तु स्त्रियां ङीप् स्यात्। अर्धिकेति तु टाबेवेष्यते। **रूपकस्येति।** रूपस्य कार्षापणस्येत्यर्थः। **रूढ इति।** अन्यथा अर्धशब्दस्य रूप्यकसा-पेक्षत्वादसामर्थ्यं स्यादिति भावः। रूप्यकस्यार्धे रूढ इत्यत्र प्रमाणं मृग्यम्। असामर्थ्यं तु नित्यसापेक्षत्वाद्वारयितुं शक्यमित्याहुः। **भागाद्यच्च।** तदस्मिन्वृद्ध्यादि दीयत इत्यर्थे भागशब्दात्प्रथमान्ताद्यत्प्रत्ययश्च स्यादित्यर्थः। **चाट्ठनिति।** पूर्वसूत्रादनुकृष्यत इति शेषः। **भागशब्दोऽपि रूप्यकस्यार्ध इति।** वर्तत इति शेषः। **तद्धरति वहति।** वंशाद्भारा-दिभ्य इत्येकवचनबहुवचनान्तयोः सामानाधिकरण्यासंभवाद् वैयधिकरण्येनान्वयः। स च व्युत्क्रमो व्याख्यानात्, तदाह—**वंशादिभ्यः पर इति।** द्वितीयान्तादित्यनन्तरं हरति वहति आवहतीत्यर्थे यथाविहितं प्रत्ययः स्यादिति शेषः। हरणं कथंचिद्देशान्तर-प्रापणं चौर्यं वा। शकटादिना प्रापणं वहनम्। स्वसमीपं प्रापणमावहनम् उत्पादनं

---

हरदत्तः। **उपदा दीयत इति।** जपः सस्य रक्षे यज्ञे च यत्नवान्। **साहस्र इति।** 'शतमान-' इत्यादिनाण्। **रक्षानिर्वेश इति।** निर्वेशो भृतिः। रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः सम्बन्धषष्ठ्या समासः। **सप्तमीत्यादि।** एवं च सम्प्रदान-स्यैवाधिकरणत्वविवक्षयेष्टसिद्धौ उपसंख्यानं नादर्तव्यमिति भावः। **पूरणार्धाट्ठन्।** पूर्यतेऽनेनेति पूरणोऽर्थस्तद्वाचिनोऽर्धशब्दाच्च ठन् स्यात्। **अर्धिक इति।** 'अर्धा-च्चेति वक्तव्यम्' इति टिठन् प्राप्तः, सति च तस्मिन् स्त्रियां ङीप् स्यात्। इष्यते तु

शान्हरति वांशिकः । १७१७ वस्नद्रव्याभ्यां ठन्कनौ । ( ५—१—५१ ) यथासंख्यं स्तः । वस्नं हरति वहत्यावहति वा वस्निकः । द्रव्यकः । १७१८ सम्भवत्यवहरति पचति । ( ५—१—५२ ) प्रस्थं सम्भवति प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः । प्रास्थिकी ब्राह्मणी । प्रस्थमवहरति, उपसंहरति पचति वेत्यर्थः । 'तत्पचतीति द्रोणादण्च' ( वा ३०३८ ) चाट्ठञ् । द्रोणं पचतीति द्रौणी, द्रौणिकी । १७१९ आढकाचितपात्रात्खोऽन्यतरस्याम् । ( ५—१—५३ ) पक्षे ठञ् । आढकं सम्भवति अवहरति पचति वा आढकीना,

---

वा । वांशभारिक इति । 'आर्हात्-' इति ठक् । अत्र पञ्चम्यन्तयोर्व्युत्क्रमेण वैयधिकरण्येन चान्वये प्रमाणाभावादाह—भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरमिति । भारात्परेभ्यो वंशादिभ्य इत्यर्थभ्रमव्यावृत्तये व्याख्यान्तरं विशदयति—भारभूतेभ्यो वंशादिभ्य इतीति । वंशादिशब्दानां भारभूतत्वं तु भारभूतवंशादिवृत्तेर्बोध्यम् । अस्मिन्व्याख्याने भारादित्येकवचनमार्षम् । यद्वा प्रत्येकान्वयाभिप्रायम् । वस्तुतो भारभूता ये वंशादयः तद्वाचिभ्य इति यावत् । वस्नद्रव्याभ्याम् । 'तद्धरति वहत्यावहति' इत्यनुवर्तत इत्यभिप्रेत्याह—वस्नं हरतीत्यादि । संभवत्यवहरति । तद् इति द्वितीयान्तमनुवर्तते । द्वितीयान्तात्संभवतीत्याद्यर्थेषु यथाविहितं प्रत्ययः स्यादित्यर्थः । प्रास्थिक इति । 'आर्हात्' इत्यत्र परिमाणपर्युदासाट्ठगभावे प्राग्वतीयष्ठञ् । ननु संभवतीत्यस्य उपपद्यत इत्यर्थकत्वादकर्मकत्वात्प्रस्थं संभवतीति कथं द्वितीयेत्यत आह समावेशयतीत्यर्थ इति । उपसर्गवशादिति भावः । प्रास्थिकी ब्राह्मणीति । ठञन्तत्वाद् ङीविति भाव. । अवहरतीत्येतद्व्याचष्टे—उपसंहरतीति । किंचिदूनमपि यथा प्रस्थपरिमितं भवति तथा मिमीत इत्यर्थः । तत् पचतीति द्रोणादण्चेति । वार्तिकमिदम् । द्वितीयान्ताद् द्रोणशब्दात् पचतीत्यर्थेऽण् च स्यादित्यर्थः । पचतिग्रहणं संभवत्यवहरतिनिवृत्त्यर्थम् । चाट्ठञिति । 'आर्हात्' इति ठग्विधौ परिमाणपर्युदासात् ठगभावे प्राग्वतेष्ठञेव चकारादनुकृष्यत इति भावः । द्रौणीति । अणन्तत्वाद् ङीप् । द्रौणिकीति । ठञन्तत्वाद् ङीप् । आढकाचित । आढक, आचित, पात्र एभ्यो द्वितीयान्तेभ्यः संभवत्यवहरतिपचतीत्यर्थेषु खो वा स्यादि-

---

टाप् । रूपकस्येति । रूपकं कार्षापणम् । रूढ इति । तथा च भागवद्द्रव्यसापेक्षत्वेनासामर्थ्यमिह नोद्भावनीयमिति भावः । भारभूतेभ्यो वंशादिभ्य इति । ननु वंशादयः शब्दास्ते कथं भारभूता इत्यत आह—भारभूतानिति । भारशब्दोऽर्थद्वारा वंशादीनां विशेषणमिति भावः । 'भारेभ्य' इति वक्तव्ये प्रत्येकं सम्बन्धविवक्षया सूत्रे 'भारात्' इति निर्देशः । वस्निक इति । वस्नं मूल्यम् । सम्भवत्यवहरति । आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुपसर्जनं धारणं संभवतेरर्थः । तेन सकर्मकत्वात्तदिति द्वितीयान्तानुवृत्तिर्न विरुध्यते तदाह प्रस्थं स्वस्मिन्निति । प्रास्थिकीति । ठञन्तत्वान्ङीप् अवहरतीत्येतद्व्याचष्टे उपसंहरतीति । तत्पचतीति । वार्तिकेऽस्मिन्पचतिग्रहणं संभवत्यवहरतीतिनिवृत्त्यर्थम् । द्रोणपरिमिते

आढकिकी। आचितीना, आचितिकी। पात्रीणा, पात्रिकी। १७२० द्विगोः ष्ठंश्च। (५—१—५४) 'आढकाचितपात्रात्' इत्येव आढकाद्यन्तात् द्विगोः सम्भवत्यादिष्वर्थेषु ष्ठन्खौ वा स्तः। पक्षे ठञ्। तस्य 'अध्यर्ध—' (सू १६९२) इति लुक्। षित्वान्ङीष्। द्व्याढकिकी, द्व्याढकीना। 'द्विगोः' (सू ४७९) इति ङीप्। द्व्याढकी। द्व्याचितिकी, द्व्याचितीना। 'अपरिमाण—'(सू ४८०) इति ङीब्निषेधात् द्व्याचिता। द्विपात्रिकी द्विपात्रीणा, द्विपात्री। १७२१ कुलिजाल्लुक्खौ च (५-१-५५) कुलिजान्ताद् द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्तः। चात्ष्ठंश्च। लुगभावे ठञ् श्रवणम्। द्विकुलिजी, द्विकुलिजीना, द्विकुलिजिकी, द्वैकुलिजिकी। १७२२ सोऽस्यांशवस्नभृतयः। (५—१—५६) अंशो भागः। वस्नं मूल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नं भृतिर्वा अस्य पञ्चकः। १७२३ तदस्य परिमाणम्। (५—१—५७) प्रस्थ

---

स्यर्थः। पक्षे ठञिति। 'आर्हात्' इत्यत्र परिमाणपर्युदासान्न ठगिति भावः। द्विगोः ष्ठंश्च। ष्ठन्खावपीति। चकारेण खस्यानुकर्षादिति भावः। वा स्त इति। अन्यतरस्यामित्यनुवृत्तेरिति भावः। पक्षे ठञिति। 'आर्हात्' इत्यत्र परिमाणपर्युदासान्न ठगिति भावः। षित्वाद् ङीष्। द्व्याढकिकीति। द्वे आढके सम्भवत्यवहरति पचति वेत्यर्थे 'तद्धितार्थ—' इति द्विगु, ष्ठन्, षित्त्वाद् ङीषित्यर्थः। अत्र 'न य्वाभ्याम्—' इत्यैज न, वृद्धिनिषेधसन्नियोगशिष्टत्वाद् ञिणित्त्वाभावेन वृद्धेरप्रसक्तेः। द्व्याढकीनेति। खे रूपम्। द्विगोरिति ङीप्। द्व्याढकीति। ठञि 'अध्यर्ध—' इति तस्य लुक्। 'द्विगोः' इति ङीबित्यर्थः। प्रत्ययलक्षणमाश्रित्य ठञन्तलक्षणङीप् तु नेति 'अपरिमाणबिस्त—इत्यनावनम्। 'अध्यर्ध—' इति लुक् ठञ एव, नतु ष्ठन्खयोरपि, विधिसामर्थ्यात्। द्व्याचितिकी, द्व्याचितीनेति। ष्ठनि खे च रूपम्। अथ द्व्याचितशब्दात् ठञो लुकि 'द्विगोः' इति ङीपमाशङ्क्याह— अपरिमाणेति ङीब्निषेधादिति द्विपात्रिकीत्यादि। कुलिजाल्लुक्खौ च। अन्यतरस्यामित्यनुवृत्तिमभिप्रेत्याह— लुक्खौ वा स्त इति। 'आर्हात्' इत्यत्र परिमाणपर्युदासाद्वगभावे प्राग्वतीयस्य ठञः 'अध्यर्ध—' इति नित्ये लुकि प्राप्ते लुको विकल्पविधिः। चात् ष्ठंश्चेति। तथा च ठञो लुक् खश्च ष्ठंश्चेति त्रितयं विकल्प्यते। तत्र ष्ठनः खस्य ठञो लुकश्चाभावे ठञ् श्रवणं पर्यवस्यति, तदाह लुगभावे ठञ् श्रवणमिति। द्विकुलिजीति। ठञो लुकि रूपम्। 'द्विगोः' इति ङीप्। द्विकुलिजीनेति। खे रूपम्। द्विकुलिजिकीति। ष्ठनि रूपम्। द्वैकुलिजिकीति। ठञो लुगभावे

---

व्रीह्यादौ द्रोणशब्दो लाक्षणिकः। पक्षे ठञिति। आढकादीनां परिमाणत्वाट्ठग् नेति भावः। द्विगोः ष्ठंश्च। ष्ठनिति छेदः, तदाह षित्वादिति। द्व्याढकिकीति। 'न य्वाभ्याम्—' इत्यैजागमो न शङ्क्यः, वृद्धिनिषेधसन्नियोगेन तद्विधानाद् वृद्धेश्च प्राप्त्यभावात्। अपरिमाणेति। आचितस्य परिमाणत्वेऽपि तस्मिन् सूत्रे विशिष्यग्रहणादिति भावः। द्वैकुलिजिकीति। 'असंज्ञाशाणयोः' इत्यत्र कुलि-

परिमाणमस्य प्रास्थिको राशिः। १७२४ संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु। (५—१—५८) पूर्वसूत्रमनुवर्तते। तत्र 'संज्ञायां स्वार्थे प्रत्ययो वाच्यः' (वा ३०३९) यद्वा द्व्येकयोरितिवत्सङ्ख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः। पञ्चैव पञ्चकाः शकुनयः। पञ्च परिमाणमेषामिति वा। सङ्घे पञ्चकः। सूत्रे अष्टकं पाणिनीयम्। सङ्घशब्दस्य प्राणिसमूहे रूढत्वात्सूत्रं पृथगुपात्तम्।

---

रूपम् परिमाणान्तस्येत्यत्र 'असंज्ञाशाणकुलिजानाम्' इत्युक्तेर्नोत्तरपदवृद्धिः। **सोऽस्यांश।** 'स' इति प्रत्येकमंशादिष्वन्वेति। सोऽस्यांशः, तदस्य वस्नम्, सास्य भृतिः इत्यर्थेषु प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। **पञ्चक इति।** 'संख्यायाः—'इति कन्। **तदस्य परिमाणम्।** अस्मिन्नर्थे प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। **प्रास्थिक इति।** 'आर्हात्' इत्यत्र परिमाणपर्युदासात् प्राग्वतीयष्ठञ्। अत्र संख्यापि परिमाणम्। यद्यपि 'अगोपुच्छसंख्यापरिमाणात्—' इति पृथग्ग्रहणात् संख्या न परिमाणम्, तथाप्यत्र परिच्छेदकत्वात् संख्यापि परिमाणम्, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणाल्लिङ्गात्। तेन षष्टिः परिमाणमस्य षाष्टिकमिति सिद्धम्। द्विषष्ट्यादिभ्यस्त्वनभिधानान्नेति भाष्ये स्पष्टम्। **संख्यायाः। अनुवर्तत इति।** तथा च तदस्य परिमाणमित्यर्थे प्रथमान्तात् संख्यात्मकपरिमाणवाचिनो यथाविहितं प्रत्ययाः स्युरित्यर्थः। **संज्ञायां स्वार्थे प्रत्ययो वाच्य इति।** पञ्चकाः शकुनय इत्यत्र पञ्च परिमाणमेषामित्यर्थो न संभवति, 'आ दशतः संख्याः संख्येये' इति पञ्चन् शब्दस्य संख्येयवृत्तित्वेन पञ्च परिमाणमिति सामानाधिकरण्यानुपपत्तेः। अतः संज्ञायां स्वार्थ एव संख्यायाः प्रत्यय इति पर्यवस्यतीति भावः। **यद्वेति।** द्विशब्दस्य एकशब्दस्य च संख्येयवृत्तित्वेऽपि 'द्व्येकयोः—'इति समासवृत्तावेकत्वद्वित्वपरत्वमभ्युपगम्यते। अन्यथा 'द्व्येकयोः—' इति द्विवचनानुपपत्तेः। तद्वत्पञ्चकाः शकुनय इति तद्धितवृत्तावपि पञ्चन्शब्दस्य पञ्चत्वसंख्यापरतया पञ्चत्वं परिमाणमस्येति सामानाधिकरण्यं स्वीकृत्य पञ्चत्ववाचिनः पञ्चन्शब्दात् पञ्चत्वरूपपरिमाणवति प्रत्यय उपपद्यत इत्यर्थः। तत्र संज्ञायां स्वार्थे उदाहरति—**पञ्चैवेति।** परिमाणिनि प्रत्ययमुदाहरति। **पञ्च परिमाणमिति।** पञ्चत्वमित्यर्थः। **सङ्घ इति।** उदाहरणं वक्ष्यत इत्यर्थः। **पञ्चक इति।** पञ्चत्वमस्य संघस्य परिमाणमित्यर्थः। संघस्य पञ्चत्वं तु अवयवद्वारा बोध्यम्। **सूत्र इति।** उदाह्रियत इति शेषः। **अष्टकं पाणिनीयमिति।** सूत्रमिति शेषः। अष्टाध्याय्याः परि-

---

जशब्दोऽपि इष्यते, तेनोत्तरपदवृद्धिर्नेत्याहुः। **तदस्य परिमाणम्।** इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते, न तु सर्वतोमानमेव, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात्। षष्टिजीवितं परिमाणमस्य षाष्टिकः। 'सोऽस्य' इति वर्तमाने पुनः 'तदस्य' इति ग्रहणात् 'द्वे षष्टी जीवितं परिमाणमस्य द्विषाष्टिकस्त्रिषाष्टिकः' इत्यादौ 'अध्यर्ध—' इति लुङ् न भवति। स्पष्टं चेदं काशिकादौ। **पूर्वसूत्रमिति।** तेन पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इत्यादि सिध्यति। यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या पञ्च गावोऽस्य सङ्घस्येति, तदा तु प्रत्ययो न भवति, परिमाणस्य प्रत्ययार्थत्वा-

पञ्चकमध्ययनम् । 'स्तोमे डविधि' (वा २०४५) । पञ्चदश मन्त्रा परिमाणमस्य पञ्चदश स्तोम । सप्तदश । एकविंश । डप्रत्यये टिलोप । सामयागेषु छन्दोगैं क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुति स्तोम । १६७५ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । (५—१—५९) एते रूढिशब्दा निपात्यन्ते । १६७६ पञ्चद्दशतौ वर्गे वा । (५—१—६०)

---

माणमस्येति विग्रह । अनावृत्त्व अध्यायद्वारा सूत्रेऽन्वेति । सूत्रशब्दश्च सूत्रमयपर, एकस्मिन् सूत्र अष्टकत्वस्यासम्भवात् । नन्वेव सति सघग्रहणेनैव सिद्धे सूत्रग्रहण व्यर्थमित्यत आह— सघशब्दस्येति । पञ्चकमध्ययनमिति । पञ्चावृत्तय परिमाणमस्येति विग्रह । स्तोमे डविधिरिति । तदस्य परिमाणमित्यर्थे सङ्ख्यावाचिन उपसङ्ख्यातव्य इति शेष । सामाधारमन्त्रसमूह स्तोमशब्द शक्त इति कैयट । मनुष्यादिसमूह तु स्तोमशब्दा लाक्षणिक इति तदाशय । तदाह—पञ्चदश मन्त्रा इति । पञ्चदश स्तोम इति । पञ्चदशन्शब्दाद् डप्रत्यय 'टे' इति टिलोप । सामाधारभूतपञ्चदशमन्त्रसमूह इत्यर्थं । ननु डित्वाभावेऽपि 'नस्तद्धिते' इत्येव टिलोपसिद्धेर्डित्व व्यर्थमित्यत आह—एकविंश इति । एकविंशतिमन्त्रा परिमाणमस्य समूहस्येति विग्रह । डप्रत्यय इति । 'तिविंशतेर्डिति' इति टिलोप । मीमांसकास्तु पृष्ठरथन्तरादिशब्दवाच्या प्रगीतमन्त्रसाध्या गुणवत्त्वन वर्णनात्मिका स्तुतिरेव स्तोम, स एव डप्रत्ययार्थं । प्रगीतपञ्चदशमन्त्रपरिमाणक स्तोम इत्यर्थं । पञ्चदशत्वसङ्ख्यात्मकपरिमाण स्तुतौ मन्त्रद्वारा बोध्यम् । एव च 'पञ्चदशेन स्तुवते' इत्यादौ धात्वर्थभूतस्तुतिसामानाधिकरण्य पञ्चदशादिशब्दानामुपपद्यत इत्याहु । त मतमवलम्ब्याह—सोमयागेष्वित्यादि । पङ्क्तिविंशति । रूढिशब्दा निपात्यन्त इति । तदस्य परिमाणमित्यर्थे इति शेष । पञ्च पादा परिमाणमस्येत्यर्थे पञ्चन्शब्दात् तिप्रत्यय, प्रकृतेष्टिलोप, चकारस्य कुत्वम्, अनुस्वारपरसवर्णौ, पङ्क्तिरिति रूपम् । 'पञ्चाक्षरा पञ्चपदा पङ्क्ति' इति छन्दःशास्त्रे । दशाना वर्गो दशत् । 'पञ्चद्दशतौ वर्गे वा' इति वक्ष्यते । द्वौ दशतौ परिमाणमस्य सघस्येति विंशति, शतिच्प्रत्यय, प्रकृतेर्विन्भाव,

---

भावात् । एतच्च 'आहृदिगापुच्छ—' इति सूत्रे कैयटे स्पष्टम् । स्वार्थे उदाहरति— पञ्चैचेति । स्तोमे डविधिरिति । डित्करणमेकविंश इत्यत्र टिलोपार्थम् । त्रयस्त्रिंशादौ टिलोपार्थं च । पञ्चदश मन्त्रा इति । 'साम्ना स्तुवीत,' 'एक साम तृचे क्रियते' इति हि श्रुति । तत्र तृचस्य पञ्चकृत्व आवृत्त्या पञ्चदशमन्त्रा । सप्तदशे स्तोमे अन्त्याय ऋच सप्तकृत्व आवृत्ति । प्रथममध्यमयोस्तु पञ्चकृत्व एव, एकविंशे स्तोमे तु तृचस्य सप्तकृत्व आवृत्तिरिति ज्ञेयम् । छन्दोगैरिति । सामगैरित्यर्थ । पङ्क्तिविंशति । 'तदस्य परिमाणम्' इति वर्तते पञ्चन्शब्दस्य टिलोप, तिप्रत्यय, 'चो कु' इति कुत्वम् । पञ्चपदानि परिमाणमस्य पङ्क्तिश्छन्द इति काशिका । पदशब्दोऽत्र पादपर्याय इति हरदत्त । रूढिशब्दा इति । तथा चात्र नावयवार्थेऽभिनिवेष्टव्यम् । पङ्क्तिशब्दो हि नानार्थ । अस्ति क्रमसन्निवेशे ब्राह्मणपङ्क्ति पिपीलिका-

पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे पञ्चकः । दशकः । १७२७ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् । ( ५—१—६२ ) त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि । चात्वारिंशानि । १७२८ तदर्हति । ( ५—१—६३ )

---

अनुस्वारश्च । अत्र संघग्रहणमनुवर्तते । तथा च गवां विंशतिरिति भवति । संघसंघिनोस्तादात्म्यविवक्षायां तु विंशतिर्गाव इति भवति । स्वभावादेकवचनं स्त्रीत्वं च । एवं त्रिंशदादावपि । 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसङ्ख्ययोः' इति, 'तासु चानवतेः स्त्रियः' इति चामरः । त्रयो दशतः परिमाणमस्य संघस्य त्रिंशत्, शत्प्रत्ययः, प्रकृतेः त्रिन्भावश्च । चत्वारो दशतः परिमाणमस्य संघस्य चत्वारिंशत्, शत्प्रत्ययः । प्रकृतेः चत्वारिन्भावश्च । पञ्च दशतः परिमाणमस्य संघस्य पञ्चाशत्, शत्प्रत्ययः प्रकृतेः पञ्चादेशः । षड् दशतः परिमाणमस्य संघस्य षष्टिः । तिप्रत्ययः प्रकृतेः षष्, जश्त्वाभावश्च । सप्त दशतः परिमाणमस्य संघस्य सप्ततिः, [1]तिप्रत्ययः, प्रकृतेः सप्तादेशः । अष्टौ दशतः परिमाणमस्य संघस्य अशीतिः, तिप्रत्ययः, [2]प्रकृतेः अशी इत्यादेशः । नव दशतः परिमाणमस्य संघस्य नवतिः, तिप्रत्ययः प्रकृतेः नवादेशः । दश दशतः परिमाणमस्य संघस्य शतम्, तप्रत्ययः प्रकृतेः शादेशश्च । एतत्सर्वं भाष्ये स्पष्टम् । 'एतान्यव्युत्पन्नप्रातिपदिकानि' इति तु भाष्यनिष्कर्षः । पञ्चद्दशतौ । पञ्च दश वा परिमाणमस्य वर्गस्येत्यर्थे एतौ निपात्येते इत्यर्थः । पञ्चद्वर्ग इति । पञ्च परिमाणमस्येत्यर्थे पञ्चन्शब्दाद् डतिप्रत्ययः । तत्र इकार उच्चारणार्थः । 'टेः' इति टिलोपः । दशदिति । दश परिमाणमस्य वर्गस्येति विग्रहः । डति डित्त्वाट्टिलोपः । एतदर्थमेव डित्त्वम् । पक्ष इति । डत्यभावपक्षे 'संख्यायाः' इति कन्नित्यर्थः । त्रिंशच्चत्वारिंशतोः । तदस्य परिमाणमित्यर्थे परिमाणिनि ब्राह्मणे वाच्ये त्रिंशच्चत्वारिंशद्भ्यां डण् स्यादित्यर्थः । ब्राह्मणं वेदेषु मन्त्रव्यतिरिक्तो भागः । त्रैंशानीति । डित्वात् 'टेः' इति टिलोपः । तदर्हति ।

---

पङ्क्तिरिति । अस्ति च दशसंख्यायां पङ्क्तिरथ इति, दशरथ इत्यर्थः । अस्ति हि छन्दोविशेषे यस्य पञ्चाक्षराः पञ्चपादाः । तथा च छन्दोविशेषे एवावयवार्थो नान्यत्रेति बोध्यम् । द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्ययः अपदत्वं च । द्वौ दशतौ परिमाणमस्य विंशतिः, अपदत्वनिपातनान्नकारस्यानुस्वारः । केचित्तु विन्भावमुक्त्वा अपदत्वं चेति न पठन्ति । त्रयाणां दशतां त्रिन्भावः शच प्रत्ययः मतान्तरे तु त्रिभावः । त्रयो दशतः परिमाणमस्य त्रिंशत् । एवं चतुर्णां चत्वारि । पञ्चानां पञ्चा । आभ्यामपि शत्प्रत्ययः । षण्णां दशतां षष्, तिश्च प्रत्ययः अपदत्वंच । षड् दशतः परिमाणमस्याः षष्टिः । ततस्त्रिभ्योऽपि तिप्रत्यय एव । सप्तानां दशतां सप्त, अष्टानां दशतामशी- नवानां दशतां नव, दशानां दशतां शभावः तश्च प्रत्ययः । दश दशतः परिमाणस्य शतम् । पञ्चदशतौ । इमौ डत्यन्तत्वेन निपात्येते वर्गेऽभिधेये । 'तदस्य परिमाणम्' इत्यनुवर्तत एव । दशदिति । दश परिमाणमस्य । पक्ष इति ।

---

१ 'तिप्रत्ययः' । 'न लोपः' इति 'नकारलोपः' इति पाठः क. ।

२ 'न लोपः' इति पाठः क. ।

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः। १७२९ छेदादिभ्यो नित्यम्। (५-१-६४) नित्यमाभीक्ष्ण्यम्। छेदं नित्यमर्हति छैदिको वेतसः। ठिन्नप्ररूढत्वात्। 'विराग विरङ्गं च' (ग सू ९९) विरागं नित्यमर्हति वैरङ्गिकः। १७३० शीर्षच्छेदाद्यच्च। (५—१—६५) शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः। यट्ठो सन्नियोगेन शिरसः

अर्हतीत्यस्य योग्यो भवतीत्यर्थे अकर्मकत्वात्तदिति द्वितीया न स्यात्। इष्यते तु द्वितीयान्तादेव प्रत्ययः। तत्राह—लब्धुमिति। श्वैतच्छत्रिक इति। आर्हीयष्ठक्। छेदादिभ्यो नित्यम्। आभीक्ष्ण्यमिति। पौनःपुन्यमित्यर्थः। तन्नित्यमर्हतीत्यर्थे द्वितीयान्तेभ्यः छेदादिभ्यो यथाविहितं प्रत्ययः स्यादित्यर्थः। छैदिको वेतस इति। 'आर्हात्' इति ठक्। 'तदर्हति' इत्येव सिद्धे आभीक्ष्ण्य एवेति नियमार्थमिदं सूत्रम्। वस्तुतस्तु नित्यमिति नाभीक्ष्ण्यार्थकं प्रत्ययार्थकोटिप्रविष्टम्, किन्तु, अपाक्षिकार्थकं 'समर्थानां प्रथमाद्वा' इति वाग्रहणानुवृत्तिनिवृत्त्यर्थमित्यभिप्रेत्य विग्रहवाक्यस्यापि लोके दर्शनान्नित्यग्रहणं न कर्तव्यमित्युक्तं भाष्ये। एवं च छेदादिभ्यः पाक्षिकप्रत्ययस्य 'तदर्हति' इत्येव सिद्धत्वात् सूत्रमेवेदं नारब्धव्यमिति फलति। विरागं विरङ्गं चेति। गणसूत्रमिदम्। उक्तेऽर्थे विरागशब्दो विरङ्गादेशं लभत इत्यर्थः। चादार्हीयष्ठक्। शीर्षच्छेदाद्यच्च। चादार्हीयष्ठक्। ननु 'शीर्षंश्छन्दसि' इति छन्दस्येव शिरसः शीर्षादेशविधानात् कथमिह शीर्षादेशः

वाग्रहणात् 'सङ्ख्यायाः—' इति क्वचिदपि भवतीति भावः। त्रिंशच्चत्वारिंशतो। व्यत्ययेन पञ्चम्यर्थे षष्ठीद्विवचनम्। 'चत्वारिंशतो ब्राह्मणे' इति पाठे तु समाहारद्वन्द्वात्पञ्चम्येकवचनम्। इह 'ब्राह्मणसंज्ञायाम्' इति षष्ठीसमासेन निर्देष्टुमुचितम्। तथा हि सति ब्राह्मणस्य संज्ञा' इति स्फुटमवगति। अन्यथा तु यस्य कस्यचित् संज्ञायां ब्राह्मणस्थे च प्रयोगे इत्यनिष्टार्थः सम्भाव्येत। ततश्च मन्त्रे भाषायां च डण् न सिध्येत्। इष्यते च सः। तस्मादिष्टानुरोधेन षष्ठ्यर्थे सप्तमीति व्याख्येयम्। 'ब्राह्मणेऽभिधेये' इति तु काशिकायां व्याख्यानम्। ठञादय इति। ठञ उदाहरणं तु प्रस्थमर्हति प्रास्थिकः द्रौणिकः इत्याद्यूह्यम्। आदिशब्दग्राह्यस्य ठकः उदाहरणमाह—श्वैतच्छत्रिक इति। एवं शारीकः। शत्यः। शतिकः। साहस्रः। इत्यादीन्युदाहर्तव्यानि। छेदादिभ्यो। नित्यग्रहणमिह 'नित्यं क्रीडाजीविकयोः' इत्यत्रेव महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं न भवति, आरम्भसामर्थ्यादेव तन्निवृत्तिसिद्धेः, किं तु प्रत्ययार्थविशेषणमिति ध्वनयति—छेदं नित्यमर्हतीति। भाष्ये तु नित्यग्रहणं प्रत्याख्यातम्, सूत्रमेव मास्त्विति तदाशय इति मनोरमा। अयं भावः—नित्यग्रहणमिह प्रत्ययार्थविशेषणं न भवति, नित्यं छेदमर्हतीत्यस्यार्थस्यासम्भवात्। न हि कश्चित्पदार्थो नित्यं छेदमर्हति। योऽपि वेतसादिरर्धच्छिन्नः प्ररोहति, सोऽपि न नित्यं छेदमर्हति। कालान्तर एव तस्य छेदप्रवर्तनात्। न चात्र नित्यग्रहणत्यागेऽपि छेदमर्हतीत्यादिविग्रहवाक्यनिवृत्तये सूत्रस्यावश्यकत्वात्तत्प्रत्याख्यानं न युज्यत इति शङ्क्यम्, विग्रहवाक्यस्य भाष्यादिसम्मतत्वादिति दिक्। छेद भेद द्रोह दोहेत्यादयश्छेदादयः। गण-

शीर्षभावो निपात्यते ।१७३१ [1]दण्डादिभ्यः । (५-१-६६) एभ्यो यत्स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः । १७३२ पात्राद्घंश्च । (५-१-६८) चाद्यत् । तदर्हतीत्यर्थे । पात्रियः, पात्र्यः । १७३३ कडङ्करदक्षिणाच्छ च । (५-१-६९) चाद्यत् । कडं करोतीति विग्रहेऽत एव निपातनात्खच् । कडङ्कर माषमुद्गादिकाष्ठमर्हतीति कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हतीति दक्षिणीयः, दक्षिण्यः । १७३४ स्थालीबिलात् । (५-४-७०) स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः, स्थालीबिल्याः । पाकयोग्या इत्यर्थः । १७३५ यज्ञर्त्विग्भ्यां घखञौ । (५-१-७१) यथासङ्ख्यं स्तः । यज्ञमृत्विजं चार्हति यज्ञियः, आर्त्विजीनो यजमानः । 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम् (वा ३०५२) ।

---

इत्यत आह यट्ठकोरिति । दण्डादिभ्यः । यदित्यनुवर्तते तदाह यत्स्यादिति । 'दण्डादिभ्यो यः' इति त्वपपाठः, 'अचो यत्' इति सूत्रभाष्ये तथैव दर्शनात् । अर्घ्य इति । मूल्यं पूजाविधिं वार्हतीत्यर्थः । 'मूल्यं पूजाविधावर्घः' इत्यमरः । वध्य इति । वधमर्हतीत्यर्थः । पात्राद् घंश्च । पात्रियः पात्र्य इति । पात्रमर्हतीत्यर्थः । कडङ्करदक्षिणाच्छ च । 'कड मदे' कडनं कडो मदः 'घञर्थे कविधानम्' इति कः । खजिति । तथा च 'खित्यनव्ययस्य' इति मुमिति भावः । कडङ्करं च दक्षिणा चेति समाहारद्वन्द्वात्पञ्चमी । स्थालीबिलात् । छयतावनुवर्तेते, 'तदर्हति' इति च । यज्ञर्त्विग्भ्यां घखञौ । तदर्हतीत्येव । यज्ञम् ऋत्विजं चेति । यज्ञमर्हतीति यज्ञियः, ऋत्विजमर्हतीत्यार्त्विजीन इत्यन्वयः । तत्कर्मेति । यज्ञकर्मार्हतीत्यर्थे यज्ञशब्दाद् ऋत्विक्कर्मार्हतीत्यर्थे ऋत्विक्छब्दाच्च यथासङ्ख्यं

---

सूत्रमाह-विरागेति । दण्डादिभ्यः । पूर्वसूत्राद्यदनुवर्तत इत्याह-यत्स्यादिति । केचित्तु 'दण्डादिभ्यो यः' इति पठन्ति, स चापपाठ एव भाष्यादिविरोधादित्याहुः । तथा हि-'अचो यत्' इति सूत्रे भाष्ये उक्तं 'हनो वा यद् वधादेशश्च' वध्यः, घात्यः । 'तद्धितो वा' वधमर्हति वध्य इति । यदि चेह यद्विधीयेत तदैवेतदुपपद्यते, पक्षद्वयेऽपि 'यतोऽनावः' इत्याद्युदात्तत्वात् । यदि त्वत्र यो विधीयेत तदा स्वरो भिद्येत । मनोरमायां तु 'क्यब्विधौ हनो वा' 'वधस्तद्धितो वा' इति भाष्यम् । यदि चेह यद्विधीयेत, तदैवैतदुपपद्येत । क्यप्याद्युदात्तत्वं यत्यपि तद्धिते 'यतोऽनावः' इत्याद्युदात्तत्वमित्यादि स्थितम् । कडङ्करदक्षिणाच्छ च । 'कडङ्गर' इति पाठस्तूपेक्ष्य इति ध्वनयति । कडं करोतीति । 'कड मदे' कडतीति कडः । माषमुद्गादिकाष्ठमिति । अमरश्चाह 'कडङ्करो बुसं क्लीबे' इति । गौरिति । 'नीवारपाकादिकडङ्करीयैः' इति रघुः । स्थालीबिलात् । छयतावनुवर्तेते । अस्माच्छयतौ स्तः । ठकोऽपवादः । पाकयोग्याइति । निष्फलीकृता इति यावत् । यज्ञमृत्विजं चार्हतीति । अर्थी

---

१ अयमेव बालमनोरमातत्त्वबोधिनीसंमतः सूत्रपाठः । अष्टाध्यायीपुस्तकेषु तु क्वचिद् 'दण्डादिभ्यो यत्' इति, क्वचिच्च 'दण्डादिभ्यो यः' इत्युपलभ्यते ।

यज्ञियो देशः । आर्त्विजीन ऋत्विक् ।

इत्यार्हीयाणां ठगादीनां द्वादशानां पूर्णोऽवधिः ।

## अथ ठञधिकारे कालाधिकारप्रकरणम् ।३४।

अतः परं ठञेव । १७७५ पारायणतुरायणचान्द्रायणं वर्तयति । ( ५—१—७२ ) पारायणं वर्तयति पारायणिकश्छात्रः । तुरायणं यज्ञविशेषः तं वर्तयति तौरायणिको यजमानः । चान्द्रायणिकः । १७३७ संशयमापन्नः । ( ५—१—७३ ) संशयविषयीभूतोऽर्थः सांशयिकः । १७३८ योजनं गच्छति ।

घखञोरुपसङ्ख्यानमित्यर्थः । यज्ञियोदेश इति । यज्ञानुष्ठानमर्हतीत्यर्थः । आर्त्विजीन ऋत्विगिति । ऋत्विक्कर्तव्यं कर्मार्हतीत्यर्थः । यद्यपि यज्ञर्त्विक्शब्दयोस्तत्कर्मणि लक्षणया सिध्यति । तथाप्यत्र प्रकरणे मुख्यार्थेभ्य एव प्रत्यय इति ज्ञापनार्थमिदम् । ठगादीनां द्वादशानामिति । 'प्राग्वतेः' इत्यारभ्य 'तेन क्रीतम्' इत्यतः प्राक् त्रयोदश प्रत्यया अनुक्रान्ताः । तत्र 'प्राग्वतेः' इति ठञं विना आर्हादित्यादिविहितानां ठगादीनां द्वादशानां विधिः पूर्ण इत्यर्थः ।

इति तद्धितेषु प्राग्वतीये आर्हीयाणां ठगादीनां द्वादशानां पूर्णोऽवधिः ।

अथ तद्धितेषु प्राग्वतीये ठञधिकारे कालाधिकारो निरूप्यते—अतः परं ठञेवेति । आर्हीयेष्वर्थेषु प्राग्वतीयठञापवादा आर्हीयाष्ठगादयः । आर्हीयार्थेषु निरूपितेषु तत ऊर्ध्वं ठगादिप्रत्ययानाम् अनुवृत्तेरसम्भवात् प्राग्वतीयः ठञेवानुवर्तत इत्यर्थः । पारायण । द्वितीयान्तेभ्यः पारायणादिशब्देभ्यो वर्तयतीत्यर्थे ठञ् स्यादित्यर्थः । पारायणं वर्तयतीति । पारायणं वेदाध्ययनम् । तद्वर्तयति आवर्तयतीत्यर्थः पारायणिकः छात्र इति । गुरौ त्वध्येतरि नायं प्रत्ययः, अनभिधानादिति भावः । तौरायणिको यजमान इति । ऋत्विजि नायं प्रत्ययः, अनभिधानादिति भावः । चान्द्रायणिक इति । चान्द्रायणं वर्तयतीत्यर्थः । चान्द्रायणं कृच्छ्रविशेषः । संशयमापन्न । अस्मिन्नर्थे संशयशब्दाद् द्वितीया-

---

समर्थो विद्वान् शास्त्रेणापर्युदस्त इत्यर्थः । देशस्यानैवंविधत्वादुपसङ्ख्यानम्—यज्ञियोदेश इति । यज्ञानुष्ठाने योग्य इत्यर्थः । ऋत्विगिति । स तु ऋत्विक्कर्मार्हति, न तु ऋत्विजमिति सूत्रेण खञोऽप्राप्तावुपसङ्ख्यानम् । आर्हीयाणां ठगादीनां द्वादशानां गतोऽवधिः ।

इति तत्त्वबोधिन्यामार्हीयप्रकरणम् ।

पारायण । आदितः आरभ्य आन्तादविच्छेदेन वेदस्याध्ययनं पारायणम् । तच्च गुरुणा शिष्येण वा निर्वर्त्यते, अन्यतरासन्निधौ अध्ययनक्रिया अनिष्पादनात् । तथापि शिष्ये एव प्रत्ययः इष्यते न तु गुराविन्याकरे स्थितम् । तदाह—छात्र इति । यजमान इति । यद्यपि पुरोडाशादिनिर्वर्तनेन ऋत्विगपि यज्ञं वर्तयति, तथापि

(५-१-७४) यौजनिकः । 'क्रोशशतयोजनशतयोरुपसंख्यानम्' (वा ३०५५) क्रोशशतं गच्छति क्रौशशतिकः । यौजनशतिकः । 'ततोऽभिगमनमर्हतीति च वक्तव्यम्' (वा ३०५६) । क्रोशशतादभिगनमर्हतीति क्रौशशतिको भिक्षुः । यौजनशतिक आचार्यः । १७३९ पथः ष्कन् । (५-१-७५) षो ङीषर्थः । पन्थानं गच्छति पथिकः । पथिकी । १७४० पन्थो ण नित्यम् । (५-१-७६) पन्थानं नित्यं गच्छति । पान्थः, पान्था । १७४१ उत्तरपथेनाहृतं च । (५—१—७७) उत्तरपथेनाहृतमौत्तरपथिकम् । उत्तरपथेन गच्छति । औत्तरपथिकः । 'आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसङ्ख्यानम्' (वा ३०५७)।

---

न्ताट्ठक् स्यादित्यर्थः । अत्र आपन्न इति कर्तरि क्तः विषयतया प्राप्त इत्यर्थ उपसर्गवशात् । संशयविपयीभूतोऽर्थ इति । तेन समवायेन संशयावारे संदेग्धरि नायं प्रत्यय इति भावः । अमरस्तु 'सांशयिकः संशयापन्नमानसः' इत्याह । योजनं गच्छति । द्वितीयान्ताद्योजनशब्दाद् गच्छतीत्यर्थे ठञ् स्यादित्यर्थः । क्रोशशतेति । आभ्यामपि द्वितीयान्ताभ्यां गच्छतीत्यर्थे ठञ् उपसङ्ख्यानमित्यर्थः । क्रोशशतादिति । ल्यब्लोपे पञ्चमी । क्रोशशतमतीत्येत्यर्थः । पथः ष्कन् । पथः ष्कन् इति छेदः। द्वितीयान्तात् पथिन्शब्दाद् गच्छतीत्यर्थे ष्कन् स्यादित्यर्थः । पन्थो ण नित्यम् । पथ इत्यनुवर्तते । गच्छतीति च । नित्यमिति गच्छतीत्यत्रान्वितं प्रत्ययार्थप्रविष्टमेव । न तु विधानान्वितं सत् महाविभाषानिवृत्त्यर्थम् । द्वितीयान्तात् पथिन्शब्दान् नित्यं गच्छतीत्यर्थे णप्रत्ययः स्यात् प्रकृतेः पन्थादेशश्चेत्यर्थः । भाष्ये तु नित्यग्रहणं प्रत्याख्यातम् । उत्तरपथेनाहृतं च । उत्तरपथशब्दात् तृतीयान्ताद् आहृतमित्यर्थे गच्छतीत्यर्थे च ठञ् स्यादित्यर्थः । वारिजङ्गलेति । वारि, जङ्गल, स्थल, कान्तार एतत्पूर्वात् पथिन्शब्दात् तृतीयान्ताद् आहृतमिति गच्छतीति चार्थे ठञित्यर्थः । वारिपथेन गच्छति आहृतं

---

तत्र तौरायणिक इति न प्रयुज्यते, अनभिधानादिति भावः । चान्द्रायणं व्रतविशेषः । विपयीभूतोऽर्थ इति । 'स्थाणुर्वा पुरुषो वा' इति संशयविषयीभूते स्थाण्वादावेव प्रत्यय इष्यते, न तु संदेग्धरीति भावः । कथं तर्हि 'सांशयिकः संशयापन्नमानसः' इत्यमर इति चेत् । अत्राहुः—संशयापन्नं मानसं यस्मिन्विषये स विषयः संशयापन्न मानस इति । ततोऽभिगमनमिति । अत्र पञ्चम्यन्तात्प्रत्ययः । पन्थो ण । पथः पन्थ इत्ययमादेशः स्याद् णश्च प्रत्ययः । नित्यग्रहणमिह प्रत्ययार्थविशेषणम्, न तु वाक्यनिवृत्त्यर्थमित्याशयेनाह—नित्यं गच्छतीति । नित्यमिति किम्, पथिकः । भाष्ये तु नित्यग्रहणं प्रत्याख्यातम् । अयं हि भाष्याशयः—नित्यं पन्थानं गच्छतीत्यर्थोऽत्र यद्यपि सम्भवति, तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते । कदाचिद् गच्छत्यपि तत्प्रयोगात् । न चैवमपि विग्रहवाक्यनिवृत्त्यर्थं नित्यग्रहणमस्त्विति शङ्क्यम् । शिष्टप्रयोगे विग्रहवाक्यस्य दर्शनादिति । उत्तरपथेन । चकारेण गच्छतीति । प्रत्ययार्थः समुच्चीयते । तदाह—उत्तरपथेन गच्छतीति । वारिपथिकमिति । वारिपथेन गच्छतीति ।वारिपथेनाहृतमिति वा विग्रहः ।कालात् । स्वरूपग्रहणमिह न भवति,

वारिपथिकम् । १७४२ कालात् । (५-१-७८) 'व्युष्टादिभ्योऽण्' (सू १७६१) इत्यतः प्रागधिकारोऽयम् । १७४३ तेन निर्वृत्तम् । (५-१-७९) अह्ना निर्वृत्तम् आह्निकम् । १७४४ तमधीष्टो भृतो भूतो भावी । (५-१-८०) अधीष्टः सत्कृत्य व्यापारितः भृतः वेतनेन क्रीतः । भूतः स्वसत्तया व्याप्तकालः । भावी तादृश एवानागतकालः । मासमधीष्टो मासिकोऽध्यापकः । मासं भृतः । मासिकः कर्मकरः । मासं भूता मासिकी व्याधिः । मासं भावी मासिक उत्सवः । १७४५ मासाद्वयसि यत्खञौ । (५-१-८१) मासं भूतः मास्यः, मासीनः । १७४६ द्विगोर्यप् । (५-१-८२) 'मासाद्वयसि' इत्यनुवर्तते । द्वौ मासौ भूतः द्विमास्यः । १७४७ षण्मासाण्ण्यच्च । (५-१-८३) 'वयसि' इत्येव । यबित्यनुवर्तते, चाट्ठञ् । षण्मास्यः, षाण्मास्यः, षाण्मासिकः । १७४८ अवयसि ठंश्च । (५—१—८४) चाण्ण्यत् । षण्मासिको व्याधिः, षाण्मास्यः ।

---

इत्यर्थः । जाङ्गलपथिकः, स्थालपथिकः । कान्तारपथिकः । कालात् । इत्यतः प्रागिति । व्याख्यानादिति भावः । तेन निर्वृत्तम् । तृतीयान्तान्निर्वृत्तमित्यर्थे ठञ् स्यादित्यर्थः । आह्निकमिति । 'अह्नष्टखोरेव' इति नियमान्न टिलोपः । तमधीष्टो । द्वितीयान्तादधीष्टादिष्वर्थेषु ठञ् स्यादित्यर्थः । व्यापारित इति । प्रेरित इत्यर्थः । तादृश एवेति । स्वसत्तया व्याप्यमानकाल इत्यर्थः । मासमधीष्ट इत्यादौ 'कालाध्वनोः—' इति द्वितीया । मासाद्वयसि । अत्र भूत इत्येवानुवर्तते, व्याख्यानात् । मासशब्दाद् द्वितीयान्ताद् भूत इत्यर्थे यत्खञौ स्तः वयसि गम्ये इत्यर्थः । द्विगोर्यप् । अनुवर्तत इति । मासान्ताद् द्विगोर्भूत इत्यर्थे यप् स्याद्वयसि गम्ये इत्यर्थः । षण्मासाण्ण्यच्च । वयसीत्येवेति । षण्मासशब्दाद् भूत इत्यर्थे ण्यच्च स्याद्वयसि गम्ये इत्यर्थः अत्र चकारात्संनिहितस्य यपोऽनुकर्षणे ण्यद्यपावेव स्याताम्, न तु ठञपि । इष्यते तु ठञपि तत्राह—यबप्यनुवर्तत इति । स्वरितत्वादिति भावः । तर्हि चकारः किमर्थं इत्यत आह—चाट्ठञिति । तथा च ण्यत् यप् ठञिति त्रयः प्रत्ययाः फलिताः । अवयसि ठंश्च ।

---

'तमधीष्टो भृतो भूतो भावी' इत्यत्र तत्संयोगे द्वितीयानिर्देशात् । 'मासाद्वयसि' इत्यादौ मासादीनां कालेन विशेषणाच्च । तेन निर्वृत्तम् । तृतीयान्तात्कालवाचिनष्ठञ् स्यात् । तेनेति करणे तृतीया चतुर्थ्यन्तर्गते 'तेन निर्वृत्तम्' इत्यत्र तु कर्तरि तृतीयेति विशेषः । उभयत्राप्यन्तर्भावितण्यर्थाद् वृतेः कर्मणि क्तः । आह्निकमिति । 'अह्नष्टखोरेव' इति नियमाद् 'नस्तद्धिते' इति टिलोपो न । मासाद्वयसि । खञो ञित्करणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च । मासीनाभार्यः । अधीष्टानां चतुर्णामधिकारेऽपि सामर्थ्याद् भूत इत्येतदत्र सम्बध्यते । न हि मासमधीष्टो भृतो वेत्याद्युक्तौ कालकृता शरीरावस्था गम्यते इत्याशयेनाह—मासं भूत इति । एतच्च वृत्तिपदमञ्जर्योः स्पष्टम् । मासीन इति । बालकः । द्विगोर्यप् । प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यप् विधीयते । पित्त्वादनुदात्तः । तेन 'द्विमास्य' इत्यादौ 'इगन्तकाल—' इत्यादिना पूर्वपदप्रकृतिस्वरो न विहन्यते । 'य' इत्युक्ते तु प्रत्यय-

१७४९ समायाः खः । ( ५-१-८५ ) समामधीष्टो भृतो भूतो भावी वा समीनः । १७५० द्विगोर्वा । ( ५-१-८६ ) 'समायाः खः' इत्येव । 'तेन परिजय्य—' ( सू १७५७ ) इत्यतः प्राङ् निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः । द्विसमीनः, द्वैसमिकः । १७५१ रात्र्यहःसंवत्सराच्च । ( ५-१-८७ ) 'द्विगोः' इत्येव । द्विरात्रीणः, द्वैरात्रिकः । द्व्यहीनः, द्वैयह्निकः । समासान्तविधेरनित्यत्वान्न टच् । द्विसंवत्सरीणः । १७५२ सङ्ख्यायाः संवत्सर-

---

षण्मासशब्दाद् द्वितीयान्ताद् भृते अवयसि ठन् च स्यादित्यर्थः । समायाः खः । मण्डूकप्लुत्या 'तमधीष्टो भृतो भूतो भावी' इति कृत्स्नमेव सूत्रमनुवर्तते । समाशब्दाद् द्वितीयान्ताद् अधीष्टादिष्वर्थेषु खः स्यादित्यर्थः । द्विगोर्वा । समायाः ख इत्येवेति । तथा च समान्ताद् द्विगोर्द्वितीयान्तात् खो वा स्यात् पक्षे ठञिति फलितम् । 'अप्सुमनःसमासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासनसूत्रम् । 'हायनोऽस्त्री शरत्समाः' इत्यमरः । 'समां समां विजायते' इति सूत्रादेकवचनमप्यस्ति । पञ्चस्विति । तेन निर्वृत्तम् तमधीष्टो भृतो भूतो भावीति पञ्चस्वित्यर्थः । एषां यथायोगमन्वयः । द्वैसमिक इति । खाभावे प्राग्वतीयष्ठञ् । रात्र्यहः । द्विगोरित्येवेति । रात्रि, अहन्, संवत्सर एतदन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु खो वा स्यादित्यर्थः । पक्षे ठञ् । द्विरात्रीण इति । द्वाभ्यां रात्रिभ्यां निर्वृत्तः द्वे रात्री अधीष्टो भृतो भूतो भावी वेत्यर्थः । एवमग्रेऽपि यथायोगं ज्ञेयम् । द्व्यहीन इति । द्वाभ्यां अहोभ्यां निर्वृत्तो द्वे अहनी अधीष्ट इत्यादिष्वर्थेषु 'तद्धितार्थ—' इति द्विगोः खः, 'अह्नष्टखोः—' इति टिलोपः । समाहारद्विगोस्तु न खः, टचि कृते अहन्शब्दाभावात् । द्वैयह्निक इति । 'अह्नष्टखोरेव' इति नियमाद् न टिलोपः । किन्त्वल्लोपः अह्लादेशो वा । 'न य्वाभ्याम्—' इत्यैच् । ननु द्व्यहीन इत्यत्र 'तद्धितार्थ—' इति द्विगुसमासे कृते 'रात्र्यहः संवत्सराच्च' इति खं बाधित्वा परत्वाद् 'राजाहःसखिभ्यः—' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्लादेशे तस्य स्थानिवत्त्वेनाहन्शब्दत्वेऽपि टजन्तस्य तदभावाद् 'रात्र्यहःसंवत्सराच्च' इति खप्रत्ययो न स्यात् । कृतेऽपि खप्रत्यये द्व्यह्नीन इति स्यादित्यत आह—समासान्तविधेरनित्यत्वान्न टजिति । एवं च टजभावे सति नाह्लादेशः, समासान्ते

---

स्योदात्तत्वादन्तोदात्तो द्विमास्यः स्यात्; सति शिष्टस्वरबलीयस्त्वादिति भावः । यवप्यनुवर्तत इति । व्याख्यानमेवात्र शरणम् । समायाः खः । 'हायनोऽस्त्री शरत्समाः' इत्यमरः । समामधीष्ट इत्यादि । अधीष्टादयश्चत्वारोऽर्था अत्राप्यनुवर्तन्त इति भावः । द्विगोर्वा । 'संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इत्यभ्युपगमात्पूर्वेण नित्ये प्राप्ते विकल्पः । द्वैसमिक इति । खेनमुक्ते पक्षे ठञिति भावः । द्वैयह्निक इति । 'टखोरेव' इति नियमादिह टिलोपो न । 'अल्लोपोऽनः' 'न य्वाभ्याम्' इत्यैच् । ननु 'तद्धितार्थ—' इति द्विगुसमासानन्तरं 'रात्र्यहःसंवत्सराच्च' इत्येवं बाधित्वा परत्वाट्टचा भाव्यम्, न च महाविभाषया टचो विकल्प इति वाच्यम् । 'बृहतीजात्यन्ताः समासान्ताश्च' इति नित्येषु परिगणनादत आह—समासान्त-

सङ्ख्यस्य च । ( ७-३-१५ ) सङ्ख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । द्विसांवत्सरिकः । द्वे षष्टी भृता द्विषाष्टिकः । 'परिमाणान्तस्य' इत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम् । तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न । १७५३ वर्षाल्लुक्च । ( ५-१-८८ ) वर्षशब्दान्ताद् द्विगोर्वा खः । पक्षे ठञ् वा च लुक् । त्रीणि रूपाणि । द्विवर्षीणो व्याधिः, द्वैवार्षिकः, द्विवर्षः । १७५४ वर्षस्याभविष्यति । ( ७-३-१६ ) उत्तरपदस्य वृद्धिः स्यात् । द्विवार्षिकः । भविष्यति तु द्वैवर्षिकः । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति

---

पर एव तद्धितविधानादिति भावः । 'समासान्तविधिरनित्यः' इति षष्ठाध्यायस्य द्वितीये पादे 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इति सूत्रभाष्ये स्पष्टम् । अत्र संवत्सरान्तस्य खः उदाहरति—द्विसंवत्सरीण इति । ठञि त्वादिवृद्धौ प्राप्तायाम् । सङ्ख्यायाः संवत्सर । आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम् । संवत्सरश्च सङ्ख्या चेति समाहारद्वन्द्वात् षष्ठी । सङ्ख्याया उत्तरपदस्येति । सङ्ख्यायाः परस्य संवत्सरसङ्ख्योत्तरपदस्येत्यर्थः । नन्वत्र संवत्सरस्य द्वादशमासपरिमाणतया 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र सिद्धेरित्यत आह—परिमाणान्तस्येत्येवेति । वर्षाल्लुक् च । वा लुगिति । खठञोरिति शेषः । द्विवर्षीण इति । खे रूपम् । द्विवर्ष इति । खठञोर्लुकि रूपम् । ठञि आदिवृद्धौ प्राप्तायाम् । वर्षस्याभविष्यति । आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम् । शेषपूरणेन तद्व्याचष्टे—उत्तरपदस्य वृद्धिः स्यादिति । अभविष्यति यो ञिदादिः तस्मिन्परे इत्यर्थः । निर्वृत्तादिषु पञ्चस्वर्थेषु भविष्यदर्थं वर्जयित्वा तदितरेषु चतुर्ष्वर्थेषु यस्तद्धितः तस्मिन् परे इति यावत् । द्विवार्षिक इति । द्वाभ्यां वर्षाभ्यां निर्वृत्तो द्वे वर्षे अधीष्टो भृतो वेत्यर्थः । अत्र समयागे द्वितीया । द्वैवर्षिक इति । व्याधिरिति शेषः । चित्तवति नित्यमिति लुका वक्ष्यमाणत्वात् । नन्वेवं सति द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति द्विवार्षिक इत्यत्र कथमुत्तरपदवृद्धिः । भविष्यत्त्वस्य प्रतीतेरित्याशङ्क्याह—अधीष्टभृतयोरभविष्यतीति प्रतिषेधो नेति । कुत इत्यत आह—गम्यते हि तत्र भविष्यत्तेति । अध्येषणभरणयोः । क्तप्रत्ययेन भूतत्वमेव शब्दशक्त्या गम्यते । तद्धितप्रत्ययेन च तथाविधाध्येषणभरणकर्मीभूतौ

विधेयिति । यद्यपि टचि कृतेऽप्यह्नादेशेन 'द्वैयह्निक' इति रूपं सिध्यति, तथापि 'द्व्यह्नीन' इति हि रूपं न सिध्यति, टचि सत्यह्नादेशे तस्य स्थानिवत्त्वात्, 'रात्राह—' इति समासान्तस्यादन्तशब्दस्य तत्समासग्रहणेनैव ग्रहणाच्च 'रात्र्यह संवत्सराच्च' इति खप्रत्यये कृतेऽपि द्व्यह्नीन इति रूपमङ्गादित्याहुः । उत्तरपदवृद्धिर्नेति । एतच्चोपलक्षणम् । द्विसमा इत्यत्र 'द्विगोः' इति ङीबपि भवति । परिमाणत्वेन पदार्थाभावाद् 'अपरिमाणबिस्ताचित—' इतीह निषेधाप्रवृत्तेः । द्विवर्षे भृत सति 'तमधीष्ट' इति ठञ् 'वर्षाल्लुक्च' इति लुक् । वर्षा । 'चित्तवति नित्यम्' इति नित्यलुका वक्ष्यमाणत्वादचित्तवानिह प्रत्ययार्थ इति प्रत्युदाहरति—द्विवर्षीणो व्याधिरिति ।

द्विवार्षिको मनुष्यः । 'परिमाणान्तस्यासंज्ञाशाणयोः' ( सू १६८३ ) द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । द्विनैष्किकम् । 'असंज्ञा' इति किम्—पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम् । तद्धितान्तः संज्ञा । द्वैशाणम् । कुलिजशब्दमपि केचित्पठन्ति । द्वैकुलिजिकः । १७५५ **चित्तवति नित्यम्** । ( ५-१-८९ ) वर्षशब्दान्ताद् द्विगोः प्रत्ययस्य नित्ये लुक्स्याच्चेतने प्रत्ययार्थे । द्विवर्षो दारकः । १७५६ **षष्टिकाः षष्टिरात्रेण पच्यन्ते** । ( ५—१—९० ) बहुवचनमतन्त्रम् । षष्टिको धान्यविशेषः । तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते । १७५७ **तेन परिजय्यलभ्यकार्यसुकरम्** । ( ५—१—९३ ) मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः । मासेन लभ्यं कार्यं सुकरं वा मासिकम् । १७५८ **तदस्य ब्रह्मचर्यम्** । ( ५—१—९४ ) द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात् । अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मचर्यमस्य स मासिको ब्रह्मचारी । आर्धमासिकः यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्यम् । 'महानाम्या-

---

प्रतीयते । एवंविधाध्येषणभरणविशिष्टयोस्तु भविष्यता कर्माचरणेन सम्बन्धः कर्म करिष्यतीत्यनेनावगत इति न स तद्धितार्थः । एवं च तत्रापि भविष्यदर्थकतद्धितपरकत्वाभावात् स्यादेवोत्तरपदवृद्धिरित्यर्थः । **द्विवार्षिको मनुष्य इति** । 'चित्तवति नित्यम्' इति वक्ष्यमाणस्तु नित्यलुग् न भवति, चित्तवतीत्येवारम्भसामर्थ्याद् नित्यत्वे सिद्धे पुनर्नित्यग्रहणेन भूत एवार्थे नित्यं लुगित्यभ्युपगमादिति हरदत्तः । केचित्तु द्विवार्षिकः अमनुष्य इति छिन्दन्ति । **चित्तवति नित्यम्** । **प्रत्ययस्येति** । खस्य ठञश्चेत्यर्थः । दारकः बालकः । **षष्टिकाः** । **तृतीयान्तादिति** । षष्टिरात्रशब्दादिति शेषः । **तेन परिजय्य** । निवृत्तादयः पञ्चार्था निवृत्ताः तेन परिजय्यम्, तेन लभ्यम्, तेन कार्यम्, तेन सुकरम् इत्यर्थेषु तृतीयान्ताट्ठञित्यर्थः । परिजय्य इत्यस्य विवरणम् । जेतुं शक्य इति । **तदस्यब्रह्मचर्यम्** । ननु द्वितीयान्तादिति कथम् । सूत्रे ब्रह्मचर्यं विशेषणस्य तच्छब्दस्य प्रथमान्तत्वादित्यत आह—**अत्यन्तेति** । तथा च कालविशेषाभिव्याप्तं ब्रह्मचर्यमस्येत्यर्थे कालात्प्रत्ययः । इदमर्थं प्रति ब्रह्मचर्यं विशेषणम् । **मासिको ब्रह्मचारीति** । मासाभिव्याप्तब्रह्मचर्यवानित्यर्थः । **आर्धमासिक इति** । 'अर्धात्परिमाणस्य' इत्युभयपदवृद्धिः । अत्र इदंशब्दार्थस्य ब्रह्मचारिणः प्राधान्यम् । मासाभिव्याप्तं ब्रह्मचर्यं तु तद्विशेषणमिति स्थितः । **यद्वेति** । सूत्रे तदिति प्रथमान्तम् ब्रह्मचर्यमिति षष्ठ्यर्थे प्रथमा । तथा च प्रथमान्तात्कालवाचिनः अस्य ब्रह्मचर्यस्येत्यर्थे ठञित्यर्थः फलति ! तदाह—**प्रथमान्तादिति** । कालवाचिन इति । शेषः । **अस्येत्यर्थ इति** । अस्य ब्रह्मचर्यस्येत्यर्थ इत्यर्थः ! मासोऽस्येत्यनन्तरं

---

**द्विवार्षिको मनुष्य इति** । तत्र वदन्ति—मनुष्ये 'चित्तवति—' इति नित्यलुक्प्रसङ्गाद् 'मनुष्यो मनुष्यसदृशः प्रतिमादिः' इति व्याख्याय स्थितस्य गतिः समर्थनीयेति । **दारक इति** । बालकः । 'परिजय्यः' इत्यस्य विवरणं 'जेतुं शक्यः' इति ।

दिभ्य षष्ठ्यतेभ्य उपसंख्यानम्' (वा ३०३४) महानाम्न्यो नाम 'विदा मघवन्—' इत्याद्या ऋच । तासां ब्रह्मचर्यमस्य माहानाम्निक । हरदत्तस्तु 'भस्याढ—' इति पुंवद्भावात् माहानामिक इत्याह । 'चतुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे (वा ३०६९)। चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञकर्माणि। 'अण् सज्ञायाम्' (वा ३०७०)। चतुर्षु मासेषु भवति चातुर्मासी आषाढी पौर्णमासी । अण्णन्तत्वान्ङीप् । १७५९ तस्य च दक्षिणा यज्ञाख्येभ्य । (५—१—९५) द्वादशाहस्य दक्षिणा द्वादशाहिकी । आख्याग्रहणादकालादपि।

---

ब्रह्मचर्यस्येति शेष ।अस्मिन्पक्षे ब्रह्मचर्यमेव प्रत्ययार्थत्वात्प्रधानम्। इदमर्थस्तु तद्विशेषणमिति बोध्यम्। उपसंख्यानमिति। अस्य ब्रह्मचर्यमित्यर्थे ठञ इति शेष । माहानाम्निक इति। महानाम्नीशब्दस्य ऋग्विशेषेषु रूढस्य नित्यस्त्रीलिङ्गत्वाद् भाषितपुंस्कत्वाभावाद् 'भस्याढ—' इति पुंवत्त्वं नेति भाव । हरदत्तस्त्विति। महानाम्निकमित्येव भाष्ये उदाहृतत्वादिदमुपेक्ष्यमिति भाव । चतुर्मासाण्ण्यो यज्ञे तत्र भव इति। वार्तिकमिदम्। तत्र भवो यज्ञ इत्यर्थे चतुर्मासशब्दात्सप्तम्यन्तात्ण्यो वाच्य इत्यर्थ । चतुर्ष्विति। चतुर्षु मासेषु अतीतेष्वित्यर्थ । अण् सञ्ज्ञायामिति। वार्तिकमिदम्। चतुर्मासशब्दाद् भवार्थे अण् वाच्य सञ्ज्ञायामित्यर्थ । चतुर्ष्विति । फाल्गुनीं पौर्णमासीमारभ्य चतुर्षु मासेष्वतीतेष्वित्यर्थ । आषाढीति । आषाढ्या पौर्णमास्या चातुर्मासीति सञ्ज्ञेति भाव । नच 'तत्र भव' इत्यणेव सिद्धमिति वाच्यम्, 'द्विगोर्लुगनपत्ये' इति लुङ्निवृत्त्यर्थत्वात् । तस्य च दक्षिणा। तस्य दक्षिणेत्यर्थे यज्ञकालवृत्तिभ्य ठञ् स्यादित्यर्थ । द्वादशाहस्येति । द्वादशदिनसाध्यसुत्याक क्रतुर्द्वादशाह । तस्येत्यर्थ । कालोपसर्जनक्रतुवाचित्वादयमपि कालवृत्तिरिति भाव । 'कालात्' इत्यधिकारसूत्रे हि यथाकथञ्चित्कालबोधकस्य ग्रहणमिति 'तदस्य परिमाणम्' इति सूत्रे भाष्ये स्पष्टम्। नन्वेवं सति अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकीत्यत्र ठञ् न स्यात्। अग्निष्टोमशब्दस्य कथञ्चिदपि कालवाचित्वाभावादित्यत आह—आख्याग्रहणादकालादपीति। अन्यथा यज्ञेभ्य इत्येव सिद्धे आख्याग्रहणवैयर्थ्यादिति भाव ।

---

'क्षय्यजय्यौ शक्यार्थे' इत्यायादेश । महानाम्न्यो नामेति । तथा चाभाषितपुंस्कत्वात्पुंवद्भावो नेति भाव । हरदत्तस्त्विति । यौगिकाऽयम्, न तु रूढ इति। मन्यते । माहानामिक इति। पुंवद्भावे कृते 'नस्तद्धिते' इति टिलोप इति। चतुर्मासादिति। मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारम्भ । न च विशिष्टस्य कालवाचित्वाभावादिह सगतिर्दुर्लभेति शङ्क्यम्। 'प्राग्वते सख्यापूर्वपदानां तदन्तग्रहणम्' इत्यभ्युपगमादस्त्येव सगतिरिति । सञ्ज्ञायामणिति । 'तत्र भव' इत्यनेनैव सिद्धे पुनरण्विधि 'द्विगोर्लुगनपत्ये' इति लुङ्मा भूदित्येतदर्थमिदमारब्धम्। एवं चास्मिन् वार्तिके 'चतुर्मासात्' इत्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयम्। चातुर्मासीति। कस्य सञ्ज्ञेत्याकाङ्क्षायामाह—आषाढीति।

आग्निष्टोमिकी । वाजपेयिकी। १७६० तत्र च दीयते कार्यं भववत्। ( ५—१—९६ ) प्रावृषि दीयते कार्यं वा प्रावृषेण्यम् । शारदम् ।

इति तद्धितेषु प्राग्वतीये ठञधिकारे कालाद् इत्यधिकारः सम्पूर्णः ।

---

वस्तुतस्तु यज्ञेभ्य इत्येवोक्तौ कालादित्यधिकाराद् द्वादशाहादिशब्देभ्य एव स्यात्, नतु अग्निष्टोमादिशब्देभ्यः । आख्याग्रहणे तु अग्निष्टोमादिभ्यो द्वादशाहादिशब्देभ्यश्च सर्वेभ्यो यज्ञवाचिभ्य इति भाष्ये स्पष्टम् । तत्रच दीयते । तत्र दीयते तत्र कार्यमित्यर्थयोः सप्तम्यन्तात्कालवाचिनो भववत्प्रत्ययाः स्युरित्यर्थः । प्रावृषेण्यमिति । 'प्रावृष एण्यः' इति भावार्थे विहितम् इहापि भवति । शारदमिति । शरदि दीयते कार्यं वेत्यर्थः । सन्धिवेलाद्यण् भवे विहित इहापि भवति । इदं वृत्त्यनुरोधेन । वस्तुतस्तु तत्र कार्यं दीयते इत्यर्थे यज्ञाख्येभ्यो भववत्प्रत्ययाः स्युरित्यर्थः । अग्निष्टोमे दीयते भक्तम् आग्निष्टोमिकम् । कार्यग्रहणादग्निष्टोमे दीयते हिरण्यमित्यत्र न भवति । न ह्यग्निष्टोमे हिरण्यं क्रियत इति भाष्ये स्पष्टम् ।

इति तद्धितेषु प्राग्वतीये ठञधिकारे कालाद् इत्यधिकारः संपूर्णः ।

---

आषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः । तस्य च दक्षिणा । षष्ठ्यन्तेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ् स्यात् । कालाधिकारादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशङ्क्य परिहरति—आख्याग्रहणादिति । तत्र च । कालवाचिनः सप्तम्यन्ताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात् । प्रावृषेण्यमिति । 'प्रवृष एण्यः' इति भावार्थे विहितः स इहाप्यतिदिश्यत इति भावः । शारदमिति । 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण्' ।

इति तत्त्वबोधिन्यां कालिकप्रकरणम् ।

